X

# [ प्रतिपत्तेः ] निर्याणम्

पञ्च पृः २३१-२६६

उद्देशे समतायां च सत्त्वार्थे यत्नवर्जने ।
२३१-४ २३४-६ २३६-९ २३९-२४०
अत्यन्ताय च निर्याणं निर्याणं प्राप्तिलक्षणम् ॥(का० ७२)
२४०-२४२ २४२-२४४
सर्वाकारज्ञतायां च निर्याणं मार्गगोचरम् ।
,, २६३ २६६
निर्याणप्रतिपज्ज्ञेया सेयमष्टावध्यात्मका ॥ (का० ७३)

अभिसमयालङ्कारे प्रज्ञापारमितोपदेशशास्त्रे सर्वाकारज्ञताधिकारः ॥

# पञ्चविंशतिसाहस्रिका प्रज्ञापारमिता

## ॐ नमो भगवत्यै आर्यप्रज्ञापारमितायै ॥*

निर्विकल्पे नमस्तुभ्यं प्रज्ञापारमितेऽमिते ।
या त्वं सर्वानवद्याङ्गि निरवद्यैर्निरीक्ष्यसे ॥
आकाशमिव निर्लेपां निष्प्रपञ्चां निरक्षराम्[1] ।
यस्त्वां पश्यति भावेन स पश्यति तथागतम् ॥
तव चार्यगुणाढ्याया[2] बुद्धस्य च जगद्गुरोः ।
न पश्यन्त्यन्तरं सन्तश्चन्द्रचन्द्रिकयोरिव ॥
कृपात्मकाः प्रपद्य त्वां बुद्धधर्मपुरःसराम्[3] ।
सुखेनायान्ति माहात्म्यमतुलं भक्तिवत्सले ॥
सकृदप्याशये शुद्धे यस्त्वां विधिवदीक्षते ।
तेनापि नियतं सिद्धिः प्राप्यतेऽमोघदर्शने ॥

---

* This form of salutation is given only in $P_1$. All other Mss. A, $C_1$, $C_2$, and $P_2$ begin with ओँ नमो मैत्रेयनाथाय. It should also be noticed that the last four Mss. give the Abhisamayālaṅkārakārikā, attributed to Maitreyanātha, as a prelude to the Pañcaviṃśati, which $P_1$ omits. After the Kārikā, the verses of salutation addressed to Prajñāpāramitā commence in the Mss. other than $P_1$.

1 $P_1$ क्षराः

2 $C_1$ ढ्याया

3 $C_2$ ०सरीम् ; $P_1$ ०सरीः

सर्वेषामपि [1]वीराणां परार्थे नियतात्मनाम् ।
पोषिका[2] जनयित्री[3] च माता त्वमसि[4] वत्सला ॥
यद् बुद्धा लोकगुरवः पुत्रास्तव कृपालवः ।
तेन त्वमसि[5] कल्याणि [6]सर्वसत्त्वपितामही ॥
सर्वपारमिताभिस्त्वं निर्मलाभिरनिन्दिते[7] ।
चन्द्रलेखेव ताराभि[8]रनुयातासि सर्वदा ॥
विनेयं जनमासाद्य तत्र तत्र तथागतैः ।
बहुरूपा त्वमेवैका नानानामभिरीड्यसे[9] ॥
प्रभां प्राप्येव दीप्तांशोरवश्यायोदबिन्दवः ।
त्वां प्राप्य प्रलयं यान्ति दोषा वादाश्च वादिनाम् ॥
त्वमेव त्रासजननी बालानां भीमदर्शना ।
आश्वासजननी[10] चासि विदुषां[11] सौम्यदर्शना ॥
यस्य[12] त्वय्यप्यभिष्वङ्ग[13]स्त्वन्नाथस्य न विद्यते ।
तस्याम्ब कथमन्यत्र रागद्वेषौ भविष्यतः ॥
नागच्छसि कुतश्चित्त्वं न[14] च क्वचन गच्छसि ।
स्थानेष्वपि च सर्वेषु विद्वद्भिर्नोपलभ्यसे ॥
ये त्वामेवं न पश्यन्ति प्रपद्यन्ते[15] च भावतः ।
प्रपद्य च विमुच्यन्ते तदिदं महदद्भुतम्[16] ॥

---

1 $P_1$ विरा०
2 Aṣṭa. (A. S. B.) योऽषिका
3 $P_1$ drops न of जनयित्री
4 A, $P_2$ त्वव०
5 Aṣṭa. त्वमपि
6 $P_1$ सर्वसत्वा०
7 $C_1$ ०नंदिते
8 $C_1$ चन्द्रलेख्यव तारा०
9 $A_2$ ड्यसे
10 $P_1$ नीं
11 $P_1$ ०षाः
12 $C_1$ यस्ये०
13 $P_1$ त्वयीप्यभिष्वङ्ग०; $P_2$ त्वयं०
14 $C_1$ कुतश्चित्वन्न
15 $C_1$ प्रपद्यंति
16 A, $C_1$, $C_2$ & $P_2$ महद्भुतम्

त्वामेव बध्यते पश्यन्नपश्यन्नपि बध्यते[1] ।
त्वामेव मुच्यते पश्यन्नपश्यन्नपि मुच्यते ॥
अहो विस्मयनीयासि गम्भीरासि यशस्विनी ।
सुदुर्बोधासि मायेव[2] दृश्यसे न च दृश्यसे ॥
बुद्धैः प्रत्येकबुद्धैश्च श्रावकैश्च निषेविता[3] ।
मार्गस्त्वमेको[4] मोक्षस्य नास्त्यन्य इति निश्चयः ॥
व्यवहारं पुरस्कृत्य प्रज्ञप्त्यर्थं शरीरिणाम् ।
कृपया लोकनाथैस्त्वमुच्यसे[5] च न चोच्यसे ॥
शक्तः कस्त्वामिह स्तोतुं निर्निमित्तां निरञ्जनाम्[6] ।
सर्ववाग्विषयातीता[7] या त्वं क्वचिदनिःश्रिता[8] ॥
सत्येवमपि[9] संवृत्या वाक्पथैर्वयमीदृशैः ।
त्वामस्तुत्यामपि स्तुत्वा[10] तुष्टूषन्तः सुनिर्वृताः ॥
प्रज्ञापारमितां[11] स्तुत्वा यन्मयोपचितं शुभम् ।
तेनास्त्वाशु जगत्[12] कृत्स्नं प्रज्ञापारपरायणम् ॥*

---

1 $C_1$ बंध्यते
2 $C_1$ ०मादेवं ; $C_2$ ०मायेवं ; A ०मामेव
3 $P_1$ निवेविता
4 Aṣṭa. ०मेका
5 A मुच्यते
6 $P_1$ ०ना:
7 $P_1$ & Aṣṭa. ०तीता
8 Aṣṭa. निश्रिता
9 Aṣṭa. सते०
10 $P_1$ & Aṣṭa. सतीं
11 $P_2$ ०मिता:
12 $P_1$ जय

* These introductory verses addressed to the Prajñāpāramitā appear in the Aṣṭasāhasrikā (vide A. S. B. ed. pp. 1-3), but they are not to be found in the Śatasāhasrikā or the Chinese translation of the Daśasāhasrikā. $P_1$ adds here the first four lines of the Abhisamayālaṅkārakārikā and eight new lines not to be found in any of the other Mss.

एवं मया श्रुतम्। एकस्मिन् समये भगवान् राजगृहे विहरति स्म गृध्रकूटे पर्वते महता भिक्षुसंघेन सार्धं पञ्चमात्रैर्भिक्षुसहस्रैः सर्वैरर्हद्भिः[1] क्षीणास्रवै[2]र्निष्क्लेशै[3]र्वशीभूतैः सुविमुक्तचित्तैः[4] सुविमुक्तप्रज्ञैराजानेयै[5]-र्महानागैः कृतकृत्यैः कृतकरणीयैरपहृतभारैरनुप्राप्तस्वकार्थैः[6] परिक्षीण-भवसंयोजनैः सम्यगाज्ञासुविमुक्तचित्तैः सर्वचेतोवशिपरमपारमिताप्राप्तैः, पञ्चमात्रैर्भिक्षुणी[7]शतैरुपासकैरुपासिकाभिश्च सार्धं सर्वैर्दृष्टधर्मैरपरि-माणैश्च बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्धं सर्वैर्धारणीप्रतिलब्धैः शून्यताविहारिभिरनिमित्तगोचरैः प्रणिधानाकल्पितैः क्षान्तिसमताप्रति-लब्धैरसङ्गधारणीप्रतिलब्धैरच्युताभिज्ञैरादेयवचनैरकुहकैरलपकै[8]रपगत-मान[9]लाभचित्तैर्निरामिषधर्मदेशकैर्गम्भीरधर्मक्षान्तिपारंगतै[10]र्वैशारद्य-प्राप्तैर्मारकर्मसमतिक्रान्तैः कर्मावरणप्रतिप्रस्रब्धैर्धर्म[11]प्रविचयविभक्ति-निर्देशकुशलैरसंख्येयकल्पप्रणिधानसुसमारब्धैः [12]स्मितमुखैः पूर्वालापिभि-र्विगतभृकुटीमुखैर्गाथाभिगीतालपनकुशलैरपगतलीनचित्तैरनाच्छेद्यप्रति-भानैरनन्तपर्षदभिभवनवैशारद्यसमन्वागतैरनन्तकल्पकोटीनिःसरणकुशलै-र्मायामरीचिदक[13]चन्द्रस्वप्नप्रतिश्रुत्काप्रतिभासप्रतिबिम्बनिर्माणोपमधर्मा

---

1 A, $C_1$ & $C_2$ चार्हद्भिः     2 A, $C_1$ & $C_2$ ०श्रवै० ; cf. Ś. 3.

3 Mss. निःक्लेशैः     4 Ś. 3 reads वित्तैः.

5 $C_1$ ०जानै०     6 $P_1$ लोकार्थैः

7 Ś. 4 reads भिक्षु.     8 A & $C_1$ ०लयकै० ; cf. Ś. 6.

9 Ś. 5 has ०श्लाग०. The Chinese reading is ming men = श्लोक = praise.

10 Ś. 5 परमगतिं गतै०

11 Ś. 5 reads कर्म for धर्म.     12 Ś. 5 स्मृति०

13 It should be मरीचिकोदक or as Ś. 5 puts it मरीच्युदक, but as all Mss. have the form मरीचिदक, it has been retained here.

धिमुक्तैः सत्त्वगतिचरितसूक्ष्म[1]नानाधिमुक्त्यवतारकुशलैरप्रतिहतचित्तैरधिमात्रक्षान्तिसमन्वागतैर्यथाभूतावतारणकुशलैः सर्वबुद्धक्षेत्रानन्तव्यूहप्रणिधानप्रस्थानपरिगृहीतै[2]रसंख्येय[3]लोकधातुबुद्धानुस्मृतिसमाहित[4]सततसमिताभिमुखीभूतैरपरिमितबुद्धाध्येषणाकुशलैर्नानादृष्ट्यनुशयपर्यवस्थानक्लेशप्रशमनकुशलैः समाधिविक्रीडितशतसहस्रनिर्हारकुशलैः—तद्यथा भद्रपालेन च बोधिसत्त्वेन महासत्त्वेन रत्नाकरेण च सार्थवाहेन च नरदत्तेन च वरुणदत्तेन च शुभगुप्तेन च इन्द्रदत्तेन च उत्तरमतिना[5] च विशेषमतिना च वर्धमानमतिना च अमोघदर्शिना च सुसम्प्रस्थितेन च सुविक्रान्तविक्रमिणा च नित्योद्युक्तेन[6] च अनिक्षिप्तधुरेण च सूर्यगर्भेण[7] च अनुपमचिन्तिना[8] च अवलोकितेश्वरेण च महास्थामप्राप्तेन च मञ्जुश्रिया[9] च वज्रमतिना च रत्नमुद्राहस्तेन च नित्योत्क्षिप्तहस्तेन च मैत्रेयेण च बोधिसत्त्वेन महासत्त्वेन—एवम्प्रमुखैरनेकैर्बोधिसत्त्वकोटीनियुतशतसहस्रैः सार्धम्।

अथ खलु भगवान् स्वयमेव सिंहासनं प्रज्ञप्य न्यषीदत् पर्यङ्कं बद्ध्वा ऋजुकायं प्रणिधाय अभिमुखीं स्मृतिमुपस्थाप्य समाधिराजं नाम समाधिं[10] समापद्यते स्म यत्र सर्वसमाधयोऽन्तर्गमान्[11] संग्रहं समवसरणं[12] गच्छन्ति।

अथ खलु भगवान् स्मृतिमान्[13]सम्प्रजानंस्तस्मात् समाधेर्व्युत्थाय[14]

---

1 A & $C_1$ शुक्ष्म

2 $C_1$ परिगृहैते

3 A °संख्यय°

4 Ś. 6 has समाधि for समाहित.

5 $C_2$ नित्यीयुक्तेन ; $P_1$ adds here another name नित्यप्रयुक्तेन.

6 $P_1$ °गतिना

7 A °गर्भेण

8 $C_2$ चिंतिना

9 $C_1$ मञ्जश्रिया

10 A drops समाधिराजं नाम and puts समाधिन् for समाधिं.

11 Ś. 7 has अन्तर्गता

12 $C_1$ °सरणं ; cf. Ś. 7.

13 $C_1$ सम्प्रजानां

14 $C_2$ °व्युंत्थाय

दिव्येन चक्षुषा सर्वलोकधातुं[1] व्यवलोक्य सर्वकायात् स्मितमकरोत्। तस्याधस्तात्[2] पादतलयोः सहस्राराभ्यां चक्राभ्यां षष्टिषष्टी[3]रश्मिकोटीनियुतशतसहस्राणि[4] निश्चेरुः दशभ्यः[5] पादाङ्गुलिभ्यः षष्टिषष्टीरश्मिकोटीनियुतशतसहस्राणि निश्चेरुः। एवं षष्टिषष्टिर्गुल्फाभ्यां षष्टिषष्टिर्जङ्घाभ्यां षष्टिर्षष्टिर्जानुमण्डलाभ्यामेवं द्वाभ्यामूरुभ्यां कटिनाभिमण्डलाभ्यां द्वाभ्यां पार्श्वाभ्यां हृदयश्रीवत्सात् महापुरुषलक्षणात्। एवं षष्टिषष्टिर्दशभ्यो हस्ताङ्गुलिभ्यः] षष्टिषष्टिर्द्वाभ्यां बाहुभ्यां षष्टिषष्टिर्द्वाभ्यामंसाभ्यामेवं ग्रीवायाश्चत्वारिंशद्भ्यो दन्तेभ्यो द्वाभ्यां घ्राणाभ्यां द्वाभ्यां[6] श्रोत्राभ्यां द्वाभ्यां[6] चक्षुर्भ्यां मध्यादूर्णाया उपरिष्टादुष्णीषात् षष्टिषष्टीरश्मिकोटीनियुतशतसहस्राणि निश्चेरुः ये[7]रश्मिभिरयं त्रिसाहस्रमहासाहस्रो लोकधातुरवभासितोऽभूत् परिस्फुटः। पूर्वस्यां दिशि गङ्गानदीवालुकोपमा लोकधातवस्तेन महता रश्म्यवभासेन[8] स्फुटा अवभासिताश्चाभूवन्। एवं दक्षिणस्यां दिशि पश्चिमायामुत्तरस्यामुत्तरपूर्वस्यां पूर्वदक्षिणस्यां दक्षिणपश्चिमायां पश्चिमोत्तरस्यामधस्तादुपरिष्टा[9]द्दिशि गङ्गानदीवालुकोपमा लोकधातवस्तेन महता रश्म्यवभासेन स्फुटा अवभासिताश्चाभूवन्[10]। ये च सत्त्वास्तेन महता रश्म्यवभासेन स्फुटा अवभासिता[11]स्ते सर्वे नियता अभूवन् अनुत्तरायां सम्यक्सम्बोधौ।

---

1 $C_2$ ॰धातुन्    2 $C_1$ चधस्तापाद॰

3 A, $C_1$ & $C_2$ षष्टीषष्टी ; $P_1$ & $P_2$ षष्टिषष्टी

4 A drops शत.

5 A drops it.    6 A drops it.

7 $C_1$ & A ये    8 $C_1$ रश्मा॰ ; A & $C_1$ ॰भासन॰

9 $C_2$ ॰परिस्ता॰

10 The sentence beginning with एवं is found only in $C_1$ & $C_2$.

11 $P_1$ drops अवभासिता.

अथ खलु भगवान् पुनरेव सर्वरोमकूपेभ्यः स्मितमकरोत्। एकैकतश्च रोमकूपात् षष्टिषष्टीरश्मिकोटीनियुतशतसहस्राणि निश्चेरुः। यैरयं त्रिसाहस्रमहासाहस्रो लोकधातुरवभासितः स्फुटोऽभूत्। तेश्च पूर्वस्यां दिशि गङ्गानदीवालुकोपमाः सर्वलोकधातवोऽवभासेनावभासिताः स्फुटाश्चाभूवन्। एवं दक्षिणस्यां etc. as above p. 6, l. 12 up to सम्यक्सम्बोधौ p. 6, l. 17.

अथ खलु भगवान् पुनरेव या सा बुद्धानां भगवतां प्रकृतिप्रभा तया[1] प्रभया त्रिसाहस्रमहासाहस्रं लोकधातुमवभासयामास। यावत् सर्वासु दशसु दिक्षु एकैकस्यां[2] दिशि गङ्गानदीवालुकोपमा लोकधातवस्तया प्रभया अवभासिता अभूवन्[3]। ये च सत्त्वास्तया प्रभया[4] स्पृष्टास्ते सर्वे[5] नियता अभूवन् अनुत्तरायां सम्यक्सम्बोधौ॥

अथ खलु भगवांस्तस्यां वेलायां जिह्वेन्द्रियं निर्णामयामास। येनेमं त्रिसाहस्रमहासाहस्रं लोकधातुं जिह्वेन्द्रियेणाच्छादयामास। त्रिसाहस्रमहासाहस्रं लोकधातुं जिह्वेन्द्रियेण स्फुरित्वा तस्माज्जिह्वेन्द्रियात् स्मितमकरोत्। यतोऽनेकानि रश्मिकोटीनियुतशतसहस्राणि निश्चेरुः। रश्मिमुखे चैकैकस्मिन्नुत्तमरत्नमयानि[6] सुवर्णनिर्भासानि सहस्रपत्राणि पद्मान्युत्पन्नान्यभूवन्[7]। तेषु च पद्मेषु बुद्धविग्रहा निषण्णाः[8] संस्थिताश्चाभूवन् धर्मं देशयन्तो यदुत इमामेव षट्पारमिताप्रतिसंयुक्तां धर्मदेशनाम्। ते पूर्वस्यां दिशि गङ्गानदीवालुकोपमव्यतिवृत्तासंख्येषु[9] लोकधातुषु गत्वा सत्त्वानां धर्मं देशयन्ति स्म। एवं दक्षिणस्यां पश्चिमाया-

---

1 Ś. 10 एतया
2 $C_1$ ०कस्या
3 $C_1$ puts here ये च सत्त्वास्तया प्रभया अवभासिता अभूवन्.
4 $C_1$ प्रभाया
5 $C_1$ सर्वा
6 All Mss. omit रत्न, but see Ś. 11.
7 $C_1$ पद्मात्मत्मनान्यभूवन्
8 $C_1$ निषणाः
9 $P_1$ ०वत्ता०

मुत्तरस्यामधस्तादूर्ध्वं दिग्विदिक्षु। एकैकस्यां च दिशि दशसु दिक्षु गङ्गानदीवालुकोपमेषु अपरिमाणेषु लोकधातुषु गत्वा सत्त्वानां धर्मं देशयन्ति स्म यदुत इमामेव च षट्पारमिताप्रतिसंयुक्तां धर्मदेशनाम्। ये च सत्त्वास्तां धर्मदेशनां शृण्वन्ति ते नियता भवन्त्यनुत्तरायां सम्यक्सम्बोधौ।

अथ खलु भगवांस्तस्मिन्नेव सिंहासने निषण्णः[1] सिंहविक्रीडितं नाम समाधिं समापेदे[2]। तथारूपं चर्द्ध्यभि[3]संस्कारमभिसंस्करोति स्म यथारूपेणर्द्ध्यभिसंस्कारेणाभिसंस्कृतेनायं त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारमकम्पत प्राकम्पत[4] संप्राकम्पत। अचलत् प्राचलत् संप्राचलत्[5]। अवेधत् प्रावेधत् संप्रावेधत्[6]। अरणत् प्रारणत् संप्रारणत्। अक्षुभ्यत् प्राक्षुभ्यत् संप्राक्षुभ्यत्। अगर्जत् प्रागर्जत् संप्रागर्जत्[7]। अन्ते उन्नमति मध्ये अवनमति, मध्ये उन्नमति अन्ते अवनमति। मृदुकः स्निग्धः सर्वसत्त्वसुखजननोऽभूत्।

अथ खलु तेन क्षणलवमुहूर्तेन येऽस्मिंस्त्रि[8]साहस्रमहासाहस्रे लोकधातौ निरया[9] वा तिर्यग्योनयो वा यमलोका वा ते सर्वे समुच्छिन्नाः शून्या अभूवन्। सर्वाक्षणाश्चास्तमिता अभूवन्। ये च सत्त्वास्तेभ्यो निरय[10]तिर्यग्योनियमलोकगतिभ्यश्च्युतास्ते सर्वे तेनैव प्रीतिप्रामोद्येन मनुष्याणां सभागतायामुपपन्नाश्चाभूवन्। एवं चातुर्महाराजिकानां देवानां त्रयस्त्रिंशानां यामानां तुषितानां निर्माणरतीनां परनिर्मितवशवर्तिनां[11] देवानां सभागतायामुपपन्नाश्चाभूवन्।

---

1 A & $C_2$ निषंण्ण   2 $C_2$ समापदे   3 $C_1$ रूपं चर्द्ध्यभि

4 $A_1$ $C_1$ & $C_2$ drop it.   5 A & $C_1$ drop it.

6 $C_1$ & $C_2$ drop it.   7 $C_1$ drops it.

8 $C_2$ चस्मिंस्त्रि   9 Ś. 13 नरक

10 Mss. have here नरक but in their repetitions as well as elsewhere they have put निरय.

11 $P_1$, $C_2$ & A have वस, but श & स have been indiscriminately used in the Mss. ; so in future they will not be noticed.

अथ खलु ते मनुष्यास्ते च देवा भगवत एवानुभावेन पूर्वजन्मान्यनुस्मरन्ति स्म। अनुस्मृत्य[1] च तेनैव प्रीतिप्रामोद्येन येन भगवांस्तेनोपसंक्रान्ताः[2]। उपसंक्रम्य भगवतः पादौ शिरोभिरभिवन्द्य भगवन्तं प्राञ्जलयो भूत्वा नमस्यन्ति स्म[3]। एवं पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु दक्षिणस्यां पश्चिमायामुत्तरस्यां विदिक्षूर्ध्वमधः समन्ताद्दशसु दिक्ष्वेकस्मिन् दिग्भागे गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वे निरयाः सर्वास्तिर्यग्योनयः सर्वे यमलोकाः समुच्छिन्नाः शून्या अभूवन्। सर्वाश्चाक्षणास्तमिता अभूवन्। ये च सत्त्वास्ताभ्यो निरयतिर्यग्योनियमलोकगतिभ्यश्च्युतास्ते सर्वे देवमनुष्येषूपपद्यन्ते स्म। ते च देवमनुष्येषूपपन्ना भगवत एवानुभावेन पूर्वनिवासमनुस्मरन्ति स्म। अनुस्मृत्य च तेनैव प्रीतिप्रामोद्येन स्वकस्वकेषु बुद्धक्षेत्रेषु ये तत्र बुद्धा भगवन्त उत्पन्नास्तेषामन्तिकमुपसंक्रान्ताः। उपसंक्रम्य तेषां बुद्धानां भगवतां पादवन्दनां कृत्वा सर्वे प्राञ्जलयो भूत्वा भगवतो नमस्यन्ति स्म।

अथ खलु येऽस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ जात्यन्धाः[4] सत्त्वास्ते चक्षुषा रूपाणि पश्यन्ति स्म। वधिराः सत्वाः श्रोत्रेण शब्दान् शृण्वन्ति[5] स्म। उन्मत्ताः स्मृतिं प्रतिलभन्ते स्म[6]। विक्षिप्तचित्ता एकाग्रचित्ता भवन्ति स्म। जिघत्सिताः पूर्णपात्रा[7] भवन्ति स्म। तृषिता विगतपिपासा भवन्ति स्म। रोगस्पृष्टा विगतरोगा भवन्ति स्म। हीनेन्द्रियाः परिपूर्णेन्द्रिया भवन्ति स्म। अविरहिताकुशलकायवाङ्मनस्कर्मान्ताजीवा विरहिताकुशलकायवाङ्मनस्कर्मान्ताजीवाश्च

---

1 $C_1$ पूर्वजन्मान्यनुस्मृत्य  2 $C_1$ संक्रान्तः  3 $C_1$ drops स्म.

4 $C_2$ यात्यन्धाः ; the Mss. indiscriminately use य for ज and vice versa.

5 $C_1$ & $C_2$ शब्दा शृणोन्ति  6 $C_1$ sometimes drops स्म.

7 All Mss. write गात्रा ; the Suvarṇaprabhā (B. T. S.), p. 4 has गीता while Ś. has भोजनानि.

भवन्ति स्म । सर्वसत्त्वाश्च मातापितृसमचित्ता भवन्ति स्म, भ्रातृभगिनीसमचित्ता मित्रामात्यज्ञातिसालोहितसमचित्ता दशकुशलकर्मपथसेविनश्च भवन्ति स्म । ब्रह्मचारिणः शुचयो निरामयगन्धाः सर्वसत्त्वाश्च सर्वसुखसमर्पिता ईदृशं सुखं प्रतिलभन्ते स्म तद्यथापि नाम तृतीयध्यानसमापन्नस्य भिक्षोः तस्मिन्नेव च समये एवंरूपया प्रज्ञया ते समन्वागता भवन्ति स्म । यदन्यबुद्धक्षेत्रस्था बुद्धा भगवन्त एवमुदानयन्ति स्म[1]—साधु दमः साधु संयमः साधु चीर्णो ब्रह्मचर्य्यावासः साधु प्राणिभूतेष्वविहिंसेति ।

अथ खलु भगवांस्तस्मिन्नेव[2] सिंहासने निषण्णः[3] इमं त्रिसाहस्रमहासाहस्रं लोकधातुमभिभूय तथागतस्तिष्ठति[4] भासते तपति विरोचते स्म आभया वर्णेन श्रिया तेजसा च । पूर्वस्यां दिशि दक्षिणस्यां पश्चिमायामुत्तरस्यामधस्तादूर्ध्वं दिग्विदिक्षु गङ्गानदीवालुकोपमान् लोकधातूनभिभूय तथागतस्तिष्ठति भासते । तद्यथापि नाम सुमेरुः पर्वतराजः सर्वपर्वतानभिभूय तिष्ठति भासते as above ll. 10, 11 up to तेजसा च । एवमेव भगवान् सर्वलोकधातूनभिभूय तिष्ठति भासते as above ll. 10, 11 up to तेजसा च । एवमेव भगवान् सर्वलोकधातूनभिभूय तिष्ठति भासते as above ll. 10, 11 up to तेजसा[5] च ।

अथ खलु भगवान् पुनरेव यादृक् त्रिसाहस्रमहासाहस्रलोकधातौ सत्त्वानामात्मभावस्तत्समानमात्मभावं प्राकृतमुपदर्शयामास[6] । अथ खलु येऽस्मिंस्त्रिसाहस्रमहासाहस्रलोकधातौ शुद्धावासकायिका देवाः शुभ-

---

1 All Mss. have स्मः. 2 $C_1$ °स्मिन्नेव

3 A & $C_2$ always have निषर्ण्णः for निषण्णः ; so this will not be noticed in future.

4 A & $C_1$ drop this here but retain it in the repetitions.

5 $C_1$ drops out a few lines of the repetitions.

6 The Samādhirāja-sūtra ( B. T. S. ), p. 10 mentions

कृत्स्ना आभास्वरा ब्रह्मकायिका देवाः परनिर्मितवशवर्तिनश्च निर्माणरतयश्च तुषिताश्च यामाश्च त्रयस्त्रिंशाश्च चातुर्महाराजकायिकाश्च देवास्ते तं[1] तथागतस्यासेचनकमात्मभावं दृष्ट्वा दिव्याः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीर्गृहीत्वा दिव्यानि उत्पलकुमुदसौगन्धिकपुण्डरीकपद्मानि गृहीत्वा दिव्यानि च केशरतमालपत्राणि गृहीत्वा येन तथागतस्यासेचनक आत्मभावस्तेनोपसंक्रान्ताः। ये चेह त्रिसाहस्रमहासाहस्रलोकधातौ मनुष्यास्तेऽपि तं तथागतस्यासेचनकमात्मभावं दृष्ट्वा स्थलजलजानि[2] पुष्पाणि गृहीत्वा येन तथागतस्यासेचनक आत्मभावस्तेनोपसंक्रान्ताः[3]।

अथ खलु ते देवास्ते च मानुषास्ताभिर्दिव्याभिः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तोभिस्तैश्च स्थलजलजैः पुष्पैस्तथागतकायमवकिरन्ति स्म अभ्यवकिरन्ति स्म।

अथ खलु यैस्तैः[4] पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीवर्षैः स्थलजलजैश्च पुष्पैर्भगवानवकीर्णस्तानि च सर्वाणि उपर्यन्तरीक्षे भगवतोऽधिष्ठानेन त्रिसाहस्रमहासाहस्रलोकधातुप्रमाणमेकं कूटागारं संस्थितमभूत्। ततश्च कूटागारात् तानि दिव्यानि पुष्पपट्टदामानि लम्बन्ते प्रलम्बन्ते स्म। तैश्च पुष्पदामभिः पट्टदामभिश्चायं[5] त्रिसाहस्रमहासाहस्रो लोकधातुरतीवाशोभत[6]। तेन च सुवर्णवर्णेन भगवतः प्रभावभासेन दशसु दिक्षु प्रसृतेन एकैकस्यां दिशि गङ्गा-

चसेचनी रूप। Cf. Ś. 21 अथ भगवान् पुनरपि यादृशो भगवतः प्रकृत्यात्मभावः तादृशमिमं त्रिसाहस्रमहासाहस्रे लोकधातावुपदर्शयति स्म.

1 All Mss.. have ते.

2 $C_2$ स्थलजानि

3 $C_1$ drops the lines from ये चेह……to संक्रान्ताः.

4 All Mss. have येस्ते:.

5 $C_1$ drops these two lines from त्रिसाहस्र…to चायं.

6 Ś. 22 अभिशोभित

नदीवालुकोपमा लोकधातवः स्फुटावभासिताश्चाभूवन्। अस्मिंश्च त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वेषु चातुर्द्वीपकेषु लोकधातुषु तेषां देवमनुष्याणाञ्च एकैकस्यैतदभूत्। मम पुरतस्तथागतो निषण्णो धर्मं देशयतीति।

अथ खलु भगवांस्तस्मिन्नेव सिंहासने निषण्णः पुनरेव स्मितमकरोत्। येन स्मितावभासेनायं त्रिसाहस्रमहासाहस्रलोकधातुः स्फुटोऽभूत्। यावद्दशसु दिक्षु गङ्गानदीवालुकोपमा लोकधातवः स्फुटा अभूवन्। ये[1] च त्रिसाहस्रमहासाहस्रलोकधातौ सत्त्वास्ते सर्वे पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धान् भगवतः पश्यन्ति स्म सश्रावकसंघान् तस्याञ्च पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्ते सर्वे इमां महालोकधातुं पश्यन्ति स्म शाक्यमुनिं च तथागतं सार्धं भिक्षुसंघेन। एवं दक्षिणस्यां दिशि पश्चिमायामुत्तरपूर्वस्यां पूर्वदक्षिणस्यां दक्षिणपश्चिमायां पश्चिमोत्तरस्यामध ऊर्ध्वं दिग्भागं[2] गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धान् भगवतः पश्यन्ति स्म सश्रावकसंघान्। तेषु च गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्ते सर्वे इमां महालोकधातुं पश्यन्ति स्म शाक्यमुनिञ्च तथागतं सार्धं भिक्षुसंघेन।

अथ खलु पूर्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य तेभ्यो यः सर्वावसानिको लोकधातू रत्नावती नाम तत्र रत्नाकरो नाम तथागतोऽर्हन् सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति। स इमामेव प्रज्ञापारमितां बोधिसत्त्वानां धर्मं देशयति। अथ तत्र लोकधातौ समन्तरश्मिर्नाम बोधिसत्त्वो महासत्त्वस्तं महान्तमवभासं दृष्ट्वा तञ्च महान्तं पृथिवीचालं तञ्च भगवत[3] आसेचनकमात्मभावं दृष्ट्वा येन भगवान् रत्नाकरस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनोपसंक्रामदुपसंक्रम्य तस्य भगवतः पादावभिवन्द्य तं तथागतं रत्नाकरमेतदवोचत्। को भगवन् हेतुः कः

---

1 $C_1$ ये वेह; A ये चेह

2 $C_2$ दिग्भागे

3 A भगवताऽसेचनक

प्रत्ययोऽस्य महतोऽवभासस्य[1] लोके प्रादुर्भावाय अस्य च महतः पृथिवी-चालस्य अस्य च तथागतस्यासेचनकात्मभावस्य सन्दर्शनाय। एवमुक्ते रत्नाकरस्तथागतः समन्तरश्मिं बोधिसत्त्वमेतदवोचत्। अस्ति कुलपुत्र इतः[2] पश्चिमायां दिशि गङ्गानदीवालुकोपमान् लोकधातूनतिक्रम्य सहा नाम लोकधातुस्तत्र शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति ध्रियते यापयति। स बोधिसत्त्वानां महासत्त्वानां[3] प्रज्ञापारमितां सम्प्र-काशयति तस्यायमीदृशोऽनुभावः।

अथ खलु समन्तरश्मिर्बोधिसत्त्वो रत्नाकरं तथागतमेतदवोचत्। गमिष्याम्यहं भगवंस्तां सहां लोकधातुं तञ्च शाक्यमुनिं तथागतं दर्श-नाय वन्दनाय पर्युपासनाय तांश्च बोधिसत्त्वान् महासत्त्वान् भूयस्त्वेन[4] कुमारभूतान् धारणीप्रतिलब्धान् समाधिनिर्हारकुशलान् सर्वसमाधि-वशिपारमितां गतान्। भगवानाह गच्छ त्वं कुलपुत्र यस्येदानीं कालं मन्यसे।

अथ खलु रत्नाकरस्तथागतो नानारत्नमयानि सुवर्णावभासानि सहस्रपत्राणि पद्मानि समन्तरश्मये बोधिसत्त्वाय प्रादात्। एतैस्त्वं कुलपुत्र पद्मैस्तं शाक्यमुनिं तथागतमभ्यवकिरेः। एवञ्च वदेः[5] रत्नाकरो भगवान् भगवन्तमल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां यात्रां बलं सुखस्पर्शविहारतां परिपृच्छति। इमानि च तेन भगवता रत्ना-करेण तथागतेनार्हता सम्यक्संबुद्धेन पद्मानि प्रहितानि[6] भगवत इति। सम्प्रजानकारी च त्वं कुलपुत्र बुद्धक्षेत्रे भूयाः। तत्कस्य हेतोः-दुरासदा हि ते बोधिसत्त्वा ये[7] तत्र सहायां लोकधातौ उपपन्नाः।

---

1 A & $C_1$ महतावभासस्य

2 $C_1$ पुत्रेतः; A & $C_2$ पुत्रेतः 3 A बोधिसत्त्वान्महासत्वान्

4 न has been dropped in some of the repetitions that follow this.

5 $C_1$ वद 6 $C_2$ & Ś. 31 प्रविहितानि 7 A drops ये.

अथ खलु समन्तरश्मिर्बोधिसत्त्वो रत्नाकरस्य तथागतस्य सकाशात् तानि नानारत्नमयानि पद्मानि गृहीत्वा सुवर्णनिर्भासानि सहस्रपत्राणि अनेकैर्बोधिसत्त्वकोटिनियुतशतसहस्रैर्गृहस्थैः प्रव्रजितैश्च दारकैर्दारिकाभिश्च सार्धं परिवृतः पुरस्कृतः पूर्वस्यां दिशि तेषु गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धानां भगवतः सत्कुर्वन् गुरुकुर्वन् मानयन् पूजयन्[1] पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीभिर्येनेयं सहा लोकधातुस्तेन संप्राप्तः। येन च शाक्यमुनिस्तथागतस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य एकान्तेऽतिष्ठत्। एकान्ते स्थितश्च समन्तरश्मिर्बोधिसत्वो भगवन्तं शाक्यमुनिमेतदवोचत्। रत्नाकरो भगवान् भगवन्तमल्पाबाधतां परिपृच्छत्यल्पातङ्कतां लघूत्थानतां यात्रां बलं सुखस्पर्शविहारतां च परिपृच्छति। इमानि च तेन भगवता रत्नाकरेण तथागतेन नानारत्नमयानि सुवर्णनिर्भासानि सहस्रपत्राणि पद्मानि प्रेषितानि भगवतः।

अथ खलु भगवान् शाक्यमुनिस्तथागतस्तानि पद्मानि गृहीत्वा येन ते पूर्वस्यां दिशि गङ्गानदीवालुकोपमा लोकधातवस्तेन प्राक्षिपत्। तैश्च पद्मैस्ते लोकधातवः स्फुटा अभूवन्। तेषु च पद्मेषु बुद्धविग्रहा निषण्णकाः[2] तेषु च बुद्धचैत्येषु धर्मं देशयन्ति यदुतेमामेव प्रज्ञापारमिताप्रतिसंयुक्तां धर्मदेशनाम्[3]। यैश्च सत्त्वैः स धर्मः श्रुतस्ते नियता अभूवन् अनुत्तरायां सम्यक्सम्बोधौ।

अथ खलु ते बोधिसत्त्वास्ते च गृहस्थास्ते च प्रव्रजितास्ते च दारकास्ताश्च दारिकास्ततो रत्नावत्या लोकधातोः समन्तरश्मिना बोधिसत्त्वेन महासत्त्वेन सार्धमागताः स्वकस्वकैः कुशलमूलैर्भगवन्तं शाक्यमुनिं सत्कृत्य गुरुकृत्य सम्मान्य संपूज्यैकान्ते न्यषीदन्।

---

1 $C_2$ मानये पूजये

2 A & $C_2$ निषण्णकाः; Ś. 31 निषण्णा

3 All Mss. have देशनान्.

अथ खलु दक्षिणस्यां दिशि...[1] सर्वावसानिको लोकधातुः सर्वशोकापगतो नाम तत्राशोकश्रीर्नाम तथागतः...देशयति। अथ तत्र लोकधातौ विगतशोको नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र इत उत्तरस्यां दिशि...सहा नाम लोकधातुः.. भगवतः। अथ खलु भगवान् शाक्यमुनिः...येन ते दक्षिणस्यां दिशि...प्राक्षिपत्। तैश्च पद्मैः...न्यषीदन्।

अथ खलु पश्चिमायां दिशि...सर्वासानिको लोकधातुरुपशान्ता[2] नाम तत्र रत्नार्चिर्नाम तथागतः...देशयति। अथ तत्र लोकधातौ चारित्रमतिर्नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र इतः पूर्वस्यां दिशि...सहा नाम लोकधातुः.. भगवतः। अथ खलु भगवान् शाक्यमुनिः...येन ते पश्चिमायां दिशि...प्राक्षिपत्। तैश्च पद्मैः... न्यषीदन्।

अथ खलु उत्तरस्यां दिशि...सर्वावसानिको लोकधातुर्जया[3] नाम तत्र जयेन्द्रो[4] नाम तथागतः...देशयति। अथ तत्र लोकधातौ जयदत्तो नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र इतो दक्षिणस्यां दिशि...सहा नाम लोकधातुः...भगवतः। अथ खलु भगवान्

---

1. Vide p. 12, l. 17 to p. 14, l. 23. This passage has been repeated with the change of names of the directions, Lokadhātus, Buddhas and Bodhisattvas; so here these changes of directions and names have been mentioned, the omitted portions being indicated only by three dots (...). All that a reader has to do is to substitute the names of Buddhas, Bodhisattvas, Lokadhātus and directions in the corresponding places in the passages concerned.

2 Ś. 34 drops it.

3 $C_2$ जयोर्जबो

4 Ś. 37 जायेन्द्र

शाक्यमुनिः...[1] येन ते उत्तरस्यां दिशि...प्राक्षिपत्। तैश्च पद्मैः... न्यषीदन्।

अथ खलु उत्तरपूर्वस्यां दिशि...सर्वावसानिको लोकधातुः समाध्यलङ्कृता नाम तत्र समाधिहस्त्युत्तरश्रीर्नाम तथागतः...देशयति। अथ तत्र लोकधातौ विजयविक्रामी नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र इतो दक्षिणपश्चिमायां दिशि...सहा नाम लोकधातुः... भगवतः। अथ खलु भगवान् शाक्यमुनिः...येन ते उत्तरपूर्वस्यां दिशि... प्राक्षिपत्। तैश्च पद्मैः...न्यषीदन्।

अथ खलु पूर्वदक्षिणस्यां दिशि...सर्वावसानिको लोकधातुर्बोधिमण्डलाकारसुरुचिरा[2] नाम तत्र पद्मोत्तरश्रीर्नाम तथागतः...देशयति। अथ तत्र लोकधातौ पद्महस्तो नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र इतः पश्चिमोत्तरस्यां दिशि...सहा नाम लोकधातुः...भगवतः। अथ खलु भगवान् शाक्यमुनिः...येन ते पूर्वदक्षिणस्यां दिशि...प्राक्षिपत्। तैश्च पद्मैः...न्यषीदन्।

अथ खलु दक्षिणपश्चिमायां दिशि...सर्वावसानिको लोकधातुर्विगतरजःसञ्चया[3] नाम तत्र सूर्यमण्डलप्रभासो[4]त्तमश्रीर्नाम तथागतः... देशयति। अथ तत्र लोकधातौ सूर्यप्रभासो नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र इत उत्तरपूर्वस्यां दिशि...सहा नाम लोकधातुः... भगवतः। अथ खलु भगवान् शाक्यमुनिः...येन ते दक्षिणपश्चिमायां दिशि...प्राक्षिपत्। तैश्च पद्मैः...न्यषीदन्।

अथ खलु पश्चिमोत्तरस्यां दिशि...सर्वावसानिको लोकधातुर्वशीभूता नाम तत्रैकच्छत्रो नाम तथागतः...देशयति। अथ तत्र लोकधातौ रत्नोत्तमो नाम बोधिसत्त्वः...अवोचत्। अस्ति कुलपुत्र

---

1 See p. 12, l. 17 to p. 14, l. 23 for the portions omitted.

2 $C_2$ बोधिमण्डाकाररुचिरा

3 Ś. 45 विगतरागसम्भवा

4 Ś. 45 ॰प्रतिभासी॰

इतः पूर्वदक्षिणस्यां दिशि...सहा नाम लोकधातुः ..भगवतः। अथ खलु भगवान् शाक्यमुनिः···[1]येन ते पश्चिमोत्तरस्यां दिशि··· प्राक्षिपत्। तैश्च पद्मैः···न्यषीदन्।

अथ खल्वधस्ताद्दिशि···सर्वावसानिको लोकधातुः पद्मा नाम तत्र पद्मश्रीर्नाम तथागतः···देशयति। अथ तत्र लोकधातौ पद्मोत्तरो नाम बोधिसत्त्वः···अवोचत्। अस्ति कुलपुत्र इत उपरिष्टाद्दिशि···सहा नाम लोकधातुः···भगवतः। अथ खलु भगवान् शाक्यमुनिः···येन ते अधस्ताद्दिशि···प्राक्षिपत्। तैश्च पद्मैः···न्यषीदन्।

अथ खलु उपरिष्टाद्दिशि···सर्वावसानिको लोकधातुर्नन्दा नाम तत्र नन्दश्रीर्नाम तथागतः···देशयति। अथ तत्र लोकधातौ नन्ददत्तो नाम बोधिसत्त्वः···अवोचत्। अस्ति कुलपुत्र इतोऽधस्ताद्दिशि··· सहा नाम लोकधातुः···भगवतः। अथ खलु भगवान् शाक्यमुनिः··· येन ते उपरिष्टाद्दिशि···प्राक्षिपत्। तैश्च पद्मैः···न्यषीदन्।

अथ खलु तेन क्षणलवमुहूर्तेन अयं त्रिसाहस्रमहासाहस्रो लोकधातुः सप्तरत्नमयः संस्थितोऽभूत् पुष्पाभिकीर्णः। अवसक्तपट्टदामकलापः कल्पवृक्षैर्नानालङ्कारफलावनताग्रविटपैः पुष्पवृक्षैः फलवृक्षैर्गन्धवृक्षैर्माल्यवृक्षैश्चोपशोभितोऽभूत्। तद्यथापि नाम पद्मावती लोकधातुः समन्तकुसुमस्य तथागतस्य बुद्धक्षेत्रं यत्र मञ्जुश्रीः कुमारभूतः प्रतिवसति सुस्थितमतिश्च बोधिसत्त्वः अन्ये च महौजस्का बोधिसत्त्वाः। भगवांश्चाद्राक्षीत् सदेवलोकं सन्निपतितं समारकं सब्रह्मकं सश्रमणब्राह्मणिकां प्रजां सन्निपतितांस्तांश्च बोधिसत्त्वान् कुमारभूतान्॥ इति निदानम्[2]॥

तत्र खलु भगवानायुष्मन्तं शारिपुत्रमामन्त्रयामास। सर्वाकारं[3]

---

1 See p. 12, l. 17 to p. 14, l. 23 for the portions omitted.

2 The present text indicates the endings of sections by putting expressions like इति निदानम्, इति समासतः सम्बोधिकामना-सहगतचित्तोत्पादः.

3 Ś. 55 has सर्वाकाराम्.

शारिपुत्र सर्वधर्मानभिसम्बोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः ॥ इति समासतः सम्बोधिकामनासहगतश्चित्तोत्पादः ॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन सर्वाकारं[1] सर्वधर्मानभिसम्बोद्धुकामेन प्रज्ञापारमितायां योगः करणीयः।

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। इह शारिपुत्र[2] बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थित्वाऽस्थानयोगेन दानपारमिता परिपूरयितव्या अपरित्यागयोगेन देयदायकप्रतिग्राहकानुपलब्धितामुपादाय। शीलपारमिता परिपूरयितव्या आपत्त्यनापत्त्यनध्यापत्तितामुपादाय। क्षान्तिपारमिता परिपूरयितव्या अक्षोभणतामुपादाय। वीर्यपारमिता परिपूरयितव्या कायिकचैतसिकवीर्यास्रंसनता[3]मुपादाय[3]। ध्यानपारमिता परिपूरयितव्या अनास्वादनता[4]मुपादाय। प्रज्ञापारमिता परिपूरयितव्या प्रज्ञादौष्प्रज्ञा[5]नुपलब्धितामुपादाय॥ इति व्यासतः सम्बोधिकामनासहगतश्चित्तोत्पादः॥

पुनरपरं शारिपुत्र दशदिक्षु प्रत्येकं गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्तान् सर्वाननुपधिशेष[6]निर्वाणधातौ परिनिर्वापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्॥ इति समासतः परार्थालम्बनश्चित्तोत्पादः॥

एवं मत्सरिणः सत्त्वान्[7] दाने प्रतिष्ठापयितुकामेन दुःशीलान्[8] शीले व्यापादबहुलान्[9] क्षान्तौ कुसीदान् वीर्ये विक्षिप्तचित्तान् ध्याने

1 Ś. 55 has सर्वाकारान्. 2 $C_2$ drops ll. 4-7.

3 $C_1$ वीर्यार्यंसनता० ; $C_2$ वीर्यासंभनता

4 For अनास्वादनता० Ś. has अविक्षेपाप्रहरणता०.

5 A दौप्रज्ञा 6 $C_1$ & $C_2$ ०शेषे

7 $C_1$ & $C_2$ सत्वा 8 $C_1$ दुःशीला 9 $C_1$ ०बहुला

दुष्प्रज्ञान्[1] प्रज्ञा[2]सम्पदि प्रतिष्ठापयितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् ॥ इति व्यासतः परार्थालम्बन[3]चित्तोत्पादः ॥

पुनरपरं शारिपुत्र सर्वाकारं सर्वधर्मानभिसम्बोद्धुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थातव्यम् ॥ इतिच्छन्दसहगतः पृथिव्युपमः[4] ॥

एवमिह शारिपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां स्थित्वाऽस्थानयोगेन दानपारमिता परिपूरयितव्या देयदायकप्रतिग्राहकानुपलब्धितामुपादाय । एवं शीलपारमिता क्षान्तिपारमिता वीर्यपारमिता ध्यानपारमिता प्रज्ञापारमिता परिपूरयितव्या प्रज्ञादौष्प्रज्ञानुपलब्धितामुपादाय[5] ॥ इत्याशयसहगतः कल्याणसुवर्णोपमः ॥

एवं प्रज्ञापारमितायां शारिपुत्र स्थित्वा बोधिसत्त्वेन महासत्त्वेन चत्वारि स्मृत्युपस्थानानि परिपूरयितव्यानि चत्वारि सम्यक्प्रहाणानि चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि पञ्च बलानि सप्त बोध्यङ्गानि आर्याष्टाङ्गमार्गः परिपूरयितव्यः । शून्यतासमाधिर्भावयितव्यः । अनिमित्तसमाधिर्भावयितव्यः । अप्रणिहितसमाधिर्भावयितव्यः । एवं चत्वारि ध्यानानि चत्वार्यप्रमाणानि[6] चतस्र आरूप्यसमापत्तयः अष्टौ विमोक्षाः नवानुपूर्वविहारसमापत्तयः नवाशुभाः संज्ञा[7] भावयितव्याः । कतमा नव[8] । यदुत आध्मातक[9]संज्ञा विधूतक[10]संज्ञा विपूयक[11]संज्ञा विलो-

1 $C_1$ दुःप्रज्ञान्

2 A drops प्रज्ञा.

3 $C_2$ ०लम्बने

4 $C_1$ पृथिवीपमः

5 Cf. p. 18, ll. 7-14 noting that this passage has been repeated there in an abridged form.

6 $C_2$ चत्वारि प्रमाणानि 7 $C_1$ ०भसंज्ञा 8 $C_2$ नवः ; A & $C_1$ नवा

9 Mvyu. ; Kośa, p. 57 व्याध्मातक ; Ś. 59 ध्मातक ; Pāli : Uddhumātaka

10 Mvyu. ; Kośa, p. 57 विपडुमक ; Ś. 59 विपदाक

11 $C_1$ विपूर्यक ; Ś. 59 विपूतिक

हितकसंज्ञा विनीलकसंज्ञा विखादितकसंज्ञा विक्षिप्तकसंज्ञा विदग्धकसंज्ञा अस्थिसंज्ञा। आहारे प्रतिकूलसंज्ञा भावयितव्या। बुद्धानुस्मृतिर्भावयितव्या। संघानुस्मतिर्भा०[1]। शीलानुस्मृतिर्भा०। त्यागानुस्मृतिर्भा०। देवतानुस्मृतिर्भा०। आनापानानुस्मृतिर्भा०। उद्वेगानुस्मृतिर्भा०। मरणानुस्मृतिर्भा०। अनित्यसंज्ञा भा०। दुःखसंज्ञा भा०। अनात्मसंज्ञा भा०। अशुचि[2]संज्ञा भा०। मरणसंज्ञा भा०। सर्वलोके अनभिरतिसंज्ञा भा०। सर्वलोके अविश्वाससंज्ञा भा०। परिजय[3]संज्ञानम्भावयितव्यम्। संवृतिसंज्ञानम्भावयितव्यम्[4]। यथारुतसंज्ञान-[5]म्भावयिव्यम्। सवितर्कः सविचारः समाधिर्भावयितव्यः[6]। अवितर्कोऽविचारमात्रः समाधिर्भावयितव्यः। अवितर्कोऽविचारः समाधिर्भावयितव्यः। अनाज्ञातमाज्ञास्यामीन्द्रियम्भावयितव्यम्। आज्ञेन्द्रियम्भावयितव्यम्। आज्ञातावीन्द्रियम्भावयितव्यम्। अभिभ्वायतन[7]म्भावयितव्यम्। कृत्स्नायतनम्भावयितव्यम्[8]। सर्वज्ञज्ञानम्भावयितव्यम्। शमथविपश्यने भावयितव्ये[9] तिस्रो[10] विद्या भावयितव्याः। चतस्रः प्रतिसंविदो भावयितव्याः। चत्वारि वैशारद्यानि भावयितव्यानि। अच्युताः

---

1 भा० stands for भावयितव्या.

2 Ś. 61 अशुभ

3 Ś. 62 परिचय० ; cf. Mvyu. ccxlv. 130

4 $C_2$ drops ll. 6-8 ; so also Ś. 61.

5. Later on संज्ञानम् has been changed into ज्ञानम्. Mvyu. puts ज्ञानम् for संज्ञानम्.

6 $C_2$ सवितर्कसविचारकसमाधिं भावयितव्या

7 Ś. 64 अभिध्यायतनम्

8 $C_1$ drops it.

9 $C_2$ विपश्यने भावयिव्यम्

10 $C_2$ चतस्रो

पञ्चाभिज्ञा भावयितव्याः। षट् पारमिता भावयितव्याः। सप्त धनानि[1] भावयितव्यानि। अष्टौ महापुरुषवितर्का भावयितव्याः। दश तथागतबलानि भावयितव्यानि। अष्टादशावेणिका बुद्धधर्मा भावयितव्याः। महामैत्री भा॰[2]। महाकरुणा भा॰। महामुदिता भा॰। महोपेक्षा भा॰॥ इत्यध्याशयसहगतो नवचन्द्रोपमः॥

सर्वज्ञतां ज्ञानेन दर्शनेन चावलोक्यातिक्रमितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमिता भावयितव्या। मार्गज्ञतां परिपूरयितुकामेन सर्वाकारज्ञतामनुप्राप्तुकामेन सर्वसत्त्वचित्तचरितज्ञानाकारतां[3] परिपूरयितुकामेन सर्ववासनानुसन्धिक्लेशानुत्पाटयितु[4]कामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। एवं बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। बोधिसत्त्वन्याममवक्रमितुकामेन श्रावकप्रत्येकबुद्धभूमिमतिक्रमितुकामेन अविनिवर्तनीयभूमौ स्थातुकामेन कुमारभूमिं समतिक्रमितुकामेन षड्भिज्ञाः प्राप्तुकामेन सर्वसत्त्वचित्तचरितविस्पन्दितानि[5] विज्ञातुकामेन सर्वश्रावकप्रत्येकबुद्धानां ज्ञानमभिभवितुकामेन धारणीसमाधिमुखं प्रतिलब्धुकामेन॥ इति प्रयोगसहगतो ज्वलनोपमः॥

मत्सरिणः सत्त्वान्[6] दाने प्रतिष्ठापयितुकामेन सर्वश्रावकप्रत्येकबुद्धेभ्यो दानानि दीयमानानि एकेनानुमोदनासहगतेन चित्तोत्पादेनाभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्॥ इति दानपारमितासहगतो महानिधानोपमः॥

---

1 $C_2$ सप्तबोध्यङ्गानि ; cf. Mvyu. lxxvii.

2 भा॰ stands for भावयितव्या.

3 $C_2$ ॰ज्ञानता

4 A ॰नुध्यातयितुं ; $C_1$ नुद्घाटयितु ; $C_2$ नुद्यास्तयितु ; Ś. 67 has प्रहातुकामेन.

5 $C_1$ विसंदितानि ; $C_2$ विसदितानि

6 $C_1$ & $C_2$ सत्वा ; cf. Ś. 68 where this sentence has been worded a bit differently.

दुःशीलान् शीले प्रति०[1] शीलमेकैना०[2] ॥ इति शीलपारमितासहगतो रत्नाकरोपमः ॥

व्यापन्नचित्तान् क्षान्तौ प्रति० क्षान्तिमेकैना०[3] ॥ इति क्षान्तिसहगतो महार्णवोपमः ।

कुसीदान् वीर्ये प्रति० वीर्यमेकैना० ॥ इति वीर्यसहगतो वज्रोपमः[4] ।

विक्षिप्तचित्तान् ध्याने प्रति० ध्यानमेकैना० ॥ इति ध्यानपारमितासहगतः पर्वतोपमः ।

दुष्प्रज्ञान् सत्त्वान् प्रज्ञायां प्रति० प्रज्ञामेकैना० ॥ इति प्रज्ञासहगतो महाभैषज्योपमः ।

एकमपि कुशलचित्तोत्पादं सर्वाकारज्ञतायामुपादाय कौशल्येन परिणामनयाऽप्रमेयमसंख्येयं कर्तुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् । अल्पमपि दानं ददता[5] अल्पमपि शीलं रक्षता[6] अल्पामपि[7] क्षान्तिं भावयता अल्पमपि वीर्यमारभमाणेन अल्पमपि ध्यानं समापद्यमानेनाल्पामपि प्रज्ञां भावयता सर्वसत्त्वेभ्यः सर्वाकारज्ञतायामुपादाय कौशल्येन परिणामनयाऽप्रमेयमसंख्येयं कर्तुकामेन बोधिसत्त्वेन etc.[8] । पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन दानपारमितायां चरता प्रज्ञापारमितायां शिक्षितव्यम् । एवं शीलपारमितायाञ्चरता क्षान्तिपारमितायाञ्चरता वीर्यपारमितायाञ्चरता ध्यानपारमितायाञ्चरता प्रज्ञापारमितायाञ्चरता बोधिसत्त्वेन etc. । सर्व-

---

1 For प्रति० read प्रतिष्ठापयितुकामेन सर्वश्रावकप्रत्येकबुद्धानाम्.

2 For मेकैना० read मेकैनानुमोदनासहगतेन चित्तोत्पादेनाभिभवितुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्.

3 $C_2$ drops this line. 4 All Mss. have वजोपमः.

5 $C_1$ दत्ता 6 $C_1$ रक्षिता 7 $C^2$ अल्पमपि

8 Etc. in this page stands for महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्.

सत्त्वानामर्थाय नरकतिर्यग्योनियमलोकदुःखान्युत्सोढुकामेन[1] कल्पशतसहस्रसञ्चितमपि शीलं सत्त्वापेक्षया त्यक्तुकामेन बुद्धकुले उपपत्तुकामेन अशीत्यनुव्यञ्जनानि द्वात्रिंशत्महापुरुषलक्षणानि च निष्पादयितुकामेन बोधिसत्त्वेन etc.[2] ॥ इत्युपायसङ्गतो मित्रोपमः ॥

पुनरपरं शारिपुत्र बुद्धकार्यं निष्पादयितुकामेन बोधिसत्त्वेन etc.। कुमारभूमिमाक्रमितुकामेन बोधिसत्त्वेन etc.। बुद्धबोधिसत्त्वैरविरहितेन भवितुकामेन बोधिसत्त्वेन etc.।

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन एकेन स्वरेण पूर्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् विज्ञापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्। एवं दक्षिणस्यां पश्चिमायामुत्तरस्यां विदिक्षु अध ऊर्ध्वमेकेन स्वरेण गङ्गानदीवालुकोपमान् लोकधातून् विज्ञापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्।

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन त्रिरत्नवंशस्यानुपच्छेदाय स्थातुकामेन प्रज्ञापारमितायां शिक्षितव्यम्।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वो यै. यैः कुशलमूलैराकाङ्क्षति तथागतानर्हतः सम्यक्संबुद्धान् सत्कर्तुं गुरूकर्तुं मानयितुं पूजयितुं तानि तानि[3] मे कुशलमूलानि समृध्यन्तामिति बोधिसत्त्वेन etc. ॥ इति प्रणिधिसङ्गतश्चिन्तामणिसदृशः ॥

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानां मनोरथान् परिपूरयितुकामेन अन्नपानवस्त्रगन्धमाल्यपुष्पधूपचूर्णविलेपन[4]शयनासनगृहधनधान्यालङ्काररत्नमणिमुक्तावैदुर्यशङ्खशिलाप्रवाडजातरूपरजतोयानराज्यादिभिरुपकरणैः प्रज्ञापारमितायां शिक्षितव्यम्।

---

1 $C_1$ दुःखान्युत्पाद्युकामेन

2 Etc. in this page stands for महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्.

3 $C_2$ drops it.

4 $C_2$ अन्नपानवस्त्रमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाविलेपन॰

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन धर्मधातुपरमे[1] लोके आकाशधातुपर्यवसाने सर्वसत्त्वान् दानपारमितायां प्रतिष्ठापयितुकामेन शीलपारमितायां क्षान्तिपारमितायां वीर्यपारमितायां ध्यानपारमितायां प्रज्ञापारमितायां प्रतिष्ठापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्। पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन एकमपि कुशलचित्तोत्पादमक्षयं कर्तुकामेन यावद्बोधिमण्डाभिसंबोधेरिति प्रज्ञापारमितायां शिक्षितव्यम्। पुनरपरं शारिपुत्र ये दशसु दिक्षु बुद्धा भगवन्तस्ते मे वर्णं भाषेरन्निति बोधिसत्त्वेन etc.[2] ॥ इति बल[3]-सहगत आदित्योपमः ॥

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन अध्यात्मशून्यतायां शिक्षितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्। एवं बहिर्धाशून्यतायामध्यात्मबहिर्धाशून्यतायां शून्यताशून्यतायाम्महाशून्यतायां परमार्थशून्यतायां संस्कृतशून्यतायामत्यन्तशून्यतायामनवराग्रशून्यतायामनवकारशून्यतायां प्रकृतिशून्यतायां सर्वधर्मशून्यतायां स्वलक्षणशून्यतायामनुपलम्भशून्यतायामभावस्वभावशून्यतायां भावशून्यतायामभावशून्यतायां स्वभावशून्यतायां परभावशून्यतायां शिक्षितुकामेन बोधिसत्त्वेन etc.

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन सर्वधर्मतथतामवबोद्धुकामेन[4] प्रज्ञापारमितायां शिक्षितव्यम्। एवं धर्मधातुतथतामवबोद्धुकामेन[5] बोधिसत्त्वेन etc.। सर्वभूतकोटीतथतामवबोद्धुकामेन[6] बोधिसत्त्वेन ete.

1 $C_2$ परम

2 Etc. here stands for महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्.

3 A. चल

4 A ०तथाता० ; $C_2$ सर्वतथागतामव्यवलोकधातुकामेन

5 A ०तथाता० ; $C_2$ ०तथागता०

6 This has been dropped in A.

पुनरपरं[1] शारिपुत्र त्रिसाहस्रमहासाहस्रलोकधातौ ये पृथिव्यप्तेजोवायुपरमाणवस्तान् ज्ञातुकामेन बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् ।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरञ्जानाति एवं दानं दत्तं महाफलं भवति । एवं दानं दत्तं क्षत्रियमहाशालकुलेषूपपादयति । ब्राह्मणमहाशालकुलेषूप०[2] । गृहपतिमहाशालकुलेषूप० । एवं०[3] चातुर्महाराजकायिकेषु देवेषूप० । एवं० त्रयस्त्रिंशेषु देवेषूप० । एवं० यामेषूप० । एवं० तुषितेषूप० । एवं० निर्माणरतिषूप० । एवं० परनिर्मितवशवर्तिषु देवेषूप० । एवं० प्रथमध्यानप्रतिलम्भाय संवर्तते । एवं० द्वितीयध्यानप्रति०[4] । एवं० तृतीयध्यानप्रति० । एवं० चतुर्थध्यानप्रति० । एवं० आकाशानन्त्यायतनसमापत्तिप्रति० । एवं० विज्ञानानन्त्यायतनसमापत्तिप्रति० । एवं० आकिञ्चन्यायतनसमापत्तिप्रति० । एवं० नैवसंज्ञानासंज्ञायतनसमापत्तिप्रति० । एवं० सप्तत्रिंशद्बोधिपक्षाणां धर्माणां प्रति० । एवं० स्रोतआपत्तिफलप्रति० । एवं० सकृदागामिफलप्रति० । एवं० अनागामिफलप्रति० । एवं० अर्हत्फलप्रति० । एवं० प्रत्येकबुद्धत्वप्रति० । एवं सम्यक्संबुद्धत्वप्रति० ।

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरता [5]ज्ञातव्यमेवमुपायकौशलेन दानं दत्तं दानपारमितां परिपूरयति । एवं दानं दत्तं शीलपा०[6] । एवं० क्षान्तिपा० । एवं० वीर्यपा० । एवं० ध्यानपा० । एवं० प्रज्ञापा०[7] ।

---

1 $C_1$ एवं हि

2 प० stands for पपादयति.

3 एवं० stands for एवं दानं दत्तं.

4 प्रति० stands for प्रतिलम्भाय संवर्तते.

5 Ś. 91 has जानात्येवमुपाय०.

6 पा० stands for पारमितां परिपूरयति.

7 $C_1$ has dropped the enumerations from क्षान्ति to प्रज्ञा.

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। कथं भगवन् बोधिसत्त्वेन महासत्त्वेन दानं ददता[1] दानपारमिता परिपूरिता[2] भवति। कथं०[3] शीलपा०[4]। कथं० क्षान्तिपा०। कथं० वीर्य-पा०। कथं० ध्यानपा०[5]। कथं भगवन् बोधिसत्त्वेन दानं ददता प्रज्ञापा०[6]।

भगवानाह। अनुपलम्भेन देयस्य दायकस्य ग्राहकस्य च दानपारमिता परिपूरिता भवति। आपत्त्यनापत्त्यनध्यापत्तितः शीलपा०। अक्षोभानभिक्षोभणतः क्षान्तिपा०[7]। कायिकचैतसिकवीर्यास्रंसनतो[8] वीर्यपा०। [9]अविक्षेपास्वादनतामुपादाय ध्यानपा०। सर्वधर्म-प्रजाननानुपलम्भयोगेन प्रज्ञापा०। एवं बोधिसत्त्वेन महासत्त्वेन दानं ददता षट् पारमिताः परिपूरिता भवन्ति। एवं शीलपारमितायां सर्वाः षट् पारमिताः परिपूर्यन्ते। एवं क्षान्तिपारमितायां सर्वाः

---

1 $C_2$ दत्त ; $C_1$ ददाति

2 $C_1$ परिपूरता ; $C_2$ परिपूरयति

3 कथं० stands for कथं दानं ददता.

4 पा० stands for पारमिता परिपूरिता भवति ; $C_2$ has भवंति in many places.

5 A drops words from कथं$^0$ शीलपा० to ध्यानपा०.

6 In Ś. 92, the corresponding passage does not retain the form कथं दानं ददता in connection with every pāramitā. It puts the appropriate clauses : कथं शीलं रक्षता, कथं क्षान्तिं भावयता, कथं वीर्यमारभता, कथं ध्यानं समापद्यता, कथं प्रज्ञां भावयता। But in the passage just preceding, Ś. 92 has the same form as here.

7 $C_2$ अक्षोभ्याविक्षोभ्योपत

8 $C^1$ वीर्यांसंसनतो ; $C_2$ वीर्यसंसनती

9 Ś. 92 ०चसस्वादनता०

षट् पारमिताः परिपूर्यन्ते एवं वीर्यपारमितायां सर्वाः ··· [1]एवं ध्यानपारमितायां सर्वाः ··· एवं प्रज्ञापारमितायां सर्वाः···॥ इति ज्ञानसहगतो मधुरसङ्गीतिभाणोपमः[2] ॥

पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन एकचित्तोत्पादेन पूर्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् समतिक्रमितुकामेन एवं दक्षिणस्यां पश्चिमायामुत्तरस्यां विदिक्ष्वध ऊर्ध्वं दिग्भागे गङ्गानदीवालुकोपमान् लोकधातून् समतिक्रमितुकामेन बोधिसत्त्वेन etc.[3] । पुनरपरं शारिपुत्र त्रिसाहस्रमहासाहस्रलोकधातौ यो महासमुद्रेष्वप्स्कन्धो महानदीषु कुनदीषूत्ससरस्तडागेषु पल्वलेषु तं सर्वं शतधा भिन्नया वालाग्रकोट्याभ्युत्क्षेप्तुकामेन[4] च तन्निश्रितान् प्राणिनो विहेठयितुकामेन बोधिसत्त्वेन etc.

पुनरपरं शारिपुत्र त्रिसाहस्रमहासाहस्रं लोकधातुं कल्पोद्दाहाग्निप्रदीप्तमेकेन मुखवातेन प्रशमयितुकामेन बोधिसत्त्वेन etc.। पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन या विक्षोभणा वातमण्डली वातसंवर्तन्यां वर्तमानायां[5] यावत् [6]सुमेरुमहासुमेरुचक्रवाडमहाचक्र-[7]वाडानुपादाय सर्वपर्वतान्[8] सर्वमहापृथिवीं विधुनोति[9] विकिरति [10]निर्मर्षीकरोति तां विक्षोभणावातमण्डलीमेकेनाङ्गुलिपर्वाग्रेणाच्छादयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम् ।

---

1 Here, ... stands for षट् पारमिताः परिपूर्यन्ते.

2 Ś. 92 omits the last five lines of this para.

3 Here etc. stands for महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्.

4 A. भ्युत्क्षेप्तु ; $C_2$ भिद्रक्षेप्तु

5 $C_1$ वातसंवर्तमानायां

6 $C_1$ drops महासुमेरु.

7 $C_1$ ॰वाडमुपा॰

8 $C_1$ पर्वता

9 $C_1$ पृथिवी विध्मनाति ; $C^2$ विधुनाति

10 $C_1$ निर्मर्षो॰

पुनरपरं ··· [1]त्रिसाहस्रमहासाहस्रे लोकधातौ यावानाकाशधातुस्तं सर्वमेकेन पर्यङ्केन [2]स्फारितुकामेन प्रज्ञा०[3]। पुनरपरं···त्रिसाहस्रमहासाहस्रे लोकधातौ ये सुमेरुमहासुमेरुचक्रवाडमहाचक्रवाडादयः पर्वतास्तानेकेन वालेन बद्ध्वा असंख्येयानप्रमाणान् लोकधातून् समतिक्रामयेयं क्षिपेयमिति प्रज्ञा०।

पुनरपरं ··· दशसु दिक्षु प्रत्येकं सर्वबुद्धक्षेत्रेषु बुद्धान् भगवतो दिव्येन चक्षुषा द्रष्टुकामेन तेषाञ्च धर्मदेशनां दिव्येन श्रोत्रेण श्रोतुकामेन सर्वसत्त्वचित्तचरितानि च ज्ञातुकामेन तेषां पूर्वनिवासमनुस्मर्तुकामेन[4] आस्रवक्षयज्ञानाभिज्ञामभिनिर्हर्तुकामेन[5] च भूतकोटिं साक्षात्कर्तुकामेन प्रज्ञा० ॥ इति अभिज्ञासहगतो महाराजोपमः ॥

पुनरपरं ··· दशसु दिक्षु प्रत्येकं यावन्तो गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धा भगवन्तः सश्रावकबोधिसत्त्वसंघास्तानेकेन पिण्डपातेन प्रतिपादयितुकामेन प्रज्ञा०। एवं पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्वैस्तांस्तथागतानर्हतः सम्यक्संबुद्धान् सत्कर्तुकामेन गुरुकर्तुकामेन मानयितुकामेन पूजयितुकामेन प्रज्ञा०।

पुनरपरं ··· पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्तान् शीलस्कन्धे[6] प्रति[7]० समाधिस्कन्धे प्रति० विमुक्तिज्ञानदर्शनस्कन्धे प्रति० स्रोतआपत्तिफले प्रति० सकृदागामिफले प्रति० अनागामिफले प्रति० अर्हत्त्वे प्रति० प्रत्येकबोधौ प्रति० यावदनुपधिशेषनिर्वाणधातौ प्रति० प्रज्ञापारमितायां शिक्षितव्यम्। यथा पूर्वस्यां दिशि एवं दक्षिणस्यां पश्चिमायामुत्तरस्यां विदिक्ष्वध ऊर्ध्वं प्रत्येकं गङ्गानदी-

---

1 Here, ··· stands for शारिपुत्र बोधिसत्त्वेन महासत्त्वेन.

2 $C_1$ स्फरितु ; Ś. 82 स्फुरितु

3 प्रज्ञा० stands for प्रज्ञापारमितायां शिक्षितव्यम्.

4 A adds here चामेन.

5 $C_2$ निर्हर्तुकामेन मनुत०

6 A & $C_1$ have ०स्कन्धेषु.

7 प्रति० stands for प्रतिष्ठापयितुकामेन.

वालुकोपमेषु लोकधातुषु ये सत्त्वास्तान् यावदनुपधिशेषनिर्वाणधातौ प्रति०[1] बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् ॥ इति पुण्यज्ञानसङ्गतः कोष्ठागारोपमः ॥

पुनरपरं ··· [2]अतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां बुद्धगुणाननुप्राप्तुकामेन प्रज्ञा०[3] । पुनरपरं ··· संस्कृतासंस्कृतानां धर्माणां पारं गन्तुकामेन प्रज्ञा० । पुनरपरं ··· सर्वधर्माणामतीतानागतप्रत्युत्पन्नानां तथागतानामवबोद्धुकामेन [4]धर्माणामनुत्पादकोटिमनुप्राप्तुकामेन प्रज्ञा० ॥ इति बोधिपक्षसङ्गतो महामार्गोपमः ॥

पुनरपरं···सर्वश्रावकप्रत्येकबुद्धानां पूर्वङ्गमेन भवितुकामेन प्रज्ञा० । पुनरपरं ··· बुद्धानां भगवतामुपस्थापकेन भवितुकामेन प्रज्ञा० । पुनरपरं ··· बुद्धानां भगवतामभ्यन्तरपरिवारेण भवितुकामेन प्रज्ञा० । पुनरपरं ··· महापरिवारेण भवितुकामेन बोधिसत्त्वपरिवारं प्रतिलब्धुकामेन प्रज्ञा० । पुनरपरं ··· दक्षिणां परिशोधयितुकामेन प्रज्ञा० । पुनरपरं ··· मात्सर्यचित्तं निग्रहीतुकामेन प्रज्ञा० । पुनरपरं ··· दौःशील्यचित्तमनुत्पादयितुकामेन प्रज्ञा० । पुनरपरं ··· व्यापादचित्तमनुत्पादयितुकामेन प्रज्ञा० । पुनरपरं ··· कौशीद्यचित्तमुत्स्रष्टुकामेन प्रज्ञा० । पुनरपरं···विक्षिप्तचित्तं [5]निश्चितुकामेन प्रज्ञा० । पुनरपरं ··· दौष्प्रज्ञचित्तमप्रपञ्चितुकामेन प्रज्ञा० । पुनरपरं ··· सर्वसत्त्वान् दानमयपुण्यक्रियावस्तुनि प्रतिष्ठापयितुकामेन शीलमयपुण्यक्रियावस्तुनि

---

1 Here, प्रति० stands for प्रतिष्ठापयितुकामेन.

2 Here, ··· stands for शारिपुत्र बोधिसत्त्वेन महासत्त्वेन.

3 Here, प्रज्ञा० stands for प्रज्ञापारमितायां शिक्षितव्यम्.

4 $C_2$ drops अनुत्पादकोटी.

5 A & $C_1$ चिचितु, निचितु

प्रति०[1] भावनामयपुण्यक्रियावस्तुनि प्रति० वैयावृत्यसहगते औपधिके पुण्यक्रियावस्तुनि[2] प्रति० प्रज्ञा०[3] ।

पुनरपरं[4] ··· पञ्च चक्षूंष्युत्पादयितुकामेन प्रज्ञा० । कतमानि पञ्च ? यदुत मांसचक्षुर्दिव्यचक्षुः प्रज्ञाचक्षुर्धर्मचक्षुर्बुद्धचक्षुरुत्पादयितुकामेन प्रज्ञा० ।

पुनरपरं ··· पूर्वस्यां दिशि दिव्येन चक्षुषा गङ्गानदीवालुकोपमान् भगवतो द्रष्टुकामेन प्रज्ञा० । एवं दक्षिणस्यां दिशि दिव्येन चक्षुषा गङ्गानदीवालुकोपमान् बुद्धान् भगवतो द्रष्टुकामेन प्रज्ञा० and so on with regard to all other directions up to उपरिष्टाद्दिशि[5] । यांश्च[6] ते बुद्धानां भगवन्तो धर्मान् भाषन्ते तान् धर्मान्[7] दिव्येन श्रोत्रेण श्रोतुकामेन तेषाञ्च बुद्धानां[8] भगवतां चेतसैव चित्तं यथाभूतं परिज्ञातुकामेन तेषां बुद्धानां भगवतां पूर्वयोगसहगतां बोधिसत्त्वता-[9] मनुस्मर्तुकामेन तेषाञ्च बुद्धानामृद्धिविकुर्वितं द्रष्टुकामेन प्रज्ञा० ।

पुनरपरं ··· यांस्ते बुद्धा भगवन्तः समन्ताद्दशसु दिक्षु सर्वलोकधातुषु धर्मान्[10] भाषन्ते ताञ्श्रुत्वा[11] अनाच्छेद्येन [12]स्मृतिबलाधानेन सर्वान् सन्धारयितुकामेन यावदनुत्तरां[13] सम्यक्संबोधिमभिसंबुद्ध इति प्रज्ञा० ।

पुनरपरं···अतीतानां बुद्धानां भगवतां बुद्धक्षेत्राणि द्रष्टुकामेन अनागतानामपि बुद्धानां भगवतां बुद्धक्षेत्राणि द्रष्टुकामेन प्रज्ञा० । ये

---

1 प्रति० stands for प्रतिष्ठापयितुकामेन. 2 Cf. Mvyu. 93.

3 प्रज्ञा० stands for प्रज्ञापारमितायां शिक्षितव्यम्.

4 Here, ··· stands for शारिपुत्र बोधिसत्त्वेन महासत्त्वेन.

5 For the enumeration of the directions, see ante p.5, l.17

6 $C_2$ या च ते 7 $C_2$ ता धर्मा

8 $C_1$ बुद्धा 9 $C_1$ बोधिसत्त्वीताम्

10 $C_1$ धर्मा 11 $C_2$ तान् श्रुत्वा

12 $C_2$ बलति० 13 A राद् ; $C_2$ राधां

चेतर्हि[1] समन्ताद्दशदिशि लोके बुद्धा भगवन्तस्तिष्ठन्ति[2] ध्रियन्ते यापयन्ति तेषामपि बुद्धानां भगवतां बुद्धक्षेत्राणि द्रष्टुकामेन प्रज्ञा०[3] ॥ इति शमथविपश्यनासङ्गतो यानोपमः ॥

पुनरपरं ···[4] यत्किञ्चिद्दशसु दिक्षु बुद्धैर्भगवद्भि[5]र्भाषितं भाष्यते भाषिष्यते च यदिदं सूत्रं गेयं व्याकरणं गाथा उदानं निदानमितिवृत्तकं जातकं वैपुल्याद्भुता धर्मा अवदानमुपदेशाः यच्च[6] श्रावकैर्न श्रुतं तत्सर्वमुद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन तथत्वाय प्रतिपत्तुकामेन परेभ्यश्च विस्तरेण सम्प्रकाशयितुकामेन प्रज्ञा०। पुनरपरं··· यत् किञ्चित् पूर्वस्यां दिशि बुद्धैर्भगवद्भिर्भाषितं भाष्यते[7] भाषिष्यते च तत्सर्वमुद्ग्रहीतुकामेन धारयितुकामेन वाचयितुकामेन तथत्वाय प्रतिपत्तुकामेन परेभ्यश्च विस्तरेण संप्रकाशयितुकामेन प्रज्ञा०। यत्किञ्चिद्दक्षिणस्यां दिशि and so on with regard to all other directions up to ऊर्ध्वं दिशि[7] ॥ इति धारणीप्रतिभानसङ्गतः प्रस्रवणोपमः ॥

पुनरपरं ··· यानि पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु अन्धकारतमिस्राणि यत्र सूर्याचन्द्रमसोरपि प्रभाया गतिर्नास्ति तानि सर्वाण्यवभासयितुकामेन प्रज्ञा०। यानि दक्षिणस्यां दिशि and so on with regard to all other directions up to उपरिष्टाद्दिशि[8]। पुनरपरं···ये पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वा नानाबुद्धक्षेत्रेषूपपन्नास्तान् सर्वान् बुद्धशब्दं धर्मशब्दं सङ्घशब्दं संश्रावयितुकामेन तांश्च सत्त्वान् सम्यग्दृष्टौ

---

1 $C_2$ ये चेतर्हि   2 $C_2$ puts the verbs in singular.

3 Here प्रज्ञा० stands for प्रज्ञापारमितायां शिक्षितव्यम्.

4 Here, ··· stands for शारिपुत्र बोधिसत्त्वेन महासत्त्वेन.

5 $C_2$ भगवता   6 $C_2$ ये च   7 $C_2$ भाषते throughout

8 For the enumeration of directions, see p. 5, l. 17.

प्रतिष्ठापयितुकामेन प्रज्ञा०[1] । ये दक्षिणस्यां दिशि and so on with regard to all other directions up to उपरिष्टाद्दिशि[1] ॥ इति [2]धर्मोद्दानसहगत आनन्दशब्दोपमः ।

पुनरपरं…[3] ये पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वबुद्धक्षेत्रेषु सत्त्वा अन्धास्ते ममानुभावेन चक्षुषा रूपाणि द्रक्ष्यन्तीति प्रज्ञा० । एवं वधिराः श्रोत्रेण शब्दान् श्रोष्यन्तीति उन्मत्ताः स्मृतिं प्रतिलप्स्यन्ते इति नग्नाश्चैलानि प्रतिलप्स्यन्त इति जिघत्सिताः सत्त्वाः पूर्णपात्रा भविष्यन्तीति अपायोपपन्नाश्च सत्त्वाः सर्वापायेभ्यो विमोक्ष्यन्ते मनुष्यात्मभावञ्च प्रतिलप्स्यन्ते इति दुःशीलान् शीलस्कन्धे प्रतिष्ठापयिष्यामीति असमाहितान् समाधिस्कन्धे प्रति०[3] दुष्प्रज्ञान् प्रज्ञास्कन्धे प्रति० अविमुक्तान् विमुक्तिस्कन्धे प्रति० अविमुक्तिज्ञानदर्शनान् विमुक्तिज्ञानदर्शनस्कन्धे प्रति० अदृष्टसत्यान् स्रोतआपत्तिफले प्रति० सकृदागामिफले अनागामिफले अर्हत्त्वे प्रति० प्रत्येकबोधौ प्रति० अनुत्तरायां सम्यक्संबोधौ प्रति० बोधिसत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् । ये दक्षिणस्यां दिशि and so on with regard to all other directions up to the ऊर्ध्वं दिशि ॥ इति एकायनमार्गसहगतो नदीस्रोतोपमः ॥

पुनरपरं … तथागतेर्यापथे[5] शिक्षितुकामेन प्रज्ञा०[6] । पुनरपरं … प्रज्ञापारमितायां चरता एवमुपपरीक्षितव्यम् । कदा न्वहं नागा-

---

1 For the enumeration of directions, see p. 5, l. 15.

2 $C_2$ धर्मांयन० ; A धर्मोदान०. Cf. Mvyu. 66. 47 : उद्दानम्

3 Here, … stands for शारिपुत्र बोधिसत्त्वेन महासत्त्वेन.

4 प्रति० stands for प्रतिष्ठापयिष्यामीति.

5 $C_2$ तथागतायापथे

6 प्रज्ञा० stands for प्रज्ञापारमितायां शिक्षितव्यम्.

वलोकितमवलोकयिष्यामीति किमित्यहं पृथिवीं चतुरङ्गुलमस्पृशन्[1] पद्भ्यां गच्छेयमिति प्रज्ञा०[2]। पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता एवमुपपरीक्षितव्यम्। किमित्यहं चातुर्महाराजकायिकैस्त्रयस्त्रिंशैर्यामैस्तुषितैर्निर्माणरतिभिः परनिर्मितवशवर्तिभिर्ब्रह्मकायिकैर्ब्रह्मपुरोहितैर्ब्रह्मपारिषद्यैः[3] परीत्ताभैः अप्रमाणाभैराभास्वरैः परीत्तशुभैरप्रमाणशुभैः शुभकृत्स्नैरनभ्रकैः पुण्यप्रसवैर्बृहत्फलैरसंज्ञिसत्त्वैः[4] शुद्धावासै[5]रसृहै[6]रतपैः सदृशैः सुदर्शनैरकनिष्ठैश्च परिवृतः पुरस्कृतोऽनेकदेवपुत्रकोटीनियुतशतसहस्रैर्बोधिमण्डद्रुममूलमुपसंक्रमेयमिति[7] प्रज्ञा०। पुनरपरं ...[8]। किमिति ये चातुर्महाराजकायिका देवास्त्रयस्त्रिंशा यामास्तुषिता and other gods[9] up to अकनिष्ठाश्च देवाः बोधिमण्डद्रुममूलं प्रतिसंस्तरेयुरिति प्रज्ञा०। पुनरपरं ...। किमिति मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य गच्छतो वा तिष्ठतो वा निषण्णस्य शयानस्य वा स पृथिवीप्रदेशो वज्रमयः सन्तिष्ठते इति प्रज्ञा०। पुनरपरं ...। किमित्यहं यत्रैव दिवसे निष्क्रामेयं[10] तत्रैव दिवसेऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येय[11]मिति।

---

1 A & $C_2$ स्पृशेन ; Ś. 110 चतुरङ्गुलमात्रेण महापृथिवीं पद्भ्यामस्पृशन्.

2 For प्रज्ञा० read प्रज्ञापारमितायां शिक्षितव्यम्.

3 & 4 Both Mvyu. (961) & Ś. 112 add here महाब्रह्माणः.

5 These are not in the list of the Mvyu. & Ś. 112.

6 Both Mvyu. (162) & Ś. 112 read अबृहाः for असृहाः.

7 A ०क्रमयितुं

8 For ... read शारिपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता एवमुपपरीक्षितव्यम्.

9 For the names of gods, see above ll. 3-7.

10 $C_1$ निष्क्रामयम्

11 $C_1$ बुधीमिति

तत्रैव दिवसे धर्मचक्रं प्रवर्तयेयं[1]मिति। धर्मचक्रं च मे प्रवर्तयमानस्यासंख्येयानामप्रमेयाणां सत्त्वानां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुध्येदिति। असंख्येयानामप्रमेयाणां सत्त्वानामनुपादायास्रवेभ्यश्चित्तानि विमुच्येयु[2]रिति। असंख्येया अप्रमेयाः सत्त्वा अविनिवर्तनीया भवेयुरनुत्तरायाः सम्यक्संबोधेरिति प्रज्ञा०[3]। पुनरपरं …[4]। किमिति मेऽप्रमेयोऽसंख्येयः श्रावकसंघः स्यादित्यप्रमेयाः असंख्येयाः सत्त्वा एकधर्मदेशनाया एकासनिका बोधिसत्त्वा भवेयुरविनिवर्तनीया अनुत्तरायाः सम्यक्संबोधेरिति। असंख्येयश्चाप्रमेयश्च बोधिसत्त्वसंघो भवेदिति। अपरिमितं चायुःप्रमाणं भवेदिति। अपरिमिता च प्रभासम्पद्भवे[5]दिति प्रज्ञा०। पुनरपरं …। किमिति मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य तस्मिन् बुद्धक्षेत्रे रागद्वेषमोहायतनानि सर्वेण सर्वं सर्वथा सर्वं[6] न भवेयुरिति प्रज्ञा०। पुनरपरं …। किमिति मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य एवंरूपया प्रज्ञया सत्त्वाः समन्वागता भवेयुर्यदन्यबुद्धक्षेत्रस्था बुद्धा भगवन्तः एवमुदानमुदानयेयुः। साधु शमः साधु दमः साधु संयमः साधु चीर्णो[7]ब्रह्मचर्यावासः साध्वविहिंसा सर्वप्राणिभूतेष्विति प्रज्ञा०। पुनरपरं …। किमिति मे परिनिर्वृतस्य सद्धर्मान्तर्धानमपि न स्यात् सह श्रवणेन च मे नामधेयस्य ये दशसु दिक्षु गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वास्ते नियता भवेयुरनुत्तरायाः सम्यक्संबोधेरिति प्रज्ञा०।

---

1 ०संयमिति

2 $C_2$ विमुच्यमुरिति

3 For प्रज्ञा read प्रज्ञापारमितायां शिक्षितव्यम्.

4 For … read शारिपुत्र बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां एवमुपपरीक्षितव्यम्.

5 $C_2$ संप्रभवेदिति

6 A सर्वे

7 $C_2$ ०चीर्णो

यस्मिन् समये शारिपुत्र बोधिसत्त्वो महासत्त्वः[1] प्रज्ञापारमितायां चरन् इमान् गुणानुत्पादयति तदा ये त्रिसाहस्रमहासाहस्रे लोकधातौ महाराजानस्ते एवं चिन्तयन्ति वयमस्मै बोधिसत्त्वाय चत्वारि पात्राणि दास्यामः। यथा दत्तानि पूर्वकैर्महाराजैः पूर्वकाणां तथागतानां त्रयस्त्रिंशाश्च देवा आत्तमनस्का भवन्ति यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनो देवा उत्सुका भविष्यन्ति। वयमस्य[2] बोधिसत्त्वस्य महासत्त्वस्योपस्थानपरिचर्याः करिष्याम इति। एवमासुराः कायाः परिहास्यन्ते। दिव्याः कायाः अभिवर्धिष्यन्ते आत्तमनस्काश्च त्रिसाहस्रमहासाहस्रे लोकधातौ भवन्ति। ब्रह्मपारिषद्या[3] ब्रह्मपुरोहिता महाब्रह्माणः आत्तमनस्का भवन्ति। परीत्ताभा अप्रमाणाभाश्च आभास्वराः परीत्तशुभा अप्रमाणशुभाः शुभकृत्स्ना अनभ्रकाः पुण्यप्रसवा बृहत्फला असंज्ञिसत्त्वाः शुद्धावासा अबृहा[4] अतपाः सुदृशाः सुदर्शना अकनिष्ठाश्च देवास्तेषामेवं भवति। वयमेनमभिसंबुद्धमध्येषिष्यामो धर्मचक्रप्रवर्तनाय।

यस्मिन् समये शारिपुत्र बोधिसत्त्वो महासत्त्वः[5] प्रज्ञापारमितायां चरन् विवर्धते[6] षड्भिः पारमिताभिः तस्मिन् समये आत्तमनस्का भवन्ति बोधिसत्त्वयानिकाः कुलपुत्राः कुलदुहितरश्च वयमस्य मातापितरौ भविष्यामो भार्यापुत्रज्ञातिसालोहिता इति।

आत्तमनस्का भवन्ति चत्वारो महाराजानो देवास्त्रयस्त्रिंशा देवा

---

1 $C_2$ बोधिसत्त्वेन महासत्त्वेन

2 $C_2$ स्वयमस्य

3 $C_1$ पार्षद्या

4 In the previous list, p. 33, l. 7, it is written अस्पृहा. This list is the same as in Mvyu. & Ś.

5 $C_2$ बोधिसत्त्वेन महासत्त्वेन

6 A विवृद्ध'

यामास्तुषिता देवा and other gods[1] up to अकनिष्ठाश्च देवा बोधिसत्त्वस्य महासत्त्वस्य मैथुनधर्मपरिवर्जनेन ।

अथ यः प्रथमचित्तोत्पादमुपादाय[2] बोधिसत्त्वो महासत्त्वो ब्रह्मचारी भवति । न संयोजनीयैर्धर्मैः संप्रयुज्यते । तस्यैवं भवति ब्रह्मचारिणः स[3] खलु पुनः कामान् प्रतिसेवमानस्य[4] ब्रह्मलोकोपपत्तेरप्यन्तरायो भवति कः पुनर्वादोऽनुत्तरायाः सम्यक्संबोधेः । तस्मात् तर्हि[5] बोधिसत्त्वेन महासत्त्वेन ब्रह्मचारिणैव[6] गृहादभिनिष्क्रम्यानुत्तरा सम्यक्संबोधिरभिसंबोद्धव्या नाब्रह्मचारिणा ॥ एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत् ॥ किं पुनर्भगवन् अवश्यं[7] बोधिसत्त्वस्य मातापितृभ्यां भवितव्यं भार्यापुत्रज्ञातिसालोहितैर्भवितव्यम् । एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत् । केषांचिच्छारिपुत्र बोधिसत्त्वानां महासत्त्वानां मातापितरो भवतः[8] भार्यापुत्रज्ञातिसालोहिता वा केषांचिद् बोधिसत्त्वानां महासत्त्वानां प्रथमचित्तोत्पादमुपादाय ब्रह्मचर्यासमादानन्ते कुमारभूता एव[9] बोधिसत्त्व[10]चारिकां चरन्तोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते[11] । केचिद् बोधिसत्त्वा महासत्त्वा[12] उपायकौशल्येन च पञ्च कामगुणान् परिभुज्याभिनिष्क्रम्यानुत्तरायां सम्यक्-

---

1 For the names of gods, see p. 33 ll. 3-7; in this list महाब्रह्माणः is mentioned. Here also अकनिष्ठा has been retained; contrast p. 35, l. 12.

2 $C_2$ मुत्पादाय

3 A drops it.

4 A प्रतिषेव॰ ; $C_2$ प्रतिष्यम् धर्मासस्य

5 $C_2$ तस्मातर्हित

6 $C_1$ चारि ए गृहा॰

7 $C_1$ भगवन्नवश्यं ; $C_2$ भगवस्य ; cf. Ś. 116.

8 $C_2$ भवेत

9 $C_2$ एवं

10 $C_1$ ॰सत्त्वो ; A ॰सत्त्वे

11 $C_1$ & A ॰न्ते

12 $C_2$ puts the word in the genitive.

संबोधिमभिसंबुध्यन्ते । तद् यथापि नाम शारिपुत्र दक्षो मायाकारो वा मायाकारान्तेवासी वा सुशिक्षितो भवेत् मायायाम् । स पञ्च कामगुणानभिनिर्माय तैः पञ्चभिः कामगुणै रमेत क्रीडेत् परिचरेत् । तत् किं मन्यसे शारिपुत्र अपि नु तेन मायाकारेण वा मायाकारान्तेवासिना वा पञ्च कामगुणा आस्वादिताः परिभुक्ता भवेयुः । शारिपुत्र[1] आह । नो हीदं भगवन् । भगवानाह । एवमेव शारिपुत्र बोधिसत्त्वो महासत्त्व उपायकौशल्येन च पञ्च कामगुणान् परिभुंक्ते[2] सत्त्वानां परिपाकहेतोः । न पुनर्बोधिसत्त्वो महासत्त्वः कामगुणैर्लिप्यते । अनेन पर्यायेण बोधिसत्त्वो महासत्त्वः कामानामवर्णं भाषते आदीप्ताः कामाः जुगुप्सिताः कामाः वधकाः कामाः[3] प्रत्यर्थिकाः कामाः । एवं हि शारिपुत्र बोधिसत्त्वो महासत्त्वः सत्त्वपरिपाकहेतोः पञ्च कामगुणानुपाददाति ॥ इति धर्मकामसङ्गतो महामेघोपमः ॥[4] इति उक्तश्चित्तोत्पादः ॥[5]

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत् । कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरितव्यम् । एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत् । इह शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बोधिसत्त्व एव समानो बोधिसत्त्वं न समनुपश्यति बोधिसत्त्वनामापि न समनुपश्यति । बोधिसत्त्वचर्यामपि[6] न समनुपश्यति । प्रज्ञापारमितामपि न समनुपश्यति । रूपमपि न समनुपश्यति । एवं वेदनां संज्ञां संस्कारान्[7] विज्ञानमपि न समनुपश्यति ।

---

1 All Mss. drop it. 2 $C_2$ ०भुक्त'

3 A drops it. 4 A महासंघोपमः; $C_2$ सङ्गतोपमः

5 Takakusu in his Chinese edition (p. २२१) notices this as the first sub-section.

6 A adds here न सत्त्वचर्यामपि.

7 $C_2$ संस्कारा

तत् कस्य हेतोः। तथाहि बोधिसत्त्वो महासत्त्वो बोधिसत्त्वस्वभावेन[1] शून्यः प्रज्ञापारमितास्वभावेन शून्यः। तत् कस्य हेतोः। प्रकृतिरस्यैषा। तथाहि शून्यतया न रूपं शून्यं न वेदना न संज्ञा न संस्कारा न विज्ञानं शून्यतया शून्यं नान्यत्र[2] रूपाच्छून्यता नाप्यत्र वेदनायाः शून्यता नान्यत्र संज्ञायाः[3] शून्यता नान्यत्र संस्कारेभ्यः शून्यता नान्यत्र विज्ञानाच्छून्यता। तत् कस्य हेतोः। रूपमेव शून्यता वेदनैव शून्यता संज्ञैव शून्यता संस्कारा एव शून्यता विज्ञानमेव शून्यता शून्यतैव रूपं शून्यतैव वेदना शून्यतैव संज्ञा शून्यतैव संस्काराः शून्यतैव विज्ञानम्। तत् कस्य हेतोः। तथाहि नाममात्रमिदं यदिदं बोधिसत्त्व इति। नाममात्रमिदं यदिदं प्रज्ञापारमितेति नाममात्रमिदं रूपं वेदना संज्ञा संस्काराः विज्ञानम्। तथा हि मायोपमं[4] रूपं वेदना संज्ञा संस्कारा विज्ञानं माया च नाममात्रं न देशस्था न प्रदेशस्था असद्भूतं[5] वितथदर्शनम्[6]। मायादर्शनस्वभावस्य हि नोत्पादो न निरोधः[7]। न संक्लेशो न व्यवदानम्। एवं प्रज्ञापारमितायां चरन् बोधिसत्त्वो महासत्त्व उत्पादमपि न समनुपश्यति निरोधमपि न समनुपश्यति। संक्लेशमपि न समनुपश्यति। व्यवदानमपि न समनुपश्यति। तत् कस्य हेतोः। तथा हि कृत्रिमं नाम प्रतिधर्मम्। ते च कल्पिताः। आगन्तुकेन नामधेयेन व्यवह्रियन्ते। तानि बोधिसत्त्वः प्रज्ञापारमितायां चरन्[8] सर्वनामानि न समनुपश्यति असमनुपश्यन्नाभिनिविशते। पुनरपरं शारिपुत्र बोधिसत्त्वः प्रज्ञापारमितायां चरन्नेवमुपपरीक्षते नाममात्रमिदं यदिदं बोधिसत्त्व इति। नाममात्रमिदं यदुत बोधिरिति। नाम०[9] बुद्ध इति। नाम० प्रज्ञा-

---

1 A & $C_1$ ०भावेन

2 $C_2$ adds here शून्यतया नान्यत्र.

3 $C_1$ संज्ञाः

4 $C_2$ ०पमां

5 $C_2$ असदर्शं भूतं

6 $C_2$ विकथंदर्शनं

7 $C_1$ निरोधो

8 $C_2$ adds एवमुपपरीक्षन्ते.

9 For नाम० read नाममात्रमिदं यदुत.

पारमितेति। नाम॰[1] प्रज्ञापारमितायां चर्येति। नाम॰ रूपमिति। नाम॰ वेदनेति। नाम॰ संज्ञेति। नाम॰ संस्कारा इति। नाम॰ विज्ञानमिति। तद् यथापि नाम शारिपुत्र आत्मेति चोच्यते। न चात्मा उपलभ्यते। न सत्त्वो न जीवो न पोषो न पुरुषो न पुद्गलो[2] न मनुजोऽप्युपलभ्यन्ते। अनुपलम्भशून्यतामुपादाय। तत् कस्य हेतोस्तथाहि बोधिसत्त्वस्तमपि न समनुपश्यति येनाभिनिविशेत। एवं चरन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरति। स चेच्छारिपुत्रायं जम्बुद्वीपः परिपूर्णो भवेच्छारिपुत्रमौद्गल्यायनसदृशैर्भिक्षुभिः तद् यथापि नाम नलवनं वा वेणुवनं वा इक्षुवनं वा शरवणं वा शालिवनं वा तिलवनं वा तेषां या प्रज्ञा सा प्रज्ञापारमितायां चरतो बोधिसत्त्वस्य प्रज्ञायाः शततमीमपि कलां नोपैति सहस्रतमीमपि शतसहस्रतमीमपि संख्यामपि कलामपि गणनामप्युपमामप्युपनिषदमपि उपनिशामपि नोपैति। एवं शारिपुत्र प्रज्ञापारमितायां चरतो बोधिसत्त्वस्यैकदिवसभाविता या प्रज्ञा सा सर्वश्रावकप्रत्येकबुद्धानां प्रज्ञामभिभवति। तत् कस्य हेतोः। तथाहि शारिपुत्र या बोधिसत्त्वस्य प्रज्ञा सा सर्वसत्त्वानां निर्वाणाय प्रत्युपस्थिता। तिष्ठतु शारिपुत्रायं जम्बुद्वीपः परिपूर्णः शारिपुत्र-मौद्गल्यायनसदृशैर्भिक्षुभिः। स चेच्छारिपुत्र त्रिसाहस्रमहासाहस्रो लोकधातुः परिपूर्णो भवेच्छारिपुत्रमौद्गल्यायनसदृशैर्भिक्षुभिः ...[3] up to नोपैति। तिष्ठतु शारिपुत्र त्रिसाहस्रमहासाहस्रो लोकधातुः परिपूर्णः शारिपुत्रमौद्गल्यायनसदृशैर्भिक्षुभिः। स चेच्छारिपुत्र पूर्वस्यां दिशि गङ्गानदीवालुकोपमा लोकधातवः परिपूर्णा भवेयुः शारिपुत्रमौद्गल्यायनसदृशैर्भिक्षुभिः ... स चेच्छारिपुत्र पश्चिमायां दिशि ... repeat as above with regard to all other directions up to ऊर्ध्वं दिशि।

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। येयं भगवन्[4]

---

1 For नाम॰ read नाममात्रमिदं यदुत. 2 $C_1$ पुद्गल

3 For ... read p. 39, ll. 8-12. 4 $C_1$ कथयभगवन्

स्रोतआपन्नस्य प्रज्ञा सकृदागामिनोऽनागामिनोऽर्हतः प्रत्येकबुद्धस्य प्रज्ञा बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञा तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रज्ञा सर्वा एताः प्रज्ञाः अभिन्ना विविक्ता अनुत्पन्ना अस्वभावाः शून्याः। न च भगवन्नभिन्नस्य विविक्तस्य अनुत्पन्नस्यास्वभावस्य शून्यस्य नानाकरणमुपलभ्यते[1] विशेषो वा। तत् कथं पुनर्भगवन् या बोधिसत्त्वस्यैकदिवसभाविता प्रज्ञा सा प्रज्ञापारमितायां चरतः[2] प्रज्ञा सर्वश्रावकप्रत्येकबुद्धानां प्रज्ञामभिभवति। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। तत् किं मन्यसे शारिपुत्र येन[3] कार्येण बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतः एकदिवसभाविता प्रज्ञा प्रत्युपस्थिता सर्वाकारवरोपेता सर्वज्ञतायां चरतः सर्वसत्त्वानामर्थं कुर्वतः सर्वाकारं सर्वधर्मान् बुद्ध्वा सर्वसत्त्वाः परिनिर्वापयितव्या इति। अपि नु शारिपुत्र[4] तेन कृत्येन सर्वश्रावकप्रत्येकबुद्धानां प्रत्युपस्थिता। शारिपुत्र आह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे शारिपुत्र अपि नु सर्वश्रावकप्रत्येकबुद्धानामेवं भवति। अस्माभिरनुत्तरां सम्यक्संबोधिमभिसंबुध्य सर्वसत्त्वनिरुपधिशेषनिर्वाणधातौ परिनिर्वापयितव्या इति। शारिपुत्र आह। नो हीदं भगवन्। भगवानाह। तदनेनापि ते शारिपुत्र पर्यायेणैवं वेदितव्यम्। येयं सर्वश्रावकप्रत्येकबुद्धानां प्रज्ञा सा बोधिसत्त्वस्य प्रज्ञाया एकदिवसभावितायाः शततमीमपि कलां ...[5] up to नोपैति।

तत् किं मन्यसे शारिपुत्र अपि नु सर्वश्रावकप्रत्येकबुद्धानामेवं भवति। षट्सु पारमितासु चरित्वा सत्त्वान् परिपाच्य बुद्धक्षेत्रं परिशोध्य दश तथागतबलानि परिपूर्य चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदोऽष्टादशावेणिकान् बुद्धधर्मान् परिपूर्य अनुत्तरां सम्यक्संबोधिमभिसंबुध्य

---

1 $C_2$ ०लभते  2 $C_2$ चरता

3 A यो न  4 $C_2$ has ०पुत्रेण and drops तेन.

5 For ... read p. 39, ll. 8-12.

अप्रमेयानसंख्येयानपरिमाणान् सत्त्वान् परिनिर्वापयिष्याम इति। शारिपुत्र आह। नो हीदं भगवन्। भगवानाह। बोधिसत्त्वस्य महासत्त्वस्य पुनः शारिपुत्रैवं भवत्यहं षट्सु पारमितासु चरित्वा सत्त्वान् परिपाच्य ···[1] up to सत्त्वान् परिनिर्वापयिष्यामीति[2]। तद् यथापि नाम शारिपुत्र न भवति खद्योतकस्य प्राणकजातस्य ममाभया जम्बुद्वीपोऽवभास्येतेति ममाभया जम्बुद्वीपः[3] स्फुटो भवेदिति। एवमेव शारिपुत्र सर्वश्रावकप्रत्येकबुद्धानां नैवं भवति एकस्याप्यहं षट्सु पारमितासु चरित्वा सत्त्वान् परिपाच्य ··· up to सत्त्वान् परिनिर्वापयिष्यामीति। तद् यथापि नाम शारिपुत्र सूर्यमण्डलमुदयत् सर्वजम्बुद्वीपमवभासेन स्फुटीकरोति। एवमेव शारिपुत्र बोधिसत्त्वो महासत्त्वः षट्सु पारमितासु चरित्वा सत्त्वान् परिपाच्य ··· up to सत्त्वान् परिनिर्वापयति।

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। कथं भगवन् बोधिसत्त्वो महासत्त्वः सर्वश्रावकप्रत्येकबुद्धभूमिं चातिक्रम्य अविनिवर्तनीयभूमिमनुप्राप्नोति बोधिमार्गं च परिशोधयति। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। इह शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रथमचित्तोत्पादमुपादाय[4] षट्सु पारमितासु चरन् शून्यतानिमित्ताप्रणिहितेषु धर्मेषु स्थित्वा श्रावकप्रत्येकबुद्धभूमिं चातिक्रामति अविनिवर्तनीयभूमिमनुप्राप्नोति बोधिमार्गं च परिशोधयति।

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। कतमस्यां भगवन् भूमौ स्थित्वा बोधिसत्त्वो महासत्त्वः सततसमितं सर्वश्रावकप्रत्येक-

1 For ··· read p. 40, l. 22 to p. 41, l. 1.

2 $C_1$ ष्याम इति

3 A ०द्वीपे

4 $C_2$ ०मुत्पादाय

बुद्धानां दक्षिणीयो भवति। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतद्वोचत्। प्रथमचित्तोत्पादमुपादाय शारिपुत्र बोधिसत्त्वो महासत्त्वः षट्सु पारमितासु चरन् यावद्वा बोधिमण्डादन्तरे सततसमितं सर्वश्रावकप्रत्येकबुद्धानां दक्षिणीयो भवति। तत्कस्य हेतोः। तथाहि शारिपुत्र बोधिसत्त्वं महासत्त्वमागम्य सर्वेषां कुशलानां धर्माणां लोके[1] प्रादुर्भावो भवति। यदुत दशानां कुशलानां[2] कर्मपथानां पञ्चानां शिक्षापदानामष्टाङ्गसमन्वागतस्य पोषधस्य चतुर्णां ध्यानानां चतुर्णामप्रमाणानां चतसृणामारूप्यसमापत्तीनां पञ्चानामभिज्ञानां चतुर्णामार्यसत्यानां चतुर्णां स्मृत्युपस्थानानां चतुर्णां सम्यक्प्रहाणानां चतुर्णामृद्धिपादानां पञ्चानामिन्द्रियाणां पञ्चानां बलानां सप्तानां बोध्यङ्गानामार्याष्टाङ्गस्य मार्गस्य लोके प्रादुर्भावो भवति। चतुर्णां वैशारद्यानां लोके प्रादुर्भावो भवति। चतसृणां प्रतिसंविदां लोके[3] प्रादुर्भावो भवति। षण्णां पारमितानां दशानां तथागतबलानां अष्टादशानामावेणिकानां बुद्धधर्माणां लोके प्रादुर्भावो भवति। एतेषां च कुशलानां धर्माणां लोके प्रादुर्भावात् क्षत्रियमहाशालकुलानि प्रज्ञायन्ते ब्राह्मणमहाशालकुलानि प्रज्ञायन्ते गृहपतिमहाशालकुलानि प्रज्ञायन्ते चातुर्महाराजकायिका देवाः प्रज्ञायन्ते। त्रयस्त्रिंशा देवाः प्रज्ञायन्ते। यामा देवाः प्रज्ञायन्ते। And such other names of other classes of gods up to[4] अकनिष्ठा देवाः प्रज्ञायन्ते। आकाशानन्त्यायतना देवाः प्रज्ञायन्ते। विज्ञानानन्त्या-

---

1 A लोक॰

2 All Mss. drop this here but put it in other enumerations.

3 A लोक॰

4 For names of the classes of gods, see p. 33, ll. 4-7 and footnote 1 of p. 36: महाब्रह्माणः, and असत्त्वाः for असंज्ञाः are found here.

यतना दे०[1] आकिंचन्यायतना दे०। नैवसंज्ञानासंज्ञायतना दे०। स्रोतआपन्ना लोके उत्पद्यन्ते। सकृदागामिनो लो०[2]। अनागामिनो लो०। अर्हन्तो लो०। प्रत्येकबुद्धा लो०। बोधिसत्त्वा लो०। तथागता अर्हन्तः सम्यक्संबुद्धा लो०।

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। किं पुनर्भगवन् बोधिसत्त्वो महासत्त्वो दक्षिणां शोधयति उत नेति। भगवानाह। न हि शारिपुत्र बोधिसत्त्वो महासत्त्वो दक्षिणां शोधयति। तत्कस्य हेतोः। अत्यन्तशुद्धैव दक्षिणा बोधिसत्त्वस्य महासत्त्वस्य। तत्कस्य हेतोः। दायकः शारिपुत्र बोधिसत्त्वो महासत्त्वः। कस्य दायकः। कुशलानां धर्माणां दायकः। कतमेषां कुशलानां धर्माणां दायकः। यदुत दशानां कुशलानां कर्मपथानां …[3] up to मार्गस्य चतुर्णां वैशारद्यानां चतसृणां प्रतिसंविदां षण्णां पारमितानां दशानां तथागतबलानाम् अष्टादशानामावेणिकानां बुद्धधर्माणां दायकः॥ इति प्रतिपत्त्यववादः॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। कथं युज्यमानो[4] भगवन् बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। इह शारिपुत्र बोधिसत्त्वो महासत्त्वो रूपशून्यतायां युक्तो युक्त इति वक्तव्यः[5]।

---

1 For दे० read देवाः प्रज्ञायन्ते.

2 For लो० read लोके उत्पद्यन्ते.

3 For … read p. 42, ll. 6-12.

4 $A_2$ प्रयुज्यमानो ; cf. Ś. 136.

5 $C_2$ रूपं शून्यतया युक्तायुक्त इति वक्तव्यम्। $C_2$ retains युक्तायुक्त and वक्तव्यं throughout. Cf. Ś. 136 f. युक्तोयुक्तः.

वेदनाशून्यतायां युक्तो युक्त इति वक्तव्यः। संज्ञाशू[1]०। संस्कारशू०। विज्ञानशू०।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वश्चक्षुःशू०। श्रोत्रशू०। घ्राणशू०। जिह्वाशू०। कायशू०। मनःशू०। रूपशू०। शब्दशू०। गन्धशू०। रसशू०। स्प्रष्टव्यशू०। धर्मशू०। चक्षुर्विज्ञानधातुशू०। श्रोत्रविज्ञानधातुशू०। घ्राणविज्ञानधातुशू०। जिह्वाविज्ञानधातुशू०। कायविज्ञानधातुशू०। मनोविज्ञानधातुशू०। दुःखशू०। समुदयशू०। निरोधशू०। मार्गशू०। अविद्याशू०। संस्कारशू०। विज्ञानशू०। नामरूपशू०। षडायतनशू०। स्पर्शशू०। वेदनाशू०। तृष्णाशू०। उपादानशू०। भवशू०। जातिशू०। जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासशू०॥

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नध्यात्मशू०। बहिर्धाशू०। अध्यात्मबहिर्धाशू०। यावत् परभावशून्यतायां युक्तो युक्त इति वक्तव्यः। एवं हि शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नासु सर्वासु शून्यतासु युक्तो युक्त इति वक्तव्यः। स आभिः शून्यताभिः प्रज्ञापारमितायां चरन्न [2]तावद्बोधिसत्त्वो महासत्त्वो युक्त इति वक्तव्योऽयुक्त इति[3]। तत्कस्य हेतोः। तथाहि न स रूपं न वेदनां न संज्ञां न संस्कारान्न विज्ञानं युक्तमिति वा अयुक्तमिति वा समनुपश्यति॥ इति दुःख[4]सत्याववादः॥

स न रूपमुत्पादधर्मि वा निरोधधर्मि वा समनुपश्यति। न

---

1 For शू० read शून्यतायां युक्तो युक्त इति वक्तव्यः.

2 $C_1$ तावीधि०

3 $C_2$ युक्तायुक्त इति वक्तव्यः। मप्याऽयुक्त इति।

4 A दुष्ख

वेदनामुत्पादधर्मिणीं वा निरोधधर्मिणीं वा समनुपश्यति न संज्ञामुत्पाद-धर्मिणीं …[1]। न संस्कारानुत्पादधर्मिणो …[1]। न विज्ञानमुत्पाद-धर्मि …[1]। न रूपं[2] संक्लेशधर्मि वा व्यवदानधर्मि वा समनुपश्यति। न वेदनां[3] संक्लेशधर्मिणीं वा व्यवदानधर्मिणीं वा समनुपश्यति। न संज्ञां …[4]। न संस्कारान् …[4]। न विज्ञानम् …[4]।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वो न रूपं वेदनायां[5] समवसरतीति समनुपश्यति। न वेदना संज्ञायां स०[6]। न संज्ञा संस्कारेषु स०। न संस्कारा विज्ञाने स०। न विज्ञानं धर्मे स०। न धर्मः कश्चिद्धर्मे समवसरतीति समनुपश्यति। तत्कस्य हेतोः। न हि कश्चि-द्धर्मः कश्चिद्धर्मे समवसरति[7] प्रकृतिशून्यतामुपादाय। तत्कस्य हेतोः। तथाहि शारिपुत्र या रूपस्य शून्यता न तद्रूपम्। या वेदनायाः शून्यता न सा वेदना। या संज्ञायाः शून्यता न सा संज्ञा। या संस्काराणां शून्यता न ते संस्काराः। या विज्ञानस्य शून्यता न तद्विज्ञानम्। तत्कस्य हेतोः। तथाहि या रूपशून्यता न सा रूपयति। या वेदनाशून्यता न सा वेदयति। या संज्ञाशून्यता न सा संजानीते। या संस्कारशून्यता

---

1 For … read वा निरोधधर्मि or ०धर्मिणीं or ०र्मिणो वा समनुपश्यति.

2 $C_2$ रूपः

3 $C_2$ वेदनाः

4 For … read संक्लेशधर्मि (or ०र्मिणीं with संज्ञा or ०र्मिणो with संस्कारान्) वा व्यवदानधर्मि (or ०र्मिणीं with संज्ञा or ०र्मिणो with संस्कारान्) वा समनुपश्यति।

5 Ś. 139 has न रूपं वेदनया सह समवसरतीति.

6 For स० read समवसरतीति ( वा ०न्तीति with संस्काराः ) समनु-पश्यति.

7 $C_2$ adds समनुपश्यति.

न साभिसंस्करोति। या विज्ञानशून्यता न सा विजानाति। तत्कस्य हेतोः। तथाहि शारिपुत्र नान्यद्रूपमन्या शून्यता। नान्या शून्यता अन्यद्रूपम्। रूपमेव शून्यता शून्यतैव रूपम्। नान्या वेदना अन्या शून्यता। नान्या शून्यता अन्या वेदना। वेदनैव शून्यता शून्यतैव वेदना। नान्या संज्ञा अन्या शून्यता। नान्या शून्यता अन्या संज्ञा। संज्ञैव शून्यता शून्यतैव संज्ञा। नान्ये संस्कारा अन्या शून्यता। नान्या शून्यता अन्ये संस्काराः। संस्कारा एव शून्यता शून्यतैव संस्काराः। नान्यद् विज्ञानमन्या शून्यता। नान्या शून्यता अन्यद्विज्ञानम्। विज्ञानमेव शून्यता शून्यतैव विज्ञानम्। इति समुदयसत्याववादः॥

शून्यता शारिपुत्र नोत्पद्यते न निरुध्यते। न संक्लिश्यते न व्यवदायते। न हीयते न वर्धते। नातीता नागता न प्रत्युत्पन्ना। या च ईदृशी न तत्र रूपं न वेदना न संज्ञा न संस्काराः न विज्ञानं न पृथिवीधातुर्नाब्धातुर्न तेजोधातुर्न वायुधातुर्नाकाशधातुर्न विज्ञानधातुर्न चक्षुरायतनं[1] न रूपायतनं न श्रोत्रायतनं न शब्दायतनं न घ्राणायतनं न गन्धायतनं न जिह्वायतनं न रसायतनं न कायायतनं न स्प्रष्टव्यायतनं न [2]मनआयतनं न धर्मायतनम्। न चक्षुर्धातुर्न रूपधातुर्न चक्षुर्विज्ञानधातुः। न श्रोत्रधातुर्न शब्दधातुर्न श्रोत्रविज्ञानधातुः। न घ्राणधातुर्न गन्धधातुर्न घ्राणविज्ञानधातुः। न जिह्वाधातुर्न रसधातुर्न जिह्वाविज्ञानधातुः। न कायधातुर्न स्प्रष्टव्यधातुर्न कायविज्ञानधातुः। न मनोधातुर्न धर्मधातुर्न मनोविज्ञानधातुः। [3]नाविद्योत्पादो नाविद्यानिरोधः। न संस्कारोत्पादो न संस्कारनिरोधः। And so on with regard to each of the terms of the pratītya-samutpāda formulæ[4]

---

1 This list of āyatanas does not occur in Ś. 140.

2 $C_2$ मनाय॰ 3 A न विद्या॰

4 For enumeration, see p. 44, ll. 8-11.

up to न जरामरणशोकपरिदेव-दुःखदौर्मनस्योपायासोत्पादो न जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासनिरोधः न दुःखं न समुदयो न निरोधो न मार्गो न प्राप्तिर्नाभिसमयो न स्रोतआपन्ना न स्रोतआपत्तिफलम् न सकृदागामी न सकृदागामिफलम्। नानागामी नानागामिफलं नार्हत्त्वं नार्हत्त्वफलम् न प्रत्येकबुद्धा न प्रत्येकबोधिः न बुद्धो न बोधिः। एवं हि शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् युक्तो युक्त इति वक्तव्यः। इति निरोधसत्यावबादः॥ ३

स प्रज्ञापारमितायां चरन् दानपारमितायां युक्त इति वा अयुक्त इति वा आत्मानं समनुपश्यति। न शीलपारमितायां युक्त इति वा अयुक्त इति वा समनुपश्यति। न क्षान्तिपा०[1]। न वीर्यपा०। न ध्यानपा०। न प्रज्ञापा०[2]। न रूपे युक्त इति वा अयुक्त इति वा समनुपश्यति। न वेदनायां युक्त ...[3]। न संज्ञायां युक्त ···। न संस्कारेषु युक्त ···। न विज्ञाने युक्त ···। न चक्षुषि युक्त ···। न श्रोत्रे युक्त ···। न घ्राणे युक्त ···। न जिह्वायां युक्त ···। न काये युक्त ···। न मनसि युक्त ···। न रूपे युक्त ···। न शब्दे युक्त ···। न गन्धे युक्त ···। न रसे युक्त ···। न स्प्रष्टव्ये युक्त ..। न धर्मे युक्त ···। न स्मृत्युपस्थानेषु युक्त ···। न सम्यक्प्रहाणेषु युक्त। न ऋद्धिपादेषु युक्त ...। नेन्द्रियेषु युक्त ···। न बलेषु युक्त ···। न बोध्यङ्गे युक्त ···। न मार्गेषु युक्त ...। न चतुर्षु सत्येषु युक्त ···। न चतुर्षु वैशारद्येषु युक्त ···। न चतसृषु प्रतिसंवित्सु युक्त ···। नाभिज्ञासु युक्त ...। न दशसु तथागतबलेषु युक्त ···। नाष्टादशस्वावेणिकेषु

---

1 For पा० read पारमितायां युक्त इति वा अयुक्त इति वा समनुपश्यति.

2 This list of Pāramitās does not occur in Ś. 141.

3 For युक्त ··· read युक्त इति वा अयुक्त इति वा समनुपश्यति.

बुद्धधर्मेषु युक्त ···[1] । यावन्न सर्वाकारज्ञतायां युक्त ··· । न सर्वज्ञज्ञाने युक्त इति वा अयुक्त इति वा समनुपश्यति । तदनेनापि ते शारिपुत्र पर्यायेणैवं वेदितव्यं बोधिसत्त्वो महासत्त्व एवं प्रज्ञापारमितायां युक्तो युक्त इति वक्तव्यः ॥

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न शून्यतां शून्यतया योजयति[2] न शून्यतायोगम् । नानिमित्तमनिमित्तेन[3] योजयति नानिमित्तयोगम् । [4]नाप्रणिहितमप्रणिहितेन योजयति नाप्रणिहितयोगम् । तत्कस्य हेतोः । तथाहि शून्यता न योगो[5] नायोगः एवमनिमित्तमप्रणिहितं न योगो[5] नायोगः । एवं युज्यमानः शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्तो युक्त इति वक्तव्यः ।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् धर्माणां स्वलक्षणशून्यतामवतरति । एवमवतरन्[6] रूपं योजयति न वियोजयति न वेदनां योजयति न वियोजयति । न संज्ञां यो०[7] । न संस्कारान् यो० । न विज्ञानं यो० । न रूपं पूर्वान्तेन यो० । पूर्वान्तमेव न समनुपश्यति । न रूपमपरान्तेन यो० । अपरान्तमेव न समनुपश्यति । न रूपं प्रत्युत्पन्नेन यो० । प्रत्युत्पन्नमेव न समनुपश्यति । न वेदनां पूर्वान्तेन यो० । पूर्वान्तमेव न समनुपश्यति । न वेदना-

---

1 For युक्त ··· read युक्त इति वा अयुक्त इति वा समनुपश्यति.

2 $C_2$ न शून्यतायां शून्यतया योजयति

3 A & $C_1$ नानिमित्तमानिमित्तेन

4 A न प्रणिहित०

5 $C_2$ योगो

6 $C_2$ एवमेव ते चरं न

7 For यो० read योजयति न वियोजयति.

मपरान्तेन यो०[1] अपरान्तमेव न समनुपश्यति। न वेदनां प्रत्युत्पन्नेन योजयति न वियोजयति प्रत्युत्पन्नमेव न समनुपश्यति। And so on with regard to the other three skandhas संज्ञां, संस्कारान्, विज्ञानम्[2]।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् पूर्वान्तमपरान्तेन योजयति[3] नापरान्तं पूर्वान्तेन योजयति। न प्रत्युत्पन्नं पूर्वान्तेन वा अपरान्तेन वा योजयति। नापरान्तं पूर्वान्तेन वा प्रत्युत्पन्नेन वा योजयति। न पूर्वान्तमपरान्तेन वा प्रत्युत्पन्नेन वा योजयति। अध्वशून्यतामुपादाय एवं युज्यमानः शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् एवं युज्यते यथा युज्यमानो न सर्वाकारज्ञतामतीतेन योजयति। अतीतमेव न समनुपश्यति कथमतीतेन सर्वाकारज्ञतां योजयति। न सर्वाकारज्ञतामनागतेन योजयति। अनागतमेव न समनुपश्यति कथमनागतेन सर्वाकारज्ञतां योजयति। न सर्वाकारज्ञतां प्रत्युत्पन्नेन योजयति। प्रत्युत्पन्नमेव न समनुपश्यति कथं प्रत्युत्पन्नेन सर्वाकारज्ञतां योजयति। एवं युज्यमानः शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः॥

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न

---

1 For यो० read योजयति न वियोजयति.

2 I. e., in the above formulæ रूपं or वेदनां is replaced by संज्ञां, संस्कारान् and विज्ञानम्.

3 $C_2$ adds न वियोजयति.

रूपं सर्वाकारज्ञतया योजयति रूपमेव न समनुपश्यति। न वेदनां सर्वाकारज्ञतया योजयति वेदनामेव न समनुपश्यति। न संज्ञां …[1]। न संस्कारान् …। न विज्ञानं …। न चक्षुः …। न श्रोत्रं …। न घ्राणं …। न जिह्वां …। न कायं …। न मनः …। न रूपं …। न शब्दान् …। न गन्धान् …। न रसान् …। न स्प्रष्टव्यं …। न धर्मान् …। एवं युज्यमानः शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न दानपारमितां सर्वाकारज्ञतया योजयति दानपारमितामेव न समनुपश्यति। न शीलपारमितां सर्वाकारज्ञतया योजयति शीलपारमितामेव न समनुपश्यति। And so on with each of the Pāramitās, each of the Bodhipakṣīya-dharmas, each of the attributes of the Buddha.[2] नाष्टादशावेणिकान् बुद्धधर्मान् सर्वाकारज्ञतया योजयति अष्टादशावेणिकान् बुद्धधर्मानेव न समनुपश्यति। एवं युज्यमानः शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः।

---

1 For … read the previous formulæ replacing रूपं or वेदनाम् by the corresponding term from among संज्ञां, संस्कारान्, विज्ञानम्, चक्षुः, श्रोत्रम् up to धर्मान्.

2 In the above formulæ, substitute for दानपारमिता or शीलपारमिता each of the other four Pāramitās, viz. क्षान्ति, वीर्य, ध्यान and प्रज्ञा, each of the following Bodhipakṣīya-dharmas, viz. स्मृत्युपस्थानानि, सम्यक्प्रहाणानि, ऋद्धिपादान्, इन्द्रियाणि, बलानि, बोध्यङ्गानि, मार्गान् and each of the following attributes of the Buddha, viz. प्रतिसंविदः, वैशारद्यानि, अभिज्ञाः, दशतथागतबलानि।

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न बुद्धं सर्वाकारज्ञतया योजयति बुद्धमेव न समनुपश्यति। न सर्वाकारज्ञतां बुद्धेन योजयति सर्वाकारज्ञतामेव[1] न समनुपश्यति। न बोधिं सर्वाकारज्ञतया योजयति बोधिमेव न समनुपश्यति। न सर्वाकारज्ञतां[2] बोध्या योजयति सर्वाकारज्ञतामेव न समनुपश्यति। तत् कस्य हेतोः। बुद्ध एव सर्वाकारज्ञता सर्वाकारज्ञतैव[3] बुद्धः। बोधिरेव सर्वाकारज्ञता[4] सर्वाकारज्ञतैव बोधिः। एवं युज्यमानः शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः। इति बुद्धरत्नाववादः॥

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न रूपं भवतीति योजयति न रूपं विभवतीति योजयति[5]। न वेदना भवतीति योजयति न वेदना विभवतीति योजयति। And so on with संज्ञा, संस्काराः and विज्ञानम्[6]। न रूपं नित्यमिति योजयति न रूपमनित्यमिति योजयति। न रूपं सुखमिति योजयति न रूपं दुःखमिति योजयति। न रूपमात्मेति योजयति न रूपमनात्मेति योजयति। न रूपं शान्तमिति योजयति न रूपमशान्तमिति योजयति। न वेदना नित्येति योजयति न वेदना अनित्येति योजयति। न वेदना सुखेति योजयति न वेदना दुःखेति

---

1 $C_2$ ०ज्ञतायाम्     2 $C_2$ ०ज्ञतया

3 $C_1$ ०ज्ञातैव०

4 $C_1$ ज्ञतया ; $C_2$ adds योजयति after ज्ञता.

5 $C_2$ omits the repeated form न रूपं भवतीति in all the items & $C_1$ in some.

6 Substitute, in the previous formulæ for रूपं or वेदना, संज्ञा, संस्काराः and विज्ञानम् making the verb plural with संस्काराः.

योजयति । न वेदना आत्मेति योजयति न वेदना अनात्मेति योजयति । न वेदना शान्तेति योजयति न वेदना अशान्तेति योजयति । न संज्ञा etc.[1] । न संस्कारा नित्या इति योजयति न संस्कारा अनित्या इति योजयति । न संस्काराः सुखा इति योजयति न संस्कारा दुःखा इति योजयति । न संस्कारा आत्मान इति योजयति न संस्कारा अनात्मान इति योजयति । न संस्काराः शान्ता इति योजयति न संस्कारा अशान्ता इति योजयति । न विज्ञानं etc.[2] । न रूपं शून्यमिति योजयति न रूपमशून्यमिति योजयति । न रूपं सनिमित्तमिति वा चरति न रूपमनिमित्तमिति वा चरति । न रूपं सप्रणिहितमिति वा चरति न रूपमप्रणिहितमिति वा चरति । न वेदना शून्येति वा चरति न वेदना अशून्येति वा चरति । न वेदना सनिमित्तेति वा चरति न वेदना अनिमित्तेति वा चरति । न वेदना सप्रणिहितेति वा चरति न वेदना अप्रणिहितेति वा चरति । न संज्ञा शून्या etc.[3] । न संस्काराः शून्याः etc.[3] । न विज्ञानं शून्यं etc.[4] । य एवं चरति स प्रज्ञापारमितायां चरतीति नोपैति न चरतीति नोपैति चरति च न चरति चेति नोपैति नैव चरति न[5] न चरतीति नोपैति । एवं चरन् शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां युक्त इति वक्तव्यः ।

---

1 Here replace वेदना by संज्ञा.

2 Replace रूपं of the previous formulæ (p. 51, ll. 13-16) by विज्ञानम्.

3 Replace वेदना of the preceding formulæ by संज्ञा & संस्काराः.

4 Replace रूपम् of the preceding formulæ (ll. 8-10) by विज्ञानम्.

5 C. drops one न.

पुनरपरं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न दानपारमितायाः[1] कृतशः प्रज्ञापारमितायां चरति। न शीलपारमितायाः कृतशः प्रज्ञापारमितायां चरति। न क्षान्तिपारमितायाः कृ०[2]। न वीर्यपरिमितायाः कृ०। न ध्यानपारमितायाः कृ०। न प्रज्ञापारमितायाः कृ०। नाविनिवर्तनीयभूमेः कृ०। न सत्त्वपरिपाकहेतोः कृ०। न बुद्धक्षेत्रपरिशुद्धिहेतोः कृ०। न दशानां तथागतबलानां कृ०। न चतुर्णां वैशारद्यानां कृ०। न चतसृणां प्रतिसंविदां कृ०। नाष्टादशानामावेणिकानां बुद्धधर्माणां कृ०। नाध्यात्मशून्यतायाः कृ०। न बहिर्धाशून्यतायाः कृ०। नाध्यात्मबहिर्धाशून्यतायाः कृ०। न शून्यताशून्यतायाः कृ०। न महाशून्यतायाः कृ०। न परमार्थशून्यतायाः कृ०। न संस्कृतशून्यतायाः कृ०। नात्यन्तशून्यतायाः कृ०। नानवराग्रशून्यतायाः कृ०। नानवकारशून्यतायाः कृ०। न प्रकृतिशून्यतायाः कृ०। न सर्वधर्मशून्यतायाः कृ०। न स्वलक्षणशून्यतायाः कृ०। नानुपलम्भशून्यतायाः कृ०। नाभावस्वभावशून्यतायाः कृ०। न भावशून्यतायाः कृ०। नाभावशून्यतायाः कृ०। न स्वभावशून्यतायाः कृ०। न परभावशून्यतायाः कृ०। न तथतायाः कृ०। न धर्मधातोः कृ०। न भूतकोटिः कृ०। तत् कस्य हेतोः। नहि बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् कस्यचिद्धर्मस्य संभेदं समनुपश्यति। एवं शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् न दिव्यस्य चक्षुषः कृतशः प्रज्ञापारमितायां चरति। न दिव्यस्य श्रोत्रस्य कृतशः प्रज्ञापारमितायां चरति। न परचित्तज्ञानस्य कृतशः प्रज्ञापारमितायां चरति।

---

1 $C_2$ ॰तायां

2 For कृ॰ read कृतशः प्रज्ञापारमितायां चरति। Ś. 250 has कृते for कृतशः.

न पूर्वनिवासानुस्मृतेः कृतशः प्रज्ञापारमितायां चरति। न ऋद्धिविधेः कृतशः प्रज्ञापारमितायां चरति। तत् कस्य हेतोः। तथाहि प्रज्ञापारमितायां चरन् प्रज्ञापारमितामेव न समनुपश्यति। कुत एव[1] बोधिसत्त्वं कुत एव सर्वाकारं सर्वाभिज्ञाः। एवं हि शारिपुत्र बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः[1]।

पुनरपरं शारिपुत्र बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो नैवं भवति। अहं दिव्येन चक्षुषा पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं ज्ञास्यामीति दिव्येन श्रोत्रेणैषां शब्दान् श्रोष्यामीति तेषामेव च चित्तानि ज्ञास्यामीति। तेषामेव च पूर्वनिवासमनुस्मृत्य ऋद्ध्या गत्वा धर्मं[2] देशयिष्यामीति। एवं शारिपुत्र बो॰[3] महासत्त्वस्य नैवं भवति। अहं दिव्येन चक्षुषा दक्षिणस्यां दिशि and so on with regard to all other directions up to ऊर्ध्वं दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सत्त्वानां च्युतोपपादं ज्ञास्यामीति दिव्येन श्रोत्रेणैषां शब्दान्[4] श्रोष्यामीति तेषामेव च चित्तानि ज्ञास्यामीति। तेषामेव च पूर्वनिवासमनुस्मृत्य ऋद्ध्या गत्वा धर्मं देशयिष्यामीति।

---

1 $C_2$ वक्तव्यम्

2 $C_2$ पूर्वनिवासस्य समनुस्मृति ऋद्ध्या धर्मम्

3 Henceforth बो॰ will stand for बोधिसत्त्व with the case-ending that is affixed to its complementary word महासत्त्व, e. g., when बो॰ goes with महासत्त्वस्य, it will denote बोधिसत्त्वस्य, or, when बो॰ goes with महासत्त्वः, it will denote बोधिसत्त्वः.

4 A शब्दौ

एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्नप्रमेयानसंख्येयान् अपरिमाणान् सत्त्वान् परिनिर्वापयन् युक्त इति वक्तव्यः[1]। एवं हि शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो मारः [2]पापीयानवतारं न[3] लभते। सर्वे चास्यान्येऽपि लौकिका ये केचित् क्लेशास्ते सर्वे दलिता भवन्ति। येऽपि ते[4] शारिपुत्र पूर्वस्यां दिशि बुद्धा भगवन्तो गङ्गानदीवालुकोपमेषु लोकधातुषु तिष्ठन्ति ध्रियन्ते यापयन्ति[5] धर्मं च देशयन्ति ये च तेषां श्रावका ये च[6] प्रत्येकबुद्धा ये च चातुर्महाराजकायिका देवास्त्रयस्त्रिंशा यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनो ब्रह्मपार्षद्या ब्रह्मपुरोहिता महाब्रह्माणः परीत्ताभा अप्रमाणाभा आभास्वराः परीत्तशुभा अप्रमाणशुभाः शुभकृत्स्ना अनभ्रकाः पुण्यप्रसवा बृहत्फला असंज्ञिसत्त्वाः शुद्धावासा अवृहा[7] अतपाः सुदृशाः सुदर्शना अकनिष्ठा देवास्तेऽपि तं बो० महासत्त्वं रक्षन्ति। मा खल्वस्य बो० महासत्त्वस्य कश्चिदन्तरायं कार्षीत्। येऽप्यस्य केचित् कायिका दोषास्तेऽप्यस्य दृष्टधार्मिका भवन्ति[8]। तत् कस्य हेतोः। तथाहि स सर्वसत्त्वान् मैत्र्या स्फरति[9]। येऽपि ते शारिपुत्र दक्षिणस्यां दिशि etc. as before ll. 5—15 up to स्फरति; so also with regard

---

1 $C_2$ वक्तव्यम्

2 $C_2$ पापियान्

3 A ०तारम्

4 $C_2$ drops it.

5 $C_2$ puts all the verbs in the singular.

6 A & $C_2$ drop ये च here but put it in the repetitions.

7 $C_2$ in the first two lists of gods retains the form अवृहा in all the other lists it makes अव्यूहा.

8 Ś. 256 तेऽपि तस्य दृष्ट एव धर्मे सर्वेण सर्वं न भवन्ति

9 Ś. 256 स्फुरति

to पश्चिमायां दिशि and उत्तरस्यां दिशि। येऽपि ते शारिपुत्र उत्तरपूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मं च देशयन्ति। ये च तेषां श्रावका ये च प्रत्येकबुद्धा ये च चातुर्महाराजकायिका देवा यावदकनिष्ठा देवास्तेऽपि तस्य बो० महासत्त्वस्य रक्षां कुर्वन्ति। मा खल्वस्य बो० महासत्त्वस्यान्तरायो भूदिति and so on with regard to पूर्वदक्षिणस्यां दक्षिणपश्चिमायां पश्चिमोत्तरस्याम् अधस्तात् and ऊर्ध्वं दिशि।

पुनरपरं शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायां चरतः अल्पकृच्छ्रेण धारणीमुखानि समाधिमुखानि चामुखीभवन्ति सर्वोपपत्त्यायतनेषु[1] च तथागतानर्हतः सम्यक्संबुद्धानारागयति न तु कदाचिद् बुद्धैर्भगवद्भिर्विरहितो भवति यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्ध इति। एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्[2] युक्त इति वक्तव्यः।

पुनरपरं शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायां[3] चरतो नैवं भवति। अस्ति स कश्चिद्धर्मो यो धर्मः[4] सह संयुज्यते वा विसंयुज्यते[5] वा।

पुनरपरं शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो नैवं भवति। कश्चिदहं[6] क्षिप्रतरं[7] धर्मधातुमभिसंबुध्येयं वा न वाभि-

---

1 $C_2$ सर्वोपपत्त्यायतनेषु

2 All Mss. drop चरन् here.

3 $C_2$ drops from युक्त up to प्रज्ञापारमितायां.

4 A धर्मं:

5 $C_2$ बोधिसंयुज्यते

6 $C_2$ कश्चिदहं

7 A drops the anusvâra.

संबुध्येयम्[1]। तत् कस्य हेतोः। नहि धर्मधातुर्धर्मधातुनाभिसंबुध्यते। एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः।

पुनरपरं शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् न किञ्चिद्धर्मधातो[2]र्व्यतिरिक्तं समनुपश्यति नापि धर्मधातोर्धर्मनानाकरणं करोति। नाप्यस्यैवं भवति अयं धर्मधातुरेवं प्रतिविध्यते न वा प्रतिविध्यत इति। तथाहि न स [3]कञ्चिद्धर्मं समनुपश्यति येन धर्मेण तां धर्मतां प्रतिविध्येदिति। तथाहि स न धर्मधातुं शून्यमिति योजयति नाशून्यमिति योजयति। एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् युक्त इति वक्तव्यः[4]।

पुनरपरं शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् न चक्षुर्धातुं शून्यतया योजयति न शून्यतां चक्षुर्धातुना योजयति। न रूपधातुं शून्यतया योजयति न शून्यतां रूपधातुना योजयति। न चक्षुर्विज्ञानधातुं शून्यतया योजयति न शून्यतां चक्षुर्विज्ञानधातुना योजयति।

---

1 $C_2$ ०बुध्यते

2 $C_2$ कश्चित् धर्मधातो; A किञ्चि०; Ś. 162 धातुव्यतिरिक्तं

3 $C_2$ कश्चित्०

4 $C_2$ वक्तव्य'

न श्रोत्र-
न शब्द-
न श्रोत्रविज्ञान-
न घ्राण-
न गन्ध-
न घ्राणविज्ञान-
न जिह्वा-
न रस-
न जिह्वाविज्ञान-
न काय-
न स्प्रष्टव्य-
न कायविज्ञान-
न मनो-
न धर्म-
न मनोविज्ञान-
-धातुं शून्यतया योजयति

न शून्यतां श्रोत्र-
,, शब्द-
,, श्रोत्रविज्ञान-
,, घ्राण-
,, गन्ध-
,, घ्राणविज्ञान-
,, जिह्वा-
,, रस-
,, जिह्वाविज्ञान-
,, काय-
,, स्प्रष्टव्य-
,, कायविज्ञान-
,, मनो-
,, धर्म-
,, मनोविज्ञान-
-धातुना योजयति।

तत्कस्य हेतोः। एष[1] हि शारिपुत्र परमयोगो[2] बो० महासत्त्वस्य यदुत शून्यतायोगः। शून्यतायां शारिपुत्र चरन् बो० महासत्त्वो[3] न श्रावकप्रत्येकबुद्धभूमौ पतति बुद्धक्षेत्रं परिशोधयति सत्त्वान् परिपाचयति क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते।

ये केचिच्छारिपुत्र बो० महासत्त्वस्य योगास्तेषां प्रज्ञापारमिता[4] योगोऽग्र आख्यायते श्रेष्ठ[5] आख्यायते वरः प्रवर उत्तमोऽनुत्तरो[6]ऽसमोऽसमसमः प्रणीत आख्यायते। तत्कस्य हेतोः। निरुत्तरो ह्येषः शारिपुत्र

---

1 $C_2$ एषा
2 $C_2$ परमो योगो ; Ś.214 परमो योगो
3 $C_2$ ०सत्त्वेन
4 $C_2$ ०मितायां योगो०
5 $C_2$ ज्येष्ठ
6 A निरुत्तरो०

योगो यदुत प्रज्ञापारमितायोगः शून्यतायोगः[1] [2]अनिमित्तयोगः अप्रणिहितयोगः। एवं युज्यमानः शारिपुत्र बो॰ महासत्त्वो व्याकृत इति धारयितव्यः। आसन्नीभूतो व्याकरणस्य[3]। एवं युज्यमानः शारिपुत्र बो॰ महासत्त्वः अप्रमेयाणामसंख्येयानां सत्त्वानाम् अर्थं करिष्यति न चास्यैवं भविष्यति मां बुद्धा भगवन्तो व्याकरिष्यन्तीति। अहमासन्नीभूतो व्याकरणस्येति। अहं बुद्धक्षेत्रं परिशोधयिष्यामीति[4]। अहं सत्त्वान् परिपाचयिष्यामीति। अहमनुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मचक्रं प्रवर्तयिष्यामीति। तत्कस्य हेतोः। तथाहि स धर्मधातुं न विविक्तीकरोति न च धर्मधातोरन्यधर्मं समनुपश्यति यः प्रज्ञापारमितायां चरेत्[5] यो वा बुद्धैर्भगवद्भिर्व्याक्रियेत[6] अनुत्तरायां सम्यक्संबोधौ। तत्कस्य हेतोः। तथाहि बो॰ महासत्त्वस्य प्रज्ञापारमितायां[7] चरतो न सत्त्वसंज्ञोत्पद्यते। तत्कस्य हेतोः। तथाह्यत्यन्ततया सत्त्वो नोत्पद्यते[8] न निरुध्यते अनुत्पादानिरोधधर्मत्वात्। यस्य च नोत्पादो न निरोधः स कथं प्रज्ञापारमितायां चरिष्यति। एवं चरन् बो॰ महासत्त्वः सत्त्वानुत्पादतया प्रज्ञापारमितायां चरति। सत्त्वशून्यतया प्रज्ञापारमितायां चरति। सत्त्वानुपलब्ध्या[9] प्रज्ञापारमितायां चरति। सत्त्वविविक्ततया प्रज्ञापारमितायां चरति। एवं हि शारिपुत्र बो॰ महासत्त्वानां परमयोगो[10] यदुत शून्यतायोगः सर्वानन्यान् योगानभिभूयावतिष्ठते[11]। अत्र हि शारिपुत्र योगे चरन् बो॰ महासत्त्वो

1 A ॰योगं
2 A & $C_2$ चानि॰
3 $C_2$ व्यकर्णस्य
4 $C_2$ ॰मिति
5 A ॰च्चरत्
6 $C_2$ व्यक्रयेत्
7 A & $C_1$ ॰मिता
8 A drops नो ; $C_1$ has सत्वा॰ ॰द्यन्ते.
9 $C_2$ drops सत्त्वशून्यतया प्रज्ञापारमितायां चरति and puts सर्वानुपलब्ध्या for सत्वानु॰.
10 A पर
11 A ॰भूयोव॰

महामैत्रीमभिनिर्हरति न च मात्सर्यचित्तमुत्पादयति। न दौःशील्यचित्तमु०[1]। न व्यापादचित्तमु०। न कुशीदचित्तमु०। न विक्षिप्तचित्तमु०। न दौष्प्रज्ञचित्तमु०॥ इति धर्म्मरत्नाववादः[2]॥

एवमुक्ते आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। यो भगवन् बो० महासत्त्वोऽनेन प्रज्ञापारमिताविहारेण विहरति स कुतश्च्युत[3] इहोपपद्यते। इतो वा च्युतः कुत्रोपपत्स्यते[4]। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। यः[5] शारिपुत्र बो० महासत्त्वोऽनेन प्रज्ञापारमिताविहारेण विहरति स इतश्च्युत इहैव बुद्धक्षेत्रे उपपद्यते अन्येभ्यो[6] वा बुद्धक्षेत्रेभ्यश्च्युतस्तुषितेभ्यो वा देवेभ्यश्च्युत[7] इहोपपद्यते॥ इति बोधिसत्त्वाष्टमकः[8]॥

तत्र शारिपुत्र योऽयं बो० महासत्त्वो मनुष्येभ्य एव च्युत्वा मनुष्याणामेव सभागतायामुपपद्यते[9] तस्य बो० [10]महासत्त्वस्याविनिवर्तनीयान् बो० महासत्त्वान् स्थापयित्वा [11]धन्धानीन्द्रियाणि भवन्ति। न च क्षिप्रं प्रज्ञापारमितायोगं समापद्यते। न चास्य धारणीमुखमभिमुखीभवति न च समाधिमुखम्। यत् पुनः शारिपुत्र एवं वदसि यो भगवन् बो० महासत्त्व इमं[12] प्रज्ञापारमिता[13]योगं समापद्यते स इतश्च्युतः कुत्रोपपत्स्यत इति। यः शारिपुत्र बो० महासत्त्व इमं प्रज्ञापारमितायोगं समापद्यते स इतो बुद्धक्षेत्राच्युतः

---

1 For मु० read मुत्पादयति. 2 $C^2$ धर्म्मा

3 A ०त्येहो० ; $C_2$ ०तह्हो० ; cf. Ś. 266 ०तेही०

4 A ०पद्यते ; $C_2$ ०पस्यते ; $C_1$ द्यत्स्यते

5 $C_2$ drops शारिपुत्रमेतदवोचत्। यः. 6 $C_2$ ०भ्या

7 $C_2$ ०तोहोप० 8 A & $C_1$ ०सत्त्वोऽष्टमकः

9 $C_2$ ०गतामु० 10 $C_1$ & $C_2$ drop महासत्त्वस्य.

11 $C_2$ & Ś. 267 धन्याणी० 12 $C_2$ इयं

13 $C_1$ & $C_2$ मितायां

[1]बुद्धक्षेत्राद्बुद्धक्षेत्रं संक्रमिष्यति। तत्र बुद्धक्षेत्रे बुद्धान् भगवत[2] आरागयिष्यति[3]। न कदाचिद् बुद्धविरहितो भविष्यति॥ इति बोधिसत्त्वश्रद्धानुसारी[4]॥

यः पुनः शारिपुत्रायं बो॰ महासत्त्वोऽन्येभ्यो बुद्धक्षेत्रेभ्यश्च्युत इहोपपद्यते तस्य तीक्ष्णानीन्द्रियाणि भवन्ति[5]। स क्षिप्रमिमं योगमापद्यते यदुत प्रज्ञापारमितायोगम्। तस्य जातिव्यतिवृत्तस्याप्यमी गम्भीरगम्भीरा धर्मा अभिमुखीभवन्ति। स पश्चात् प्रज्ञापारमितायोगं समापद्यते। यत्र यत्र बुद्धक्षेत्रे उपपद्यते तत्र तत्र तथागतानर्हतः सम्यक्संबुद्धानारागयिष्यति। यः पुनः शारिपुत्र बो॰ महासत्त्वः तुषितेभ्यो देवेभ्यश्च्युत्वा इहोपपन्नो भवति तस्यापि पटुतराणीन्द्रियाणि भवन्ति। अविप्रमुषिताः[6] षट् पारमिताः सर्वधारणीसमाधिमुखानि चाभिमुखीभवन्ति॥ इति बोधिसत्त्वधर्मानुसारी॥

सन्ति शारिपुत्र बो॰ महासत्त्वाः प्रज्ञापारमितायां चरन्तो घटमाना व्यायच्छन्तः सत्त्वपरिपाकायोपायकौशल्यबलेन स्रोतआपत्तिफलं साक्षात् कुर्वन्ति। न च ते न मन्यन्ते[7] इति स्रोतआपन्नाः। सन्ति॰[8] महासत्त्वा अनुपायकुशला ये चत्वारि ध्यानानि निष्पादयन्ति पारमितासु च चरन्ति। तेन च ध्यानलाभेन दीर्घायुष्केषु देवेषूपपद्यन्ते सचेत् ततश्च्युत्वा[9] मनुष्येषु देवेषु वा उपपद्यन्ते बुद्धांश्च[10] भगवत आरागयि-

---

1 $C_2$ drops बुद्धक्षेत्रात्.

2 $C_1$ बुद्ध भगवता।

3 A ॰ष्यामि; $C_1$ गमिष्यति

4 $C_2$ ॰श्रद्धानु॰

5 $C_2$ ॰पन्नो भवन्ति। तस्यापि पटुतराणी भवति

6 A चविप्रे॰

7 $C^2$ मन्यते

8 For सन्ति read सन्ति शारिपुत्र बोधिसत्त्वा.

9 $C_1$ चेतश्च्युत्वा.

10 $C_1$ बुद्धाश्च

ष्यन्ति तेषामपि धन्वानो[1]न्द्रियाणि भवन्ति न तीक्ष्णानि[2]। सन्ति॰[3] महासत्त्वा ध्यानानि च समापद्यन्ते प्रज्ञापारमितायां च चरन्ति। ते चानुपायकौशल्येन ध्यानान्युत्सृज्य कामधातावुपपद्यन्ते तेषामपि शारिपुत्र बो॰ महासत्त्वानां धन्वानीन्द्रियाणि भवन्ति न तीक्ष्णानि॥ इति द्वितीयतृतीयफलप्रतिपन्नकः श्रद्धाधिमुक्तः॥

सन्ति॰ महासत्त्वाश्चत्वारि ध्यानान्युत्पाद्य चत्वार्यप्रमाणानि समापद्यन्ते। चतस्र आरूप्यसमापत्तीः[4] स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गान् समापद्यन्ते। महाकारुणिका उपायकौशल्येन[5] चोपपद्यन्ते न ध्यानवशेन नाप्रमाणवशेन नारूप्यसमापत्तिवशेन तत्र चोपपद्यन्ते यत्र तथागतानर्हतः सम्यक्संबुद्धानारागयिष्यन्ति। ते पुनः प्रज्ञापारमिताविहारेणाविरहिता इहैव भद्रकल्पे अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते[6]॥ इति द्वितीयतृतीयफलप्रतिपन्नका दृष्टिप्राप्तः॥

सन्ति॰ महासत्त्वा एकजातिप्रतिबद्धा ये प्रज्ञापारमितायां चरन्त उपायकौशल्येन[7] चत्वारि ध्यानानि समापद्यन्ते। चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तीः[8] स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गान् भावयन्ति। शून्यतासमाधिं समापद्यन्ते। [9]अनिमित्तसमाधिं समापद्यन्ते। अप्रणिहितसमाधिं समापद्यन्ते।

1 $C_2$ धन्यानी॰ throughout

2 $C_2$ always तीक्ष्णि ; A always तीक्षाणि

3 For सन्ति॰ read सन्ति शारिपुत्र बोधिसत्त्वाः.

4 $C_2$ ॰पत्ति  5 $C_1$ ॰लेन

6 $C_2$ puts most of the verbs in this page in singular.

7 $C_2$ ॰शल्य  8 $C_2$ ॰पत्तिः स स्मृत्या॰

9 All Mss. have चानिमित्तं ; cf. A.K.V.

न च तेषां वशेन गच्छन्ति संमुखीभूतांश्च[1] बुद्धान् भगवत आरागयित्वा तत्र ब्रह्मचर्यं चरित्वा पुनरेव तुषितानां देवानां सभागतायै[2] उपपद्यन्ते। ते[3] तत्र यावदायुस्तिष्ठन्ति[4]। ते तत्र यावदायुः स्थित्वा अहीनेन्द्रियाः स्मृतिमन्तः संप्रजानन्तो अनेकैर्देवकोटीनियुतशतसहस्रैः परिवृताः[5] पुरस्कृता इहोपपत्तिं दर्शयित्वा नानाबुद्धक्षेत्रेष्वनुत्तरां[6] सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति सकृदागामी ॥

सन्ति°[7] महासत्त्वाः षण्णामभिज्ञानां लाभिनो ये न कामधातौ न रूपधातौ[8] नारूप्यधातावुपपद्यन्ते। अपि तु बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामन्ति[9] तथागतानर्हतः सम्यक्संबुद्धान् सत्कुर्वन्तो गुरुकुर्वन्तो[10] मानयन्तः[11] पूजयन्तः। सन्ति° महासत्त्वाः [12]षण्णामभिज्ञानां लाभिनस्ते[13] ताभिरभिज्ञाभिर्विक्रीडन्तो[14] बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामन्ति[15] येषु बुद्धक्षेत्रेषु न श्रावकप्रत्येकबुद्धयानस्य[16] प्रज्ञप्तिरप्यस्ति। सन्ति° महासत्त्वाः षण्णामभिज्ञानां लाभिनस्ते ताभिरभिज्ञाभिर्विक्रीडन्तो बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामन्ति येषु[17] बुद्धक्षेत्रेष्व-

---

1 $C_2$ °भूता च  2 $C_2$ संभागतायै

3 A drops it.

4 $C_2$ drops it.  5 $C_2$ परिविता

6 $C_2$ °रायां.

7 For सन्ति° read सन्ति शारिपुत्र बोधिसत्त्वाः.  8 $C_1$ omits it.

9 $C_2$ सक्रामति

10 All Mss. have गुरु°.  11 $C_1$ मानयन्तो; $C_2$ मानयतः

12 A & $C_2$ have ष as खं.

13 $C_1$ & A लाभिन ते; $C_2$ लाभिनः ते  14 $C_2$ °डन्ते

15 $C_2$ क्रामेति  16 $C_1$ °बुद्धयान यानस्य

17 The passage between the marks 15 & 17 is not found in $C_2$.

मितमायुः। सन्ति॰[1] महासत्त्वाः षण्णामभिज्ञानां लाभिनः[2] ये लोकधातोर्लोकधातु'[3] संक्रामन्ति ते[4] तत्रोपसंक्रम्य यत्र न बुद्धशब्दो न धर्मशब्दो न सङ्घशब्दस्तत्रावस्थिताः बुद्धशब्दं च धर्मशब्दं च सङ्घशब्दं च सत्त्वानां संश्रावयन्ति[5]। त्रयाणां च रत्नानां वर्णं[6] भाषन्ते[7]। ते तेन बुद्धशब्देन धर्मशब्देन सङ्घशब्देन ततश्च्युता यत्र यत्र बुद्धा भगवन्तो भवन्ति ते[8] तत्र तत्रोपपद्यन्ते ॥ इति अनागामी ॥

सन्ति॰ महासत्त्वाश्चत्वारि ध्यानानि उत्पाद्य चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तीः[9] समापद्यन्ते[10] ते चोपायकौशल्येन समन्वागताः समाधिसमापत्तिभ्यो निवृत्य कामधातावुपपद्यन्ते[11] क्षत्रियमहाशालकुलेषु वा ब्राह्मणमहाशालकुलेषु[12] वा गृहपतिमहाशालकुलेषु वा उपपद्यन्ते सत्त्वपरिपाकाय ॥ इति अयं मनुष्यकुलं कुलः ॥

सन्ति॰ महासत्त्वाश्चत्वारि[13] ध्यानानि समापद्यन्ते चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तीः समापद्यन्ते। [14]तेऽप्युपायकौशल्यबलेन[15] ध्यानसमाधिसमापत्तिवशेन[16] वा चातुर्महाराजकायिकानामपि देवानां सभागतायै उपपद्यन्ते। त्रयस्त्रिंशानां यामानां [17]तुषितानां [18]निर्माणरतीनां परनिर्मितवशवर्तिनां सभागतायै उपपद्यन्ते। ते

---

1 For सन्ति॰ read सन्ति शारिपुत्र बोधिसत्त्वाः

2 $C_1$ & $C_2$ put a stop after this.

3 $C_2$ omits it.

4 $C_2$ ततोप॰

5 $C_2$ श्रावयति

6 A & $C_1$ omit anusvāra.

7 $C_2$ भाषते

8 $C_2$ omits it.

9 $C_2$ पत्ति

10 All Mss. omit it.

11 $C_2$ कामधातौ उप॰ ; $C_1$ ॰द्यते

12 Omitted by $C_1$.

13 $C_2$ सत्वा चत्वारि

14 $C_2$ तेषां

15 $C_2$ बल्येन

16 $C_2$ ॰पत्तिवश्येन

17 A तुषितानां

18 $C_1$ निर्माण

तत्र[1] स्थित्वा सत्त्वान् परिपाचयन्ति[2] बुद्धक्षेत्रं च परिशोधयन्ति बुद्धांश्च भगवत[3] आरागयन्ति। सन्ति०[4] महासत्त्वा[5]श्चत्वारि ध्यानानि उत्पाद्य चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तीः समापद्यन्ते[6]। ते ततश्च्युताः सन्त उपायकौशल्येन ब्रह्मलोके[7] यावदकनिष्ठे उपपद्यन्ते। ते तत्र[8] भवन्ति ब्रह्माणो महाब्रह्माणस्तेषु ब्रह्मभवनेषु तिष्ठन्ति[9]। ते तत्र स्थित्वा बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामन्ति[9]। ये च तेषु[10] बुद्धक्षेत्रेषु[11] तथागता अर्हन्तः सम्यक्संबुद्धास्तांस्तथागतान् धर्मचक्रप्रवर्तनायाध्येषयन्ति[12]॥ इति देवकुलं[13]कुलः॥

सन्ति० महासत्त्वा ये चतुर्णां ध्यानानां[14] लाभिनो यावदष्टादशानामावेणिकानां बुद्धधर्माणां लाभिनस्तेषां चानुरोधाय चरन्ति। चतुर्णामार्यसत्यानां लाभिनो न च तानि प्रतिविध्यन्ति। ते पुन बोधिसत्त्वा[15] महासत्त्वा एकजातिप्रतिबद्धा वेदितव्याः॥ इत्यकवीचिकः[16]॥

सन्ति० महासत्त्वा ये प्रथमचित्तोत्पादमुपादाय चतुर्णां ध्यानानां लाभिनो भवन्ति। चतुर्णामप्रमाणानां[17] लाभिनो भवन्ति। चतसृणामारूप्यसमापत्तीनां[18] लाभिनो भवन्ति। स्मृत्युपस्थान-सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गान् भावयन्ति। बलवैशारद्यप्रतिसंविदा·

---

1 $G_2$ ततोत्र 2 $C_2$ ०यति 3 $C_2$ बुद्धाश्च भगवन्तः

4 For सन्ति० read सन्ति शारिपुत्र बोधिसत्त्वाः.

5 A repeats it ; $C^2$ ०सत्त्वा च०

6 All Mss. omit समापद्यन्ते and have समापत्तीन्ते.

7 $C_1$ ०लोकं 8 $C_2$ तेत्र भवति

9 $C_2$ ०ति 10 $C_2$ ते for तेषु 11 A ०क्षेत्रे

12 $C_1$ ०वर्तना ध्यषयन्ति ; $C_2$ ०ध्योषयन्ति 13 $C_2$ कुरकुलः

14 No anusvāra in A 15 A तेषु नवांसत्त्वा

16 A & $C_1$ omit it ; $C_2$ ०वीचीकः

17 A, $C_1$ & $C_2$ no anusvāra 18 $C_2$ ०पत्तिनां

वेणिकबुद्धधर्मान् प्रतिलभन्ते[1]। उपायकौशल्येन ब्रह्मकायिकेषु देवेषु यावदकनिष्ठेषु देवेषूपपद्यन्ते। तत्र चानुत्तरां सम्यक्संबोधिमभिसंबुध्य सत्त्वानामर्थं[2] कुर्वन्ति ॥ इत्यन्तरापरिनिर्वायी[3] ॥

सन्ति॰[4] महासत्त्वा ये प्रथमचित्तोत्पादेनैवानुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते। धर्मचक्रं प्रवर्तयन्त्यप्रमेयाणामसंख्येयानां[5] सत्त्वानां चार्थं कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वान्ति[6] तेषां परिनिर्वृतानां कल्पं वा कल्पावशेषं[7] वा सद्धर्मस्तिष्ठति ॥ इत्युपपद्यपरिनिर्वायी ॥

सन्ति॰ महासत्त्वा ये षट्पारमितासु चरन्तो[8] लोकधातो[9]र्लोकधातुं[10] संक्रामन्ति। तत्र च सत्त्वान्[11] बोधये[12] प्रतिष्ठापयिष्यन्ति। ते नित्यमुद्युक्ताः सत्त्वानां कृतशो न[13] कदाचिदनर्थसंहितां वाचं भाषन्ते। सत्त्वानां कृतशो नित्यमुद्युक्ता बुद्धक्षेत्रेण[14] बुद्धक्षेत्रं संक्रामन्ति। तेऽपि बो॰ महासत्त्वाः सत्त्वानां कृतशोऽसंख्येयैरप्रमेयैः कल्पै[15]र्नानाबुद्धक्षेत्रेष्वनुत्तरां[16] सम्यक्संबोधिमभिसंबुध्यन्ते[17] ॥ इत्यभिसंस्कारपरिनिर्वायी ॥

सन्ति॰ महासत्त्वा ये प्रथमचित्तोत्पादेनैव [18]बोधिसत्त्वन्यासमवक्रामन्ति[19]। अविनिवर्तनीयभूमौ वा अवतिष्ठन्ते[17]। सर्वबुद्धधर्मान्

---

1 $C_2$ ॰लभते  2 A सत्त्वामार्मं; $C_1$ सत्त्वानामार्थ्यें

3 A & $C_1$ अन्तरापरनिर्वायी

4 For सन्ति॰ read सन्ति शारिपुत्र बोधिसत्त्वाः.

5 $C_2$ ॰याणामार्थं omitting सत्त्वानां  6 $C_2$ परिनिर्वापि

7 $C_2$ omits it.  8 $C_2$ चरती  9 A & $C_1$ लोकधातौ

10 A लोकधातौं  11 A सन्; $C_2$ स्त्वान्

12 $C_2$ बोधिये  13 $C_2$ नच कदा॰  14 $C_2$ omits it.

15 $C_1$ omits it.  16 $C_2$ ॰रयां  17 $C_2$ ते

18 $C_2$ बोधिसत्त्वा महासत्त्वान्यास  19 $C_2$ ॰ति

वा[1] समुदानयन्ति ॥ सन्ति॰ महासत्त्वा[2] ये प्रथमचित्तोत्पादेनैव प्रज्ञापारमितायां योगमापद्यन्ते। तेऽनेकैर्बोधिसत्त्व[3]कोटीनियुतशतसहस्रैः सार्धं बुद्धक्षेत्राद्बुद्धक्षेत्रं स्वबुद्धक्षेत्रपरिशोधनाय[4] संक्रामन्ति[5]। नानाबुद्धक्षेत्रेषु चानुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते[6] ॥ इत्यनभिसंस्कारपरिनिर्वायी ॥

सन्ति॰[7] महासत्त्वा ये षट्सु पारमितासु चरन्तश्चक्रवर्तिनो भूत्वा दानपारमितां पुरस्कृत्य सर्वसत्त्वानां सर्वसुखोपधाना[8]न्युपसंहरिष्यन्ति[5] अन्नमन्नार्थिकेभ्यः पानं पानार्थिकेभ्यः। एवं गन्धमाल्यविलेपनचूर्ण[9]धूपशयनासनोपाश्रय[10]गृहधनधान्यमणिमुक्तासुवर्णरूप्यप्रवाड़ा[11]भरणानि जीवितोपकरणानि उपसंहरिष्यन्ति[5]। यावद्दशकुशलकर्मपथेषु सत्त्वान् प्रतिष्ठाप्य[12] ब्रह्मकायिकेषु यावदकनिष्ठेषु देवेषूपपद्यमाना[13] नानाबुद्धक्षेत्रेष्वनुत्तरां[14] सम्यक्संबोधिमभिसंबुध्यन्ते[15] ॥ इत्यकनिष्ठपरमः ॥

सन्ति॰ महासत्त्वा ये चत्वारि ध्यानानि निष्पाद्य[16] ध्यानेभ्यः परिहीणाः प्रथमं ध्यानमासाद्य[17] ब्रह्मकायिकेषु देवेषूपपद्यन्ते। ते पुनर्ध्यानानि[18] निष्पाद्याकनिष्ठेषूप[19]पद्य[20] नाना[21]बुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति प्लुतः[22] ॥

---

1 $C_1$ धम्मन्वा   2 $C_1$ सत्त्वो   3 $C_1$ सत्त्वा

4 $C_2$ च बुद्धक्षेत्रंपरि॰   5 $C_2$ ति   6 $C_2$ ते

7 For सन्ति॰ read सन्ति शारिपुत्र बोधिसत्त्वाः.

8 $C_1$ धानां न्युप॰   9 $C_2$ inserts चीवरध्वजछत्रताकान् after चूर्ण.

10 A श्राय ; $C_2$ श्रय ; $C_1$ श्रय.

11 $C_1$ प्रवाड़ो॰ ; $C_2$ पवाभा   12 $C_1$ प्रतिस्थाप्य

13 $C_2$ ॰षूपपंनाबुद्ध॰   14 $C_2$ ॰रायां   15 $C_1$ & $C_2$ ते

16 $C_2$ निष्पानेभ्यः   17 $C_1$ & $C_2$ प्रथमध्यानमसमापद्य

18 $C_1$ पुनध्यानानि ; $C_2$ तिनध्यानानि

19 A & $C_1$ कनिष्ठष्वदेवोप॰ ; $C_2$ कनिष्ठष्वदेवोप॰

20: A adds नाना.   21 A omits नाना.   22 A प्लुकः

सन्ति०[1] महासत्त्वा ये ब्रह्मलोकाच्च्युत्वा[2] शुद्धावासेषूपपद्यन्ते। ते शुद्धावासानामेकं वा द्वे[3] वा स्थाने [4]विलंघ्याकनिष्ठेषु देवेषूपपद्य[5] नानाबुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते[6]॥ इत्यर्धश्रुतः[7]॥

सन्ति० महासत्त्वा ये तथागतसदृशमात्मभावमभिनिर्माय तुषितभवनं[8] परिशोध्य ब्रह्मकायिकेषु देवेषु यावदकनिष्ठेषु देवेषूपपद्योपायकौशल्येन नैरयिकाणां सत्त्वानां धर्मं देशयन्ति तिर्यग्योनिगतानां सत्त्वानां धर्मं देशयन्ति यमलौकिकानां सत्त्वानां धर्मं देशयन्ति। सन्ति० महासत्त्वा ये षट्सु[9] पारमितासु स्थित्वा यादृशस्तथागतकायस्तादृशमात्मभावमभिनिर्माय गङ्गानदीवालुकोपमानि बुद्धक्षेत्राण्युपसंक्रम्य[10] सत्त्वानां धर्मं देशयन्ति[11] तथागतांश्च[12] पर्युपासते[13] बुद्धक्षेत्रं च निष्पादयन्ति धर्मं च शृण्वन्ति। एवं पूर्वस्यां दिशि दक्षिणस्यां पश्चिमायामुत्तरस्यामुत्तरपूर्वस्यां[14] पूर्वदक्षिणस्यां दक्षिणपश्चिमायां पश्चिमोत्तरस्यामूर्ध्वमधः सर्वासु दशसु[15] दिक्षु एकैकस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु गत्वा सत्त्वानां धर्मं देशयन्ति[16] बुद्धक्षेत्राणि च निष्पादयन्ति बुद्धांश्च पर्युपासते[17] धर्मं च शृण्वन्ति। ते तेभ्यो बुद्धक्षेत्रेभ्यो निर्मितानि[18] निर्माय[19] श्रेष्ठानि विशिष्टानि अनुत्तराणि बुद्धक्षेत्राणि

---

1 For सन्ति० read सन्ति शारिपुत्र बोधिसत्त्वाः.

2 $C_2$ लोकाच्युत्वा

3 $C_2$ द्वे

4 $C_1$ विलघ्या०

5 $C_2$ ०पद्येनाबुद्ध०

6 $C_2$ ०ते

7 $C_2$ omits अर्ध.

8 $C_2$ ०भुवनं

9 $C_1$ षत्सु

10 A omits स्य.

11 $C_2$ ०ति

12 $C_2$ ०तांश

13 $C_1$ ०शते ; $C_2$ शते:

14 $C_2$ omits त्तरपूर्वस्यां.

15 A दशसु

16 $C_1$ धर्म शयंति

17 $C_1$ ०शते

18 $C_2$ निमित्तानि

19 $C_1$ निर्मार्थ

निष्पादयन्ति[1]। एकजातिप्रतिबद्धाश्च बो॰ महासत्त्वास्तत्र तत्र बुद्धक्षेत्रेषूपपद्य नाना[2]बुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति सर्वस्थानच्युतः ॥

सन्ति॰[3] महासत्त्वा ये ध्यानारूप्यसमापत्तीरासादयन्तो[4] ब्रह्मकायिकेषु यावच्छुभकृत्स्नेषु देवेषूपपद्यन्ते। तत्र[5] आकाशानन्त्यायतने यावद्भवाग्रे उपपद्यन्ते। ततो नानाबुद्धक्षेत्रेषूपपद्यन्ते ॥ इति भवाग्रपरमः ॥

सन्ति॰ महासत्त्वा ये ध्यानारूप्य[6]समापत्तीनां लाभिनस्त आकाशानन्त्यायतने यावद्भवाग्रे उपपद्यन्ते। ततो नानाबुद्धक्षेत्रेषूपपद्यन्ते ॥ इति रूपवीतरागः ॥

सन्ति॰ महासत्त्वा ये षट्पारमितासु चरन्तो[7] द्वात्रिंशन्महापुरुषलक्षणालङ्कृतमूर्तयो निरुत्तरैः परिशुद्धैरिन्द्रियैः समन्वागता भवन्ति[8]। ते तैः परिशुद्धैरिन्द्रियैः समन्वागता बहुजनस्य प्रियाश्च[9] भवन्ति मनआपाश्च। ये पुनः सत्त्वास्तान् बो॰ महासत्त्वान् पश्यन्ति ते तेनैव चित्तप्रसादेनानुपूर्व्येण[10] त्रिभिर्यानैः परिनिर्वान्ति। एवं हि शारिपुत्र बो॰ महासत्त्वेन कायपरिशुद्धये[11] शिक्षितव्यम् वाक्परिशुद्धये[12] शिक्षितव्यम् मनःपरिशुद्धये शिक्षितव्यम्[13]। सन्ति॰ महासत्त्वा ये षट्सु पारमितासु चरन्त [14]उत्तमानीन्द्रियाणि प्रतिलभन्ते। ते तैरुत्तमैरिन्द्रियै-

1 $C_2$ ॰ति    2 A & $C_1$ ॰द्यमाना

3 For सन्ति॰ read शारिपुत्र बोधिसत्त्वाः.

4 $C_1$ ॰सादयतो ब्रह्मकायिकेषूपपद्य नानाबुद्धक्षेत्रेषु अनुत्तरायाः सम्यक्संबोधिमभिसंबुध्यन्ते। सन्ति शारिपुत्र बोधिसत्त्वा महासत्त्वा ये ध्यानारूप्यसमापत्तीरासादयतो    5 $C_1$ तत

6 A omits प्य.    7 $C_1$ चरतो    8 $C_1$ भवति

9 $C_2$ प्रियोच    10 A ॰र्देनापूर्वेण ; $C_1$ देनापूर्वेण

11 A परिशुय ; $C_1$ परिशुद्धिये

12 $C_1$ वाक्यरिशुद्धये ; A वाक्यविशुद्धये

13 $C_1$ omits this sentence altogether.    14 $C_1$ उत्तमाणि॰

नात्मानमुत्कर्षयन्ति न परान् पंसयन्ति[1] । सन्ति॰[2] महासत्त्वा ये प्रथमचित्तोत्पादमुपादाय दानपारमितायां शीलपारमितायां स्थित्वा नैवं कदाचिदपाय[3]दुर्गतिविनिपातेषूपपद्यन्ते यावदविनिवर्तनीय[4]भूमिमनुप्राप्नुवन्ति। सन्ति॰ महासत्त्वा ये प्रथमचित्तोत्पादमुपादाय न जातु दशकुशलान्[5] कर्मपथानुत्सृजन्ति यावदविनिवर्तनीयां भूमिमनुप्राप्नुवन्ति। सन्ति॰ महासत्त्वा ये दानपारमितायां स्थित्वा राजानश्चक्रवर्तिनो भूत्वा दानं सत्त्वेभ्यो दत्त्वा तानेव दशकुशल[6]कर्मपथेषु प्रतिष्ठापयन्ति। सन्ति॰ महासत्त्वा ये दानपारमितायां शीलपारमितायां स्थित्वा अनेकानि चक्रवर्तिराज्यशतानि परिगृह्णन्ति अनेकानि चक्रवर्तिराज्यशतसहस्राणि परिगृह्णन्ति। तत्र स्थित्वा अनेकानि च बुद्धकोटीनियुतशतसहस्राणि आरागयन्ति[7] । तांश्च[8] बुद्धान् भगवतः सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति । ततोऽनुत्तरां[9] सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति दृष्टधर्मपरिनिर्वायी ॥

सन्ति॰ महासत्त्वा ये प्रज्ञापारमितायां चरन्तश्चतुर्णां ध्यानानां लाभिनश्चतसृणामारूप्यसमापत्तीनां[10] लाभिनस्ते ताभिर्विक्रीडन्तः प्रथमं ध्यानं समापद्यन्ते[11] । ततो व्युत्थाय निरोधसमापत्तिं[12] समापद्यन्ते। ततो व्युत्थाय द्वितीयं ध्यानं समापद्यन्ते। त॰[13] निरोधसमाधिं[14] स॰[15]। त॰ तृतीयं[16] ध्यानं स॰। त॰ निरोधसमापत्तिं स॰। त॰

---

1 A पश्यन्ति ; $C_1$ पसयन्ति ; $C_2$ पेसयन्ति

2 For सन्ति॰ read सन्ति शारिपुत्र बोधिसत्त्वा..

3 $C_1$ पयाऽयतिविनि॰ 4 $C_2$ ॰निय

5 $C_2$ केशराग् ; $C_1$ कुशलां 6 $C_2$ ॰लेषु 7 $C_2$ रागयन्ति

8 $C_2$ ता च बुद्धा भगवन्तः 9 $C_1$ ततोऽहं 10 $C_1$ & $C_2$ त्तिनां

11 $C_1$ ते 12 $C_2$ omits समापत्तिं.

13 For त॰ read ततो व्युत्थाय. 14 $C_1$ समापत्तिं

15 For स॰ read समापद्यन्ते. 16 A adds ध्यानं.

चतुर्थं ध्यानं स०[1]। त०[2] निरोधसमापत्तिं स०। त० आकाशानन्त्यायतनं स०। त० निरोधसमापत्तिं[3] स। त० विज्ञानानन्त्यायतनं स०। त० निरोधसमापत्तिं[4] स०। त० आकिञ्चन्यायतनं स०। त० निरोधसमापत्तिं स०। त० नैवसंज्ञानासंज्ञायतनं स०[5]। त० निरोधसमापत्तिं स०। एवं हि शारिपुत्र बो० महासत्त्वाः[6] प्रज्ञापारमितायां चरन्त[7] उपायकौशल्येनावस्कन्दकेन[9] समाधिं समापद्य नानाबुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति कायसाक्षी ॥

सन्ति०[9] महासत्त्वा ये षट्सु पारमितासु स्थित्वा सत्त्वानां[10] बुद्धधर्मावभासं[11] कुर्वन्ति। आत्मनापि बुद्धधर्मावभासेना[12]विरहिता भवन्ति[13]। यावदनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति अर्हत्त्वप्रतिपन्नकः[14] ॥

सन्ति० महासत्त्वा येऽबुद्धकेषु[15] लोकधातुषु अपगतश्रावकेषु प्रत्येकबोधिमसिसंबुध्यन्ते। [16]त उपायकौशल्येन बहूनि प्राणिकोटीनियुतशतसहस्राणि त्रिषु यानेषु परिपाच्यानुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥ इति प्रत्येकबुद्धः ॥

सन्ति० महासत्त्वा ये स्मृत्युपस्थानसम्यक्प्रहाणर्द्धि[17]पादेन्द्रियबलबोध्यङ्गमार्गाणां लाभिनो दशबलवैशारद्यप्रतिसंविदष्टादशावेणिकबुद्धधर्माणां लाभिनः। न च [18]स्रोतआपत्तिफलं प्राप्नुवन्ति न सकृदा-

---

1 For स० read समापद्यते. 2 For त० read ततो व्युत्थाय.

3 A omits समापत्तिं. 4 $C_1$ ०पत्तिं

5 A puts here again ततो व्युत्थाय विज्ञानानन्त्यायतनं समापद्यन्ते.

6 $C_2$ uses singular number. 7 A चर

8 $C_2$ ०नावकन्दकेन 9 For सन्ति० read सन्ति शारिपुत्र बोधिसत्त्वाः.

10 A सत्त्वा 11 $C_2$ धर्मावभासं 12 $C_2$ धर्मप्रभासेन

13 $C_1$ ०ति 14 $C_1$ प्रतिपपन्नकः

15 $C_1$ ये बुद्धधर्मेषु 16 $C_1$ ततोपाय०

17 $C_1$ नौर्द्धिं 18 A & $C_1$ श्रोतापत्ति

गामिफलं[1] नानागामिफलं नार्हत्त्वं प्राप्नुवन्ति न प्रत्येकबुद्धत्वं प्राप्नुवन्ति। ते प्रज्ञापारमितायां चरन्त[2] उपायकौशल्येन[3] सर्वसत्त्वान् मार्गेऽवतार्य विशोध्य स्रोतआपत्तिफलं[4] प्रापयन्ति[5]। [6]सकृदागामिफलं प्रापयन्ति अनागामिफलं प्रापयन्ति अर्हत्त्वं प्रापयन्ति प्रत्येकां[7] बोधिं प्रापयन्ति। स्वयमसाक्षात् कुर्वन्तः[8] परांस्तत्र प्रतिष्ठापयन्ति[9] ॥ इति श्रावक-प्रत्येकबुद्धमार्गलभ्यानि[10] फलानि ॥

यच्छारिपुत्र सर्वश्रावकप्रत्येकबुद्धानां ज्ञानं च प्रकाशं च[11] सानुत्पत्तिकधर्मक्षान्तिप्रतिलब्धस्य[12] बो० महासत्त्वस्य क्षान्तिः। इति स्वयमप्राप्ते धर्मे परप्रतिष्ठापनम्[13]। अमी शारिपुत्र बो० महासत्त्वा अविनिवर्तनीया वेदितव्याः ये अनया प्रज्ञापारमितया विहरन्ति[9] ॥ सन्ति०[14] महासत्त्वा ये षट्सु[15] पारमितासु स्थित्वा तुषितभवनं विशोधयन्ति। ते खलु पुनर्बोधिसत्त्वा महासत्त्वा भाद्रकल्पिका वेदितव्याः। अमी शारिपुत्रा वैवर्तिका बो० महासत्त्वा येषामयमुदयो बुद्धधर्मेषु तस्मात्तर्हि शारिपुत्र बो० महासत्त्वेन प्रज्ञापारमितायां चरता सावद्यस्य कायवाङ्मनस्कर्मणोऽवकाशो[16] न दातव्यः कायवाङ्मनस्कर्मपरिशुद्धये च शिक्षितव्यम्। [17]इतीदमवैवर्तिकबोधिसत्त्वसंचपरिदीपनम्। इति संचरत्नाववादः ॥

---

1 $C_1$ continues repeating प्राप्नुवन्ति. 2 $C_2$ चरत

3 $C_1$ ०लेन 4 A & $C_1$ स्रोतापत्ति 5 $C_2$ प्राप्नुवन्ति

6 $C_2$ adds here न. 7 $C_1$ प्रत्येकं

8 $C_1$ कुर्वान्तः 9 $C_1$ ०ति 10 A ०लभानि

11 $C_2$ प्रकाश च 12 $C_2$ omits स्य.

13 $C_1$ परप्रतिस्थापनम्। $C_1$ ०प्राप्तधर्मपर०

14 For सन्ति read सन्ति शारिपुत्र बोधिसत्त्वाः. 15 $C_1$ षत्सु

16 $C_1$ कायवाक्मनकर्मणो $C_1$ ०मनकर्मणो

17 $C_1$ & $C_1$ इतीदमेव०

एवमुक्त आयुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। कतमद्भगवन् सावद्यं कायकर्म सावद्यं वाक्कर्म सावद्यं मनस्कर्म[1]। एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। इह[2] शारिपुत्र बो० महासत्त्वस्यैवं भवति। कतमः स कायः येन कायेन कायकर्म समारभेय[3]। कतमा सा[4] वाग् यया वाक्कर्म समारभेय। कतमत् तन्मनः[5] येन मनस्कर्म समारभेय। एवमुपपरीक्षमाणः कायमुपलभते[6] [7]वाचमुपलभते मन उपलभते। अयं शारिपुत्र बो० महासत्त्वस्य कायवाङ्मनस्कर्मसमारम्भः[8] सावद्यः। न खलु पुनः शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्[9] कायमुपलभते न वाचमुपलभते न मन उपलभते। येन कायेन वाचा मनसा मात्सर्यदौःशील्यव्यापादकौसीद्य[10]विक्षेपदौष्प्रज्ञचित्तमुत्पादयेत्। अस्थानमेत[11]च्छारिपुत्रानवकाशो यद् बो० महासत्त्वः प्रज्ञापारमितायां चरन् कायवाङ्मनोदौष्ठुल्यमुत्पादयेत्[12]। नैतत्[13] स्थानं विद्यते। तत्कस्य हेतोः। तथाहि शारिपुत्र बो० महासत्त्वः षट्सु पारमितासु चरन् कायदौष्ठुल्यं[14] शोधयति वाग्दौष्ठुल्यं शोधयति मनोदौष्ठुल्यं शोधयति। शारिपुत्र आह। कथं भगवन् बो० महासत्त्वः कायवाङ्मनोदौष्ठुल्यं शोधयति। भगवानाह। यतः शारिपुत्र बो० महासत्त्वो[15] न कायमुपलभते न वाचमुपलभते न मन उपलभते।

---

1 $C_1$ omits सावद्यं मनस्कर्म.
2 A इद
3 $C_2$ ०लभेय
4 $C_2$ शा ; $C_1$ मा वाक्यया
5 $C_2$ कतत्ममनः ; $C_1$ कतमत्तन्मनः ; A कतमेतन्मनः
6 $C_2$ ०लभ्यते
7 $C_2$ वाचामु०
8 $C_2$ समाभेय ; $C_1$ ०रम०
9 $C_1$ चरत्
10 A & $C_2$ कौशीद्य
11 A ०मतं ; $C_2$ ०मत०
12 A & $C_2$ ०दयते
13 $C_2$ नैवस्थानं ; $C_1$ नैतत्थानं
14 $C_2$ दौस्थुल्यं
15 $C_2$ सत्व

एवं हि शारिपुत्र बो० महासत्त्वः कायवाङ्मनोदौष्ठुल्यं शोधयति। सचेत् पुनः शारिपुत्र बो० महासत्त्वस्य प्रथमचित्तोत्पादमुपादाय दश कुशला कर्मपथा अनुवर्तन्ते[1]। न च श्रावकचित्तं प्रत्येकबुद्धचित्तं वोत्पादयति। सततसमितं चास्य [2]सर्वसत्त्वेषु महाकरुणाचित्तं प्रत्युपस्थितं[3] भवति। एवं हि शारिपुत्र बो० महासत्त्वस्य कायवाङ्मनोदौष्ठुल्यं[4] शुद्धमिति वदामि।

सन्ति०[5] महासत्त्वा ये प्रज्ञापारमितायां चरन्तो बोधिमार्गं परिशोधयन्तो[6] दानपारमितायां चरन्ति। शीलपा०[7]। क्षान्तिपा०। वीर्यपा०। ध्यानपा०। प्रज्ञापा०। शारिपुत्र आह। कतमो भगवन् बो० महासत्त्वानां बोधिमार्गः। भगवानाह। यदा शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् न कायमुपलभते। न वाचमुपलभते। न मन उपलभते। न दानपारमितामु०[8]। न शीलपारमितामु०। न क्षान्तिपारमितामु०। न वीर्यपारमितामु०। न ध्यानपारमितामु०। न प्रज्ञापारमितामु०। न श्रावकमु०। न प्रत्येकबुद्धमु०। न बोधिसत्त्वमु०। न बुद्धमु०। अयं[9] शारिपुत्र बो० महासत्त्वस्य बोधिमार्गो यदुत सर्वधर्मानुपलम्भोऽनेन मार्गेण गच्छन्[10] बो० महासत्त्वः षट्सु पारमितासु चरन् न शक्योऽवमर्दितुम्[11]॥ इत्यशक्त्यववादः[12]॥

पुनरपरं शारिपुत्र बो० महासत्त्वः षट्सु पारमितासु चरन्

---

1 $C_2$ ते 2 A omits सर्व. 3 $C_2$ स्थिता

4 $C_2$ दौष्ठुल्यं 5 For सन्ति० read सन्ति शारिपुत्र बोधिसत्त्वाः.

6 $C_2$ ०यती 7 For पा० read पारमितायां चरति.

8 For मु० read मुपलभते. 9 A चार्यं

10 $C_1$ गच्छ 11 $C_2$ संदितुम्

12 $C_2$ इत्संगत्ववव:; A इत्यशक्यावाद:

न रूपं मन्यते[1] । न वेदनां०[2] । न संज्ञां० । न संस्कारान्० । न विज्ञानं० । न पृथिवीधातुं० । [3]नाब्धातुं० । न तेजोधातुं०[4] । न वायुधातुं० । नाकाशधातुं० । न विज्ञानधातुं० । न चक्षुर्धातुं०[5] । न रूपधातुं० । न चक्षुर्विज्ञानधातुं० । न श्रोत्रधातुं० । न शब्दधातुं० । न श्रोत्रविज्ञानधातुं० । And so on with each of the remaining indriyas, viṣayas and vijñānas.[6] न स्मृत्युपस्थानानि०[7] । न सम्यक्प्रहाणानि०[7] । न ऋद्धिपादान्० । नेन्द्रियाणि । न बलानि० । न बोध्यंगानि० । न मार्गं० । न दानपारमितां० etc. up to[8] न प्रज्ञापारमितां० । न वैशारद्यानि० । न प्रतिसंविदः० । न दश तथागतबलानि० । नाष्टादशावेणिकान् बुद्धधर्मान्० । न [9]स्रोतआपत्तिफलं । न सकृदागामिफलं । नानागामिफलं० । नार्हत्त्वं०[10] । न [11]प्रत्येकबोधिं० । न बो० महासत्त्वं०[12] । नानुत्तरां[13] सम्यक्संबोधिं मन्यते । एवं हि शारिपुत्र बो० महासत्त्वः षड्भिः पारमिताभिर्वर्धते[14] । न च केनचिदव[15]-मन्यते । सन्ति०[16] महासत्त्वा ये प्रज्ञापारमितायां स्थित्वा सर्वज्ञानं परिपूरयन्ति । येन ज्ञानेन समन्वागतानां सर्वापायद्वाराणि पिधि-

---

1 $C_1$ has न रूपमन्यते and omits म् in all the following cases.

2 For ० read मन्यते.

3 $C_1$ नाप्धातु मन्यते ; $C_2$ धातु मन्यते

4 $C_2$ strangely adds here न श्रोत्रविज्ञानधातुं मन्यते.

5 $C_2$ चक्षुधातु

6 For the list of indriyas, viṣayas and vijñānas, see p. 58,··· 1st col.

7 $C_2$ ०णि

8 That is, all the pāramitās.

9 $C_2$ श्रोतुo

10 $C_2$ omits anusvāra in this passage and the following.

11 A & $C_1$ प्रत्येका बोधिं

12 $C_2$ बोधिसत्वत्व मन्यते ; $C_1$ मन्यमते

13 A नान्नु

14 A भिवुर्धते

15 $C_2$ omits व.

16 For सन्ति० read सन्ति शारिपुत्र बोधिसत्त्वाः.

ताम्रि भवन्ति[1] । नापि मनुष्यदारिद्र्यविपत्ति[2]मनुभवन्ति । नापि तादृशमात्मभावं परिगृह्णन्ति[3] । येन निन्दनीया[4] भवन्ति सदेवकस्य लोकस्य[5] ॥ इत्यपरिशान्त्यववादः[6] ॥

शारिपुत्र आह । कतमद् भगवन् बो० महासत्त्वस्य सर्वज्ञज्ञानम् । भगवानाह । येन ज्ञानेन समन्वागतो बो० महासत्त्वः पूर्वस्यां दिशि गङ्गानदीवालुकोपमांस्तथागतानर्हतः सम्यक्संबुद्धान् पश्यति[7] तेषां धर्मदेशनां शृणोति संघं च पर्युपास्ते । बुद्धक्षेत्रविशुद्धिं च पश्यति[8] । एवं दक्षिणस्यां पश्चिमायामुत्तरस्यां विदिक्ष्वध ऊर्ध्वं दिशि गङ्गानदी etc.[9] up to पश्यति । येन ज्ञानेन समन्वागतानां बो० महासत्त्वानां न बुद्धसंज्ञा भवति । न बोधि०[10] । न श्रावक० । न प्रत्येकबुद्ध० । नात्म० । न पर० । न बुद्धक्षेत्र० । येन ज्ञानेन समन्वागतो बो० महासत्त्वो दानपारमितायां चरति and so on up to[11] प्रज्ञापारमितायां चरति । न च पारमितामुपलभते । येन ज्ञानेन समन्वागतो बो० महासत्त्वः स्मृत्युपस्थानानि भावयति न च स्मृत्युपस्थानान्युपलभते । सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यंगमार्गान् भावयति न च सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यंगमार्गानुप[12]लभते । बलवैशारद्यावेणिकान् बुद्धधर्मान् समुदानयति न च बलवैशारद्यावेणिकान् बुद्धधर्मानुपलभते । इदं शारिपुत्र बो० महासत्त्वस्य ज्ञानं येन ज्ञानेन समन्वागतो बो० महासत्त्वः[13] सर्वबुद्धधर्मांश्च परिपूरयति । न च सर्वबुद्धधर्मांश्च मन्यते ॥ इति प्रतिपत्संपरिग्रहाववादः[14] ॥

---

1 $C_2$ भवंन्ति   2 $C_2$ पति

3 $C_2$ ०ति   4 $C_2$ निया ; $C_1$ निम्ध्या ; A निन्दा

5 $C_1$ omits लोकस्य.   6 $C_2$ परिशान्त्याववा   7 $C_2$ पश्यन्ति

8 A, $C_1$ & $C_2$ ०न्ति   9 Here "etc." stands for ll. 6 and 7.

10 For ० read संज्ञा भवति.

11 All the pāramitās are mentioned here.   12 A ०मार्गांश्च०

13 $C_1$ ०सत्त्वो   14 $C_2$ इति प्रतिस्व( त्व )संपरिग्रहाववादः

सन्ति शारिपुत्र बो॰ महासत्त्वा ये पञ्चचक्षूंषि[1] प्रतिलभन्ते[2] परिशोधयन्ति। कतमानि पञ्च यदुत[3] मांसचक्षुः दिव्यचक्षुः[4] प्रज्ञाचक्षुः धर्मचक्षुः बुद्धचक्षुः।

शारिपुत्र आह। कतमद्भगवन् बो॰ महासत्त्वस्य परिशुद्धं मांसचक्षुः। भगवानाह। अस्ति शारिपुत्र बो॰ महासत्त्वस्य मांसचक्षुः यत्[5] योजनशतं पश्यति। अस्ति शारिपुत्र बो॰ महासत्त्वस्य मांसचक्षुर्यत् योजनशतद्वयं पश्यति। अस्ति॰[6] [7]जम्बुद्वीपं पश्यति। अस्ति॰ चातुर्द्वीपकं[8] लोकधातुं पश्यति। अस्ति॰ सहस्रं लोकधातुं पश्यति। अस्ति॰ [9]द्विसहस्रं लोकधातुं पश्यति। अस्ति॰ त्रिसहस्रमहासाहस्रं लोकधातुं पश्यति। इदं शारिपुत्र बो॰ महासत्त्वस्य परिशुद्धं मांसचक्षुः।

शारिपुत्र आह। कतमद्भगवन् बो॰ महासत्त्वस्य परिशुद्धं दिव्य[10]चक्षुः। भगवानाह। यच्छारिपुत्र चातुर्महाराजकायिकानां देवानां दिव्यचक्षुस्तद्[11]बोधिसत्त्वः प्रजानीते[12]। यत्त्रयस्त्रिंशानां देवानां दिव्यचक्षुः तद् बोधिसत्त्वः प्रजानीते यद् यामानां देवानां दिव्यचक्षुः तद् बोधिसत्त्वः प्रजानीते। And so on with each class of gods.[13]

---

1 A ॰षि   2 $C_2$ puts singular.

3 $C_2$ जदुत   4 $C_2$ दीव्य॰   5 $C_1$ स योजन॰

6 अस्ति॰ stands for अस्ति शारिपुत्र बोधिसत्त्वस्य महासत्त्वस्य मांसचक्षुर्यत्.

7 $C_2$ यं जम्बु॰ ; A & $C_1$ य्यंजम्बुद्वीपं

8 $C_2$ ॰दीपकं   9 $C_2$ यंद्वि॰ ; A यंतद्वि॰

10 A द्दिव्यं throughout

11 A दिव्यच: तद्बोधि॰ ; $C_2$ चक्षुस्ते बो॰ in other places ; $C_2$ चक्षुस्तद् ; $C_1$ दिव्यचक्षु:तद्॰   12 $C_2$ ॰ते:

13 This remark has been repeated with reference to each of the various classes of gods, for a list of which, see p. 33,

यत्पुनः शारिपुत्र बो॰ महासत्त्वस्य दिव्यचक्षुः तच्चातुर्महाराजकायिका देवा न प्रजानन्ति। न त्रयस्त्रिंशा देवाः प्रजानन्ति। न यामा देवाः प्रजानन्ति। And so on with each class of gods.[1] तेनैव परिशुद्धेन दिव्येन चक्षुषा[2] पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वसत्त्वानां च्युतोपपादं यथाभूतं प्रजानाति। तेनैव परिशुद्धेन दिव्येन चक्षुषा दक्षिणस्यां and other directions up to ऊर्ध्वं दिशि[3] गङ्गानदीवालुकोपमेषु लोकधातुषु सर्वसत्त्वानां च्युतोपपादं यथाभूतं प्रजानाति। इदं शारिपुत्र बो॰ महासत्त्वस्य परिशुद्धं दिव्यचक्षुः[4] ॥

शारिपुत्र आह। कतमद्भगवन् बो॰ महासत्त्वस्य परिशुद्धं प्रज्ञाचक्षुः। भगवानाह। येन शारिपुत्र प्रज्ञाचक्षुषा समन्वागतो[5] बो॰ महासत्त्वो[6] न कञ्चिद्धर्मं[7] प्रजानाति संस्कृतं वा असंस्कृतं वा कुशलं वा अकुशलं वा सावद्यं वा अनवद्यं वा सास्रवं[8] वा अनास्रवं वा संक्लेशं वा निष्क्लेशं[9] लौकिकं वा लोकोत्तरं[10] वा संक्लिष्टं वा व्यवदानं वा। येन प्रज्ञाचक्षुषा बो॰ महासत्त्वेन कश्चिद्धर्मो[11] न दृष्टो[12] न श्रुतो न मतो[13] न विज्ञातः[14]। इदं शारिपुत्र बो॰ महासत्त्वस्य परिशुद्धं प्रज्ञाचक्षुः।

---

ll. 3-7. In this list परीत्तशुभा and अप्रमाणशुभा have only been left out and अतृपा appears for अतपा. See also Mvyu. 46.

1 See previous footnote. In this list परीत्तशुभा and अप्रमाणशुभा appear.

2 $C_2$ दिव्यचक्षुषा

3 For the list of directions, see p. 6, ll. 13, 14.

4 A दिव्यचक्षुः

5 $C_2$ ता

6 $C_2$ त्वा

7 $C_2$ कश्चित् धर्मं ; $C_1$ कश्चिधर्मं

8 A & $C_2$ स्रवं

9 A & $C_1$ निःक्लेशं ; $C_2$ निःक्लेशं

10 $C_2$ ॰त्तरो वा

11 $C_2$ धर्मा

12 $C_2$ दृष्टा

13 $C_1$ मती

14 $C_2$ ॰ती ; $C_1$ ॰नः

शारिपुत्र आह। कतमद्भगवन् बो० महासत्त्वस्य परिशुद्धं धर्मचक्षुः। भगवानाह। इह शारिपुत्र बो० महासत्त्वो धर्मचक्षुषैवं जानाति। अयं पुद्गलः श्रद्धानुसारी। अयं पुद्गलो धर्मानुसारी। अयं पुद्गलः शून्यताविहारी। अयं पुद्गलोऽनिमित्तविहारी। अयं पुद्गलोऽप्रणिहितविहारी[1]। अयं पुद्गलः शून्यताविहारी। अस्य पुद्गलस्य[2] शून्यताविमोक्षमुखेण [3]पञ्चेन्द्रियाण्युत्पत्स्यन्ते। [4]पञ्चभिरिन्द्रियैरानन्तर्यसमाधिं प्रेक्षते[5]। आनन्तर्येण समाधिना विमुक्तिज्ञानदर्शनमुत्पादयिष्यति[6]। विमुक्तिज्ञानदर्शनेन[7] त्रीणि संयोजनानि प्रहास्यति। सत्कायदृष्टिं शीलव्रतपरामर्शं विचिकित्सां चेति। अयमुच्यते पुद्गलः स्रोतआपन्नः[8]। स भावनामार्गं[9] प्रतिलभ्य काम[10]रागव्यापादतनुत्वादयमुच्यते पुद्गलः सकृदागामी[11]। स तेनैव[12] भावनामार्गेणाधिमात्रभावितेन कामरागव्यापादप्रहाणादय[13]मुच्यते पुद्गलोऽनागामी[14]। स तेनैव भावनामार्गेणाधिमात्रभावितेन रूपरागमारूप्यरागमविद्यां मानमौद्धत्यं च प्रहायायमुच्यते पुद्गलोऽर्हन्। अयं पुद्गलोऽनिमित्तविहारी[15] अस्य पुद्गलस्यानिमित्तविमोक्षमुखेण पञ्चेन्द्रियाणि उत्पत्स्यन्ते etc., as above ll. 6—14[16]. अयं पुद्गलोऽप्रणिहितविहारी। अस्य पुद्गलस्याप्रणिहितविमोक्षमुखेण पञ्चेन्द्रियाण्युत्पत्स्यन्ते etc., as above ll. 6—14. इदं शारिपुत्र बो० महासत्त्वस्य परिशुद्धं धर्मचक्षुः॥

---

1 $C_2$ ॰रि  2 $C_2$ चयं पुंगरस्य

3 A ॰मुखेणं चन्द्रियाण्युत्॰  4 A पञ्च

5 Ś. 296 & $C_1$ प्रत्स्यन्ति; प्रत्स्यति appears distinctly in all the Mss. and in all the repetitions.  6 $C_2$ ष्यामिति

7 $C_2$ दर्शन त्रिणि  8 A & $C_1$ श्रोतापन्नः  9 A & $C_1$ मार्गं

10 $C_2$ का:म  11 $C_2$ गामि  12 $C_2$ तत्येनैव

13 $C_2$ omits. प्रहाणाद.  14 $C_1$ गामि  15 $C_1$ & $C_2$ ॰रि

16 $C_1$ प्रत्स्यन्ते

पुनरपरं शारिपुत्र बो० महासत्त्वः एवं जानाति[1] यत्किञ्चित् समुदयधर्मि सर्वं तन्निरोधधर्मीति प्रजानाति प्रज्ञापारमितायां चरन् पञ्चेन्द्रियाणि प्राप्नोति। इदं शारिपुत्र बो० महासत्त्वस्य परिशुद्धं धर्मचक्षुः। पुनरपरं शारिपुत्र बो० महासत्त्वः[2] एवं जानाति अयं बोधिसत्त्वः प्रथमचित्तोत्पादिको[3] यो दानपारमितायां वा चरति शीलपारमितायां वा चरति स ततः श्रद्धेन्द्रियं प्रतिलभते[4]। वीर्येन्द्रियं च। स[5] उपायकौशल्येन समन्वागतः संचिन्त्यात्मभावं परिगृह्णाति कुशलमूलोपलम्भश्च[6] भवति। अयं बोधिसत्त्वो ब्राह्मणमहाशालकुलेषूपपत्स्यते। अयं क्षत्रियमहाशालकुलेषू०[7]। अयं गृहपतिमहाशालकुलेषू०। अयं चातुर्महाराजकायिकेषु देवेषू०। अयं त्रयस्त्रिंशेषु देवेषू०। अयं यामेषु देवेषू०। अयन्तुषितेषु देवेषू०। अयं निर्माणरतिषु देवेषू०। अयं परनिर्मितवशवर्तिषु देवेषू०। अयं यावदकनिष्ठेषु देवेषूपपत्स्यते। स तत्र स्थित्वा सत्त्वान् परिपाचयिष्यति। सर्वसुखोपधानेन च सत्त्वान् प्रत्युपस्थास्यति बुद्धक्षेत्रं च परिशोधयिष्यति। तथागतांश्चार्हतः[8] सम्यक्संबुद्धानारागयिष्यति। सत्करिष्यति [9]गुरूकरिष्यति मानयिष्यति[10] न च श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा पतिष्यति। अयं बो० महासत्त्वो न निवर्तते[11] यावन्नानुत्तरां सम्यक्संबोधिमभिसंबुद्ध इति[12]। इदं शारिपुत्र बो० महासत्त्वस्य परिशुद्धं धर्मचक्षुः।

---

1 $C_2$ जानादि　2 $C_1$ सत्वो　3 $C_1$ ०दको

4 $C_2$ लभ्यते　5 $C_2$ म　6 $C_1$ & $C_2$ ०पलम्भश्च

7 For षू० read षूपपत्स्यते.

8 $C_2$ ०र्हन्तः　9 A गुरु०

10 $C_2$ ०ष्मि　11 A नानिवर्त्तते

12 A & $C_1$ ०बुद्धेति

पुनरपरं शारिपुत्र बो० महासत्त्व एवं जानाति। अमी बो० महासत्त्वा व्याकृता अनुत्तरायां[1] सम्यक्संबोधौ। अमी बोधिसत्त्वा न व्याकृताः। अमी बोधिसत्त्वा अविनिवर्तनीयाः। अमी बोधिसत्त्वा न अविनिवर्तनीयाः[2]। एषां बोधिसत्त्वानामभिज्ञाः परिपूर्णाः। एषां बोधिसत्त्वानां न परिपूर्णाः। अयं बोधिसत्त्वोऽभिज्ञापरिपूर्णः[3] पूर्वस्यां दिशि यावदुपरिष्टाद्दिशि गङ्गानदीवालुकोपमान् लोकधातून्[4] गत्वा तथागतानर्हतः सम्यक्संबुद्धान् सत्करोति गुरूकरोति मानयति पूजयति। अयं बोधिसत्त्वो[5] नाभिज्ञापरिपूर्णो[6] यावन्न [7]पूजयति। अयं बोधिसत्त्वोऽभिज्ञानां[8] लाभी भविष्यति। अयं बोधिसत्त्वो नाभिज्ञानां लाभी भविष्यति। अस्य बो० महासत्त्वस्य परिशुद्धं [9]बुद्धक्षेत्रं भविष्यति। अस्य बो० महासत्त्वस्यापरिशुद्धं बुद्धक्षेत्रं भविष्यति अनेन बोधिसत्त्वेन सत्त्वाः परिशोधिताः। ...[10]न परिशोधिताः अस्य बो० महासत्त्वस्य[9] बुद्धा भगवन्तो वर्णं भाषन्ते। ...न भाषन्ते। अमी बोधिसत्त्वा बुद्धानां भगवतामासन्न[11]स्थायिनो भविष्यन्ति। ...नासन्नस्थायिनो भविष्यन्ति। अस्य बोधिसत्त्वस्य परिमितमायुर्भविष्यति। ...अपरिमितमायुर्भविष्यति। अस्य बोधिसत्त्वस्य परिमितः संघो भविष्यति। ...अपरिमितः[12] संघो भविष्यति। अस्य बोधिसत्त्वस्यानुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य बोधिसत्त्वसंघो भविष्यति। ...न बोधिसत्त्वसंघो भविष्यति।

---

1 ०त्तरां 2 All Mss. drop this sentence.

3 $C_2$ बोधिसत्त्वाऽभिज्ञापरिपूर्णाः 4 $C_1$ धातु

5 $C_2$ सत्त्वा 6 All Mss. ०पूर्णा 7 $C_2$ पूजयिति

8 $C_2$ ऽभिज्ञालाभी 9 $C_2$ drops ll. 10-12.

10 It is the same as the preceding sentence rendered negative by the addition of न or अ०. 11 $C_1$ ०सादास

12 A ०मिति; ; $C_2$ मित

अयं बो० महासत्त्वो दुष्करचर्यां चरिष्यति। …[1]न दुष्करचर्यां चरिष्यति। अयं बोधिसत्त्वश्चरमभविकः। …न चरमभविकः। अयं बोधिसत्त्वो बोधिमण्डे निषत्स्यते[2]। …न निषत्स्यते[3]। अस्य बोधिसत्त्वस्य मारो भविष्यति। …न मारो भविष्यति। एवं हि शारिपुत्र बो० महासत्त्वस्य परिशुद्धं धर्मचक्षुः।

शारिपुत्र आह। कतमद्भगवन्[4] बो० महासत्त्वस्य परिशुद्धं बुद्धचक्षुः। भगवानाह। यच्छारिपुत्र बो० महासत्त्वो[5] बोधिचित्तानन्तरं वज्रोपमं[6] समाधिं समापद्य एकचित्तक्षणसमायुक्तया प्रज्ञया[7] सर्वाकारज्ञतामनु[8]-प्राप्नोति। दशभिस्तथागतबलैः समन्वागतः। [9]चतुर्भिर्वैशारद्यैश्चतसृभिः प्रतिसंविद्भिरष्टादशभिरावेणिकबुद्धधर्मैर्महामैत्र्या महाकरुणया[10] च समन्वागतः। येन च चक्षुषा[11] बो० महासत्त्वेन नास्ति किञ्चिददृष्टं[12] वाऽश्रुतं वाऽमतं[13] वाऽविज्ञातं[14] वा सर्वैराकारैरेवं हि शारिपुत्र बो० महासत्त्वस्य परिशुद्धं बुद्धचक्षुः।

एवं हि शारिपुत्र बो० महासत्त्वेन पञ्चचक्षूंषि शोधयितु[15]कामेन षट्सु पारमितासु योगः करणीयः। तत् कस्य हेतोः। तथाहि शारिपुत्र षट्सु पारमितासु सर्वे कुशला धर्मा अन्तर्गताः सर्वश्रावकधर्माश्च सर्व-

---

1 See footnote 10 of the previous page.

2 $C_1$ ०न्ते ; $C_2$ निषस्यते

3 $C_2$ निषसंस्यते ; $C_1$ ०न्ते

4 $C_1$ भगव

5 $C_2$ ०त्त्वः

6 A, $C_1$ & $C_2$ वज्जोपमं

7 $C_2$ प्रज्ञाया

8 A drops नु.

9 A ०भिर्वैशा०

10 A & $C_1$ ०णाया ; in $C_2$ ०णाया seems to have been corrected into ०णया.

11 $C_2$ चक्षुषां

12 A drops out ष्ट.

13 $C_2$ वाऽश्रुतं

14 $C_1$ ०ज्ञानं

15 $C_1$ ०यतुं

प्रत्येकबुद्धधर्माश्च बोधिसत्त्वधर्माश्च यत्[1] खलु शारिपुत्र सम्यग् वदन्तो[2] वदेयुः सर्वकुशलधर्मसंग्रह इति प्रज्ञापारमितां खलु सम्यग् वदन्तो वदेयुः । तत् कस्य हेतोः । तथाहि शारिपुत्र प्रज्ञापारमिता जनयित्री सर्वासां पारमितानामेषां च पञ्चानां बोधिसत्त्वचक्षुषाम् । एषु च शारिपुत्र पञ्चसु बोधिसत्त्वचक्षुःषु[3] शिक्षित्वा बो॰ महासत्त्वा अनुत्तरां सम्यक्-संबोधिमभिसंबुध्यन्ते । इति पञ्चचक्षुरववादः ॥

अत्र शारिपुत्र बो॰ महासत्त्वः प्रज्ञापारमितायां चरन्नभिज्ञा-पारमितां भावयति । सोऽनेक[4]विधमृद्धिविधिं प्रत्यनुभवति । पृथिवी-मपि[5] कम्पयति । एकोऽपि[6] भूत्वा बहुधा भवति[7] । बहुधापि भूत्वा एको भवति । आविर्भावं तिरोभावमपि प्रत्यनुभवति । तिरःकुड्यं[8] तिरःप्राकारं[9] तिरःपर्वतमप्यसक्तो गच्छति तद्यथापि नाम आकाशे[10] पक्षी शकुनिः । पृथिव्यामप्युन्मज्जनिमज्जं[11] करोति तद्-यथापि नामोदके । उदकेऽभिद्यमानो गच्छति[12] तद्यथापि नाम पृथि-व्याम् । धूमायत्यपि प्रज्वलत्यपि[13] तद्यथापि नाम महानग्निस्कन्धः । उदकमपि कायात्प्रमुञ्चति[14] तद्यथापि नाम महामेघः । इमावपि[15]

---

1 $C_2$ यत्र 2 $C_2$ ॰न्तौ 3 $C_2$ drops out visarga.

4 A & $C_1$ सोनेक ; $C_2$ सोऽनेकद्धइमृद्धिविद्धिं प्रत्य॰ ; Pali iddhividham 5 $C_2$ पिथिवीमपि क्रम्पति 6 A एका

7 $C_2$ adds here बहुधापि भूत्वा बहुधापि भवन्ति ; cf. Mvyu. p. 5 ; Digha, I, p. 78. 8 $C_2$ & $C_1$ ॰कुद्य॰

9 $C_1$ ॰प्रकार ; $C_2$ पाकार

10 A drops it ; $C_1$ & $C_2$ चाकाशेऽपि क्रामति तद्‍यथापि नाम पक्षी शकुनिः ।  11 Mvyu. xv. उन्मज्जनिमज्जनं

12 This line has been repeated in $C_1$.

13 $C_1$ ॰लत्यपि ; $C_2$ प्रजीरत्यपि ; in A it is not legible.

14 $C_2$ परिमु॰ 15 $C_2$ इमानपि

सूर्याचन्द्रमसौ एवं महर्द्धिकौ महानुभावौ[1] पाणिना[2] परामृशति परिमार्ष्टि यावद्ब्रह्मलोकादपि कायं वशेन वर्तयति। तया च ऋद्ध्या न मन्यते। तथाहि[3] स तामृद्धिं[4] नोपलभते यया[5] मन्यते तदपि न मन्यते[6] स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय स्वभावानुपलब्धितामुपादाय। स न ऋद्धिचेतनामप्युत्पादयति न ऋद्ध्यभिनिर्हारचेतनां वा अन्यत्र[7] सर्वज्ञतामनसिकारात्। एवं हि शारिपुत्र बो॰ महासत्त्वः[8] प्रज्ञापारमितायां चरन् ऋद्धिविध्यभिज्ञासाक्षात्क्रिया[9]-ज्ञानमभिनिर्हरति[10]।

स दिव्येन श्रोत्रधातुना विशुद्धेनातिक्रान्तमानुष्यकेण शब्दान् शृणोति दिव्यान् मानुष्यकांश्च। न च तेन दिव्येन श्रोत्रेण मन्यते अहं शब्दान्[11] शृणोमि। तथाहि स तमपि शब्दं नोपलभते स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय स्वभावानुपलब्धितामुपादाय। स न दिव्यश्रोत्रचेतनामप्युत्पादयति न दिव्यश्रोत्राभिनिर्हार[12]चेतनां वा अन्यत्र सर्वाकारज्ञतामनसिकारात्। एवं हि शारिपुत्र बोधिसत्त्वो महासत्त्वः[13]प्रज्ञापारमितायां चरन् दिव्यश्रोत्राभिज्ञासाक्षात्[14]क्रियाज्ञानमभिनिर्हरति[15]।

---

1 $C_1$ & $C_2$ ॰भावौ ; $C_2$ also ॰र्द्धिकौ    2 $C_2$ प्राणिना

3 $C_2$ तद्यथा    4 $C_2$ ऋद्धि

5 A या या

6 A मन्येत ; after मन्यते A & $C_2$ add येनापि मन्येत ($C_2$ मन्यन्त) ; cf. Ś. 302, which has only यया मन्येत स्वभाव॰.

7 $C_2$ चनेत    8 $C_1$ ॰त्वो    9 $C_1$ ॰क्रियायाज्ञान॰

10 $C_2$ ॰निर्हरति    11 $C_1$ omits न्.

12 $C_2$ very often omits रेफ.    13 $C_1$ ॰त्वो:

14 $C_2$ साक्षाक्रिया॰    15 $C_1$ निर्हरति ; $C_2$ ॰मभिनिर्हरती

स परसत्त्वानां परपुद्गलानां चेतसैव चित्तं यथाभूतं प्रजानाति। सरागचित्तं सरागचित्तमिति यथाभूतं प्रजानाति। विगतरागं चित्तं विगतरागं चित्तमिति यथाभूतं प्रजानाति। सदोषं चित्तं सदोषं चित्तमिति यथाभूतं प्रजानाति। [1]वीतदोषं[2]। समोहं चित्तं। वीतमोहं। सतृष्णं। [3]वीततृष्णं। सोपादानं। निरुपादानं। संक्षिप्तं। विक्षिप्तं। [4]परीत्तं चित्तं। विपुलं। महद्गतं[5]। समाहितं। असमाहितं। विविक्तं। अविविक्तं[6]। सास्रवं[7]। अनास्रवं। साङ्गणं। अनङ्गणं[8]। सोत्तरं[9]। अनुत्तरं। तेन[10] च न मन्यते। तथाहि [11]तच्चित्तमचित्तमचिन्त्यतामुपादाय। सोऽहं प्रजानामीति न मन्यते। तदेव चित्तं नोपलभते स्वभावशून्यतामुपादाय[12] स्वभावविविक्ततामुपादाय स्वभावानुपलब्धितामुपादाय[13]। न स [14]परचित्तचेतनामप्युत्पादयति न [15]परचित्ताभिनिर्हारचेतनां वा अन्यत्र सर्वाकारज्ञतामनसिकारात्। एवं हि शारिपुत्र बो० महासत्त्वः[16] प्रज्ञापारमितायां चरन् सर्वसत्त्वचित्तचरिताभिज्ञासाक्षात्क्रियाज्ञानमभिनिर्हरति।

---

1 $C_1$ drops out this sentence altogether.

2 The omissions are to be supplied by the reader on the analogy of the previous similar sentences.

3 $C_2$ वीत 4 $C_2$ परीतं

5 $C_2$ for महद्गतं puts महगतं.

6 $C_1$ & $C_2$ omit some of the cittas here and there.

7 A & $C_2$ have ०स्रव throughout. 8 A, $C_1$ अनङ्गणचित्तमनङ्गण

9 $C_1$ सोत्तरचित्तं; henceforth it combines the two words omitting anusvāra. 10 A न च 11 $C_2$ तच्चित्त०

12 A ०दाय: 13 A puts for this स्वभावविविक्ततामुपादाय.

14 A न स परचित्तचेतनायति; $C_1$ ०परिचित्तं०; $C_2$ ०नामनुपुपादयति

15 $C_2$ परिचित्त० 16 A drops it.

स[1] पूर्वनिवासानुस्मृतिज्ञानेन [2]एकामपि जातिमनुस्मरति द्वे तिस्रो यावज्जातिशतसहस्राण्य[3]प्यनुस्मरति। स एकमपि चित्तमनुस्मरति यावच्चित्तशत[4]मपि। एकमपि दिवसं दिवसशत[5]मपि। एकमपि मासं मासशतमपि। एकमपि वर्षं वर्षशतमपि। एकमपि कल्पं कल्प[6]-शतमपि। अनेकानि अपि कल्पशतान्यनेकान्यपि कल्पसहस्राण्यनेकान्यपि कल्पशतसहस्राण्यनेकानि अपि कल्पकोटिनियुतशतसहस्राणि अनुस्मरति यावत् पूर्वान्तकोटीमप्यनुस्मरति। अमुत्राहमासमेवंनामा एवंगोत्र[7] एवंजातिः[8] एवमाहार एवंचिर[9]स्थितिकः एवमायुः-पर्यन्तः[10]। स ततश्च्युतोऽमुत्रोपपन्नः ततश्च्युत इहाभ्युपपन्न इति। स एवं साकारं सादृशं सनिर्देशमनेक[11]विधं पूर्वनिवासमनुस्मरति। तेन च पूर्वनिवासानुस्मृत्यभिज्ञानेन न मन्यते। तथाहि तज्ज्ञान[12]मज्ञान-मचिन्त्यतामुपादाय। सोऽहं प्रजानामीति[13] न मन्यते। स तदेव ज्ञानं नोपलभते स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय स्वभावानुपलब्धितामुपादाय। न स पूर्वनिवासानुस्मृतिचेतनामप्यु-त्पादयति। न पूर्वनिवासानुस्मृत्यभिनिर्हार[14]चेतनां वा अन्यत्र सर्वा-कारज्ञतामनसिकारात्। एवं हि शारिपुल बो॰ महासत्त्वः

---

1 All Mss. drop it. 2 $C_2$ सयेकाम॰

3 $C_2$ स्राणेप्यनु॰ 4 $C_2$ ॰शततम॰ 5 $C_2$ ॰सत॰

6 A drops the second कल्प.

7 $C_2$ ॰मा यवं माव्र यवं जाति॰

8 A & $C_1$ drop visarga ; $C_2$ ॰तिरेव॰ 9 $C_1$ चिरे॰

10 $C_1$ पयन्त ; A प्यर्य्यंन्त 11 $C_2$ सादशं सनिदंश चनेक॰

12 $C_1$ & $C_2$ तज्ञाण 13 $C_2$ नामिति

14 A & $C_2$ ॰निहार॰

प्रज्ञापारमितायां चरन् पूर्वनिवासानुस्मृतिसाक्षात्क्रियाज्ञानमभिनिर्हरति[1]।

स दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वान् पश्यति च्यवमानानुत्पद्यमानान् सुवर्णान् दुर्वर्णान्[2] हीनान् प्रणीतान् सुगतौ[3] दुर्गतौ यथाकर्मोपगान् सत्त्वान् प्रजानाति। अमी भवन्तः[4] सत्त्वाः कायसुचरितेन समन्वागताः वाक्सुचरितेन समन्वागताः मनः[5]सुचरितेन समन्वागताः आर्याणामनपवादकाः सम्यग्दृष्टयः तेन कायवाङ्मनःसुचरितेन हेतुना सुगतौ[6] स्वर्गलोक उपपद्यन्ते। इमे पुनर्भवन्तः[4] सत्त्वाः कायदुश्चरितेन समन्वागताः। वाग्दुश्चरितेन[7] समन्वागताः मनोदुश्चरितेन[8] समन्वागताः आर्याणामपवादकाः मिथ्यादृष्टयस्ते मिथ्यादृष्टिकर्म[9]समादानहेतोः कायस्य भेदात्[10] परं मरणादपाय[11]दुर्गतिविनिपातं नरकेषूपपद्यन्ते[12]। इति हि दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण[13] दशदिशि लोके[14] सर्वलोकधातुषु धर्मधातुपरमे आकाशधातुपर्यवसाने षड्गतिकानां सत्त्वानां च्युतोपपादं यथाभूतं प्रजानाति। तेन च न[15] मन्यते। तथाहि तच्चक्षु-

---

1 $C_2$ निहरति throughout

2 $C_1$ & $C_2$ दुवर्णान्; A drops it.

3 A सुगतौ ; Ś. 305. सुगताम् दुर्गताम्

4 $C_2$ भदन्त

5 $C_1$ omits visarga

6 A सुगता

7 $C_1$ ०दुचरितेन

8 $C_2$ ०चरीते०

9 $C_2$ क्रम्प for कर्म

10 $C_1$ तेदात्

11 $C_1$ परमरण

12 $C_2$ ०ते

13 $C_2$ drops out ण.

14 A लोक ; $C_2$ omits दशंदिशि लोके.

15 $C_2$ omits न.

रचक्षुरचिन्त्यता[1]मुपादाय सोऽहं पश्यामीति न मन्यते। तदेव चक्षुर्नोपलभते[2] स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय स्वभावानुपलब्धितामुपादाय। न स दिव्यचक्षुश्चेतनामप्युत्पादयति। न दिव्यचक्षुरभिनिर्हारचेतनां वा अन्यत्र सर्वाकारज्ञता[3]मनसिकारात्। एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् दिव्यचक्षुरभिज्ञासाक्षात्क्रियाज्ञानमभिनिर्हरति।

सोऽनुत्पादसाक्षात्क्रिया अभिज्ञानमभिनिर्हरति। न च श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा पतति[4]। नाप्यन्यं कञ्चिद्धर्ममाशंसति[5] अन्यत्रानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यामीति। स तया [6]आस्रवक्षय साक्षात्क्रियाभिज्ञाज्ञानाभिनिर्हारकुशलतया[7] न मन्यते[8] तथाहि तज्ज्ञानमज्ञानमचिन्त्यतामुपादाय[9]। सोऽहं प्रजानामीति न मन्यते। तदेव ज्ञानं[10] नोपलभते स्वभावशून्यतामुपादाय स्वभावविविक्ततामुपादाय स्वभावानुपलब्धितामुपादाय[11]। न स आस्रव[12]-क्षयचेतनामप्युत्पादयति नास्रवक्षयाभिज्ञाभिनिर्हारचेतनां वा[13] अन्यत्र सर्वाकारज्ञतामनसिकारात्। एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्नास्रवक्षयाभिज्ञासाक्षात्क्रियाज्ञानमभिनिर्हरति।

---

1 $C_1$ ०चिन्तता०

2 $C_2$ drops out रेफ.

3 $C_1$ सर्वाज्ञता०

4 A पतपि ; $C_2$ पयति

5 $C_2$ कञ्चिद्धर्ममार्श।

6 $C_2$ चास्रव०

7 $C_2$ omits ll. 7-9.

8 A & $C_1$ add ते.

9 $C_2$ ०ह्रितमचिन्त्यतामुपादाय

10 $C_2$ मन्यते। तदवचनज्ञोप०

11 $C_2$ drops it.

12 $C_2$ चास्रव ; A & $C_1$ चाश्रव and $C_2$ श्र in the next repetition

13 $C_1$ omits ' वा.

एवं पुनः शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायां चरतः षड्-भिज्ञाः परिपूर्यन्ते परिशुध्यन्ते च। अभिज्ञाः शारिपुत्र परिशुद्धाः सर्वाकारज्ञतामर्पयन्ति[1]। सन्ति शारिपुत्र बो० महासत्त्वाः प्रज्ञापारमितायां चरन्तो दानपारमितायां स्थित्वा सर्वाकारज्ञतापश्यानं[2] शोधयन्ति अत्यन्तशून्यतया न च [3]गृहीततामुपादाय। सन्ति०[4] शीलपा०[5] आपत्त्यनध्यापत्तितामुपादाय[6]। सन्ति० क्षान्तिपा० [7]अक्षोभणतामुपादाय। सन्ति० वीर्यपा० कायिकचैतसिकवीर्य्यासंसनतामुपादाय[8]। सन्ति० ध्यानपा० अविच्छिन्नचित्ततामुपादाय[9]। सन्ति० प्रज्ञापा० दौष्प्रज्ञचित्तपरिवर्जनतामुपादाय[10]। एवं खलु शारिपुत्र बो० महासत्त्वाः प्रज्ञापारमितायां चरन्तः षट्सु पारमितासु[11] स्थित्वा सर्वाकारज्ञतापश्यानं शोधयन्ति अत्यन्तशून्यतामुपादाय। दानं परिग्रहतामुपादाय प्रज्ञप्यते। शीलं [12]दौःशील्यमु०[13]। क्षान्तिरक्षान्तितामु०। वीर्यं कौशीद्यमु०[14]। समाधिरसमाहिततामु०[15]। प्रज्ञा दौष्प्रज्ञमु०। स तीर्णं इति न मन्यते। अतीर्णं[16] इति न मन्यते। दानं[17] परिग्रह इति न मन्यते। शीलं दौःशील्यमिति०[18]। क्षान्तिः क्षोभ इति०। [19]वीर्य्यं कौशीद्य-

---

1 $C_2$ ०मर्पन्ति  2 $C_2$ ०पश्यानं  3 $C_2$ ०गृहित०

4 For सन्ति० read सन्ति शारिपुत्र बोधिसत्त्वा महासत्त्वाः प्रज्ञापारमितायां चरन्तः।

5 For पा० read पारमितायां स्थित्वा सर्वाकारज्ञतापश्यानं शोधयन्ति अत्यन्तशून्यतया।

6 $C_2$ ०ध्यापत्तिता०  7 $C_2$ ०भणता०  8 $C_2$ ०संसन०

9 $C_2$ drops it.  10 Cf. ante, p. 18.

11 $C_1$ मितायां सु  12 $C_1$ दौशील्य

13 For मु० read मुपादाय प्रज्ञप्यते।

14 $C_1$ & $C_2$ वीर्य्यको०  15 $C_2$ समाधिततामुपा०

16 A & $C_1$ न तीर्णं  17 $C_1$ दानपरि०

18 ति० stands for ०ति न मन्यते।  19 A $C_1$ & $C_2$ वीर्य्यको०

मिति॰[1]। समाधिरसमाहित इति॰। प्रज्ञा दौष्प्रज्ञमिति॰। [2]आक्रुष्टोऽहमिति॰। वन्दितोऽहमिति॰। सत्कृतोऽहमिति॰। असत्कृतोऽहमिति॰। तत् कस्य हेतोः। न हि शारिपुत्र अनुत्पाद आक्रुष्टोऽहमिति मन्यते। वन्दितोऽहमिति॰। [3]सत्कृतोऽहमिति॰। असत्कृतोऽहमिति॰। तत् कस्य हेतोस्तथाहि प्रज्ञापारमिता सर्वमननाः समुच्छिनत्ति। इह शारिपुत्र बो॰ महासत्त्वस्य प्रज्ञापारमितायां चरतो ये गुणा भवन्ति न ते सर्वे श्रावकप्रत्येकबुद्धानां संविद्यन्ते[4]। स इमान्[5] गुणान् परिपूरयन्[6] सत्त्वांश्च परिपाचयति बुद्धक्षेत्रं च परिशोधयति सर्वाकारज्ञतां चानुप्राप्नोति।

पुनरपरं शारिपुत्र बो॰ महासत्त्वः प्रज्ञापारमितायां चरन्[7] सर्वसत्त्वानामन्तिके समचित्ततामुत्पादयति[8]। सर्वसत्त्वानामन्तिके [9]समचित्ततामुत्पाद्य सर्वधर्मसमतां प्रतिलभते। सर्वधर्मसमतां प्रतिलभ्य सर्वसत्त्वान् सर्वधर्मसमतायां प्रतिष्ठापयति। स दृष्ट एव धर्मे बुद्धानां भगवतां प्रियो भवति मनआपश्च[10]। सर्वबोधिसत्त्वानां च सर्वश्रावकानां च प्रत्येकबुद्धानां च प्रियो भवति मनआपश्च। स[11] यत्र यत्रोपपद्यते तत्र तत्र न[12] जातु चक्षुषा[13] अमनआपानि रूपाणि पश्यति। न श्रोत्रेणामनआपान् शब्दान् शृणोति[14]। न घ्राणेना-

---

1 See p. 89, fn. 18 2 $C_2$ चाकुष्ट $C_1$ चाक्रष्टो

3 $C_1$ सक्तश्चा॰ 4 $C_2$ ॰ते

5 $C_2$ इमेन ; $C_1$ इमागुणा ; A इमां

6 $C_2$ पूरयेत् 7 $C_2$ मितां चरन ; A & $C_1$ omit सर्व।

8 $C_1$ ॰दयेति

9 $C_1$ समचित्तागुत्पाद्य सर्वधर्मसमचित्ता प्रतिलभ्य सर्वसत्वान् ; $C^2$ omits सर्वधर्मसमता प्रतिलभ्य।

10 $C_2$ मनचापानपश्च 11 A सम 12 $C_2$ omits न।

13 $C_2$ जातोचंक्षुषा 14 $C_2$ शृणाति

मनआपान् गन्धान्[1] जिघ्रति । न जिह्वयाऽमनआपान्[2] रसानास्वादयति । न कायेनामनआपान् स्पर्शान् स्पृशति । न मनसाऽमनआपान् धर्मान् विजानाति । न च परिहीयते अनुत्तरायाः[3] सम्यक्संबोधेः ।

अस्मिन् खलु पुनः प्रज्ञापारमितानिर्देशे[4] निर्दिश्यमाने त्रीणि भिक्षुणीशतानि भगवन्तं [5]यथावृतैश्चीवरैरभिच्छादयामासुरनुत्तरायां[6] सम्यक्संबोधौ चित्तान्युत्पादयामासुः । अथ खलु भगवांस्तस्यां वेलायां स्मितमकरोत् । अथ खल्वायुष्मानानन्दः[7] समुत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् । को भगवन् हेतुः कः प्रत्ययः स्मितस्य प्रादुर्भावाय । नाहेतुकं [8]नाप्रत्ययं बुद्धा भगवन्तः[9] स्मितं प्रादुष्कुर्वन्ति[10] । भगवानाह । एतान्यानन्द त्रीणि भिक्षुणीशतानि एकषष्टितमे कल्पे महाकेतुनामानस्तथागता[11] अर्हन्तः सम्यक्संबुद्धा लोके उत्पत्स्यन्ते[12] । तारकोपमे कल्पे[13] इतश्च्युतानि सन्ति[14] अक्षोभ्यस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बुद्धक्षेत्रे उपपत्स्यन्ते । षष्टिश्च देवपुत्रसहस्राणि यानि यान्यनया[15] धर्मदेशनया परिपाचितानि तानि

---

1 $C_2$ गंधेन ; A गन्धां ; $C_1$ गंधा

2 A & $C_1$ write न् र as न्र ; $C_2$ •नस्यना•

3 A •यां

4 $C_2$ निर्देश्य निर्दिश्यमाने

5 $C_2$ •विवंचीव•

6 $C_2$ •रां

7 $C_2$ •न्दोत्थायसनादेकांसमुत्तरां संगं ; A & $C_1$ •कांश•

8 $C_1$ •कनाप्र•

9 $C_1$ वतः

10 •दुर्कं•

11 $C_1$ •गतन्नर्हन्तः

12 $C_2$ •ते

13 Mss. drop it.

14 Ś. 309 has इतश्च्युताः समाना अक्षोभ्यस्य ।

15 A धर्मतया for यान्यनया

तानि मैत्रेयस्य तथागतस्यार्हतः[1] सम्यक्संबुद्धस्यान्तिके परिनिर्वास्यन्ति[2]।

अथ खलु भगवतोऽनुभावेन तस्यां वेलायां पूर्वस्यां दिशि बुद्धसहस्रं पश्यन्ति स्म चतस्रः परिषदो भगवतः शाक्यमुनेः [3]पर्षन्मण्डलात्। एवं दक्षिणस्यां दिशि बुद्धसहस्रं पश्यन्ति पश्चिमायां दिशि० and so on with regard to the rest of the ten directions up to अथ ऊर्ध्वमेकैकस्यां दिशि बुद्धसहस्रं पश्यन्ति महतो बुद्धक्षेत्रगुणव्यूहान्[4] पश्यन्ति न चेह सहायां[5] लोकधातौ तान् बुद्धक्षेत्रगुणव्यूहान्[4] पश्यन्ति यान्[6] दशसु दिक्षु तेषां बुद्धानां भगवतां बुद्धक्षेत्रगुणव्यूहान्[7] पश्यन्ति स्म। अथ खलु भगवतः शाक्यमुनेः[8] [9]पर्षन्मण्डलाद्दशभिः[10] प्राणिसहस्रैः प्रणिधानानि कृतानि[11] वयं तानि पुण्यानि करिष्यामो[12] यैः पुण्यैरेतेषु बुद्धक्षेत्रेषूपपत्स्यामह इति। अथ खलु भगवांस्तेषां कुलपुत्राणामाशयं विदित्वा तस्यां वेलायां स्मितमकरोत्। आनन्द आह। को भगवान् हेतुः कः प्रत्ययः स्मितस्य प्रादुर्भावाय। भगवानाह। पश्यसि [13]त्वमानन्देमानि दशप्राणिसहस्राणि। आनन्द आह। पश्यामि भगवन्। भगवानाह। एतान्यानन्द दशप्राणिसहस्राणि इतश्च्युतानि तेषु दशसु दिक्षु बुद्धक्षेत्रसहस्रेषूपपत्स्यन्ते। न च कदाचित्तथागतविरहितानि भविष्यन्ति। ततः पश्चाद् व्यूहराजनामानस्तथागता[14] लोके उत्पत्स्यन्ते।

---

1 $C_2$ ०न्त 2 $C_1$ ०स्यन्ते

3 $A_1$ $C_1$ & $C_2$ पर्षत् म० 4 $C_2$ गुणविहाण

5 A चे सहायां 6 $C_2$ या 7 $C_2$ व्यूहाण

8 $C_1$ & $C_2$ ०मुनि: 9 $C_1$ & $C_2$ पर्षत् म०

10 $C_2$ ०लादश० 11 $C_2$ drops it. 12 A ०ष्यामो

13 $C_2$ त्वामा० 14 $C_1$ ०गतो……०स्यते

अथ खल्वायुष्मान्[1] शारिपुत्र आयुष्मांश्च महामौद्गल्यायन आयुष्मांश्च [2]सुभूतिरायुष्मांश्च महाकाश्यपः एते चान्ये च सम्बहुला अभिज्ञाता अभिज्ञाता भिक्षवो बोधिसत्त्वाश्च भिक्षुभिक्षुण्युपासकोपासिकाश्च[3] भगवन्तमेतदवोचन्[4]। महापारमितेयं भगवन् बो॰ महासत्त्वानां यदुत प्रज्ञापारमिता। अग्रपारमितेयं विशिष्टपा॰[5] प्रवरपा॰ अनुत्तरपा॰ निरुत्तरपा॰ असमपा॰ आकाशपा॰ स्वलक्षणशून्यतापा॰ सर्वगुणसमन्वागतपा॰। [6]अनवमर्दनीयपा॰ भगवन् बो॰ महासत्त्वानां यदुत प्रज्ञापारमिता[7]। अत्र हि भगवन् प्रज्ञापारमितायां[8] चरद्भिर्बोधिसत्त्वैर्महासत्त्वैरसमसमं दानं दत्तं [9]तैरसमसमा दानपारमिता परिपूरिता[10]। तैरसमसम आत्मभावः[11] प्रतिलब्धः। तेऽसमसमस्य धर्मस्य लाभिनो भविष्यन्ति यदुतानुत्तरायाः सम्यक्संबोधेः[12]। तैरसमसमं शीलं रक्षितं [13]तैरसमसमा शीलपारमिता परिपूरिता etc[14]. तैरसमसमा क्षान्ति-[15]र्भाविताऽसमसमा क्षान्तिपारमिता परिपूरिता etc. तैरसमसमं वीर्यमारब्धं तैरसमसमवीर्यपारमिता[16] परिपूरिता etc. तैरसमसमं

---

1 $C_1$ drops न् of all आयुष्मान्।

2 $C_2$ सुभूतेरा॰

3 $C_2$ ॰पाशकोपश्चिकाश्च

4 $C_1$ & $C_2$ ॰चत्

5 For पा॰ read पारमितेयं।

6 $C_2$ अनवमद्दनिय॰

7 $C_2$ ॰मितायां

8 A ॰मितांयाच ; $C_2$ मितायाच ; $C_1$ मितां च॰

9 $C_1$ ॰समे॰

10 $C_2$ ॰ताः

11 $C_1$ ॰भावे

12 $C_2$ बोधिः

13 A & $C_1$ drop सम।

14 Etc. stands for तैरसमसम आत्मभावः प्रतिलब्धस्ते ऽसमसमस्य धर्मस्य लाभिनो भविष्यन्ति यदुतानुत्तरायाः सम्यक् संबोधिः।

15 $C_1$ ॰वितैर॰

16 $C_2$ changes the order by putting ध्यान before वीर्य।

ध्यानमुत्पादितम् तैरसमसमध्यानपारमिता परिपूरिता etc. तैरसमसमा[1] प्रज्ञा भाविता तैरसमसमा प्रज्ञापारमिता परिपूरिता etc.

अत्रैव च त्वं भगवन् प्रज्ञापारमितायां चरत्वसमसमस्य रूपस्य [2]लाभी जातोऽसमसमाया वेदनायाः संज्ञायाः संस्काराणामसमसमस्य विज्ञानस्य लाभी[2] जातोऽसमसमां बोधिमभिसंबुद्धो[3]ऽसमसमं धर्मचक्रं[4] प्रवर्तितम्। एवमतीतानागतप्रत्युत्पन्ना बुद्धा भगवन्तोऽत्रैव प्रज्ञापारमितायां चरन्तोऽनुत्तरां सम्यक्सम्बोधिमभिसंबुद्धा[5] अभिसंभोत्स्यन्ते[6] च अभिसम्बुध्यन्ते च। तस्मात्तर्हि भगवन् सर्वधर्माणां पारं गन्तुकामेन बो॰ महासत्त्वेन प्रज्ञापारमितायां योगः करणीयः। नमस्करणीयास्ते भगवन् बो॰ महासत्त्वा येऽस्यां प्रज्ञापारमितायां चरन्ति सदेवमानुषासुरेण लोकेन[7]। एवमुक्ते भगवांस्तान् सम्बहुलान् श्रावकांस्तांश्च बोधिसत्त्वानेतदवोचत्[8]। एवमेतत् कुलपुत्रा एवमेतत्। नमस्करणीयास्ते बो॰ महासत्त्वाः[9] सदेवमानुषासुरेण [10]लोकेन येऽस्यां प्रज्ञापारमितायां चरन्ति। तत् कस्य हेतोः। बोधिसत्त्वं हि शारिपुत्रागम्य[11]लोकस्य लोके[12] प्रादुर्भावो भवति। मनुष्यलोकस्य देवलोकस्य [13]क्षत्रियमहाशालकुलानां ब्राह्मणमहाशालकुलानां गृहपतिमहाशालकुलानां राज्ञां चक्रवर्त्तिनां चातुर्महाराजकायिकानां देवानां त्रयस्त्रिंशानां देवानां etc.[14] up to नैव संज्ञानासंज्ञायतनोपगानां देवानां लोके[15]

---

1 $C_1$ ॰समो  2 $C_2$ लाभि  3 $C_1$ ॰बधो ; A बुद्धा

4 $C_1$ ॰समधर्मं॰  5 A & $C_1$ ॰बोधिं सम्यक्बुद्धा

6 $C_1$ omits it ; $C_2$ ते  7 $C_2$ ॰सुरलोकेन

8 A ॰मेतद॰  9 $C_1$ drops visarga.  10 $C_2$ सुरलोकेन

11 Ś. 314 puts it thus : बोधिसत्त्वं हि कुलपुत्रा महासत्त्वमागम्य।

12 A लोक ; $C_2$ लोप्रादुर्भवति  13 $C_2$ क्षत्रीय॰

14 The usual list of devas is mentioned here, for which see ante, p. 33.  15 A लोक

प्रादुर्भावो भवति। स्रोतआपन्नानां सकृदागामिनामनागामिनामर्हतां प्रत्येकबुद्धानां बोधिसत्त्वानां महासत्त्वानां तथागतानामर्हतां सम्यक्संबुद्धानां लोके प्रादुर्भावो भवति[1]। बोधिसत्त्वं हि शारिपुत्रागम्य त्रयाणां रत्नानां[2] लोके प्रादुर्भावो भवति। लौकिकानाञ्च सर्वजीवितोप[3]करणानामन्नपानवस्त्रशय्यासनग्लानप्रत्ययभैषज्यपरिष्काराणां मणिमुक्तावैदुर्य[4]शंखशिलाप्रवाल[5]जातरूपरजतानां[6] लोके प्रादुर्भावो भवति। यावच्छारिपुत्र सर्वसुखोपधानां दिव्यानां मानुष्यकाणां च भवसुखानाञ्च निर्वाणसुखानाञ्च लोके प्रादुर्भावो भवति सर्वशः[7] शारिपुत्र [8]बोधिसत्त्वमागम्य। तत् कस्य हेतोः। बोधिसत्त्वो हि शारिपुत्र चर्याञ्चरन् षट्सु पारमितासु सत्त्वान् नियोजयति दानं दापयति शीलं समादापयति क्षान्त्यां[9] प्रतिष्ठापयति वीर्ये नियोजयति ध्याने प्रतिष्ठापयति प्रज्ञायां नियोजयति। सर्वे च सत्त्वा[10] बोधिसत्त्वमागम्य प्रज्ञापारमितायां चरन्ति। तस्माच्छारिपुत्र बो० महासत्त्वो सर्वसत्त्वानां हितसुखाय प्रतिपन्नो भवति।

अथ खलु भगवांस्तस्यां वेलायां जिह्वेन्द्रियं निर्नामयित्वा इमं त्रिसाहस्रं महासाहस्रं लोकधातुं जिह्वेन्द्रियेणाच्छादयामास। अथ खलु ततो जिह्वेन्द्रियादनेकवर्णा[11] नानावर्णा अर्चिषो[12] निःसृत्य पूर्वस्यां दिशि गङ्गानदीवालुकोपमान्[13] लोकधातून् आभयावभासयामासुः। एवं दक्षिणस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातूना-

---

1 $C_2$ भवंति
2 $C_2$ रत्नानानां
3 $C_2$ °रणानामरापाचवसत्रसर्थ्यासनग्लान
4 $A_1$ $C_1$ वैतुर्य्य
5 $C_1$ प्रवाद ; A प्रवात
6 $C_2$ रजटानां
7 $C_1$ drops visarga ; $C_2$ सर्वं:
8 $C_2$ बोधिबोधिसत्त्व°
9 $C_2$ क्षान्तिं
10 $C_2$ सर्वसत्त्वा
11 $C_1$ रणा ; $C_2$ वर्णै
12 A अर्चिषा ; $C_2$ अर्चिषा
13 $C_1$ drops न्।

भयावभासयामासुः and so on with regard to the rest of the ten directons up to ऊर्ध्वं दिशि गङ्गानदीवालुकोपमान् लोकधातूनाभयावभासयामासुः। अथ खलु पूर्वस्यां यावदूर्ध्वं दिशि गङ्गानदीवालुकोपमेभ्यो बुद्धक्षेत्रेभ्योऽप्रमेयासंख्येया बोधिसत्त्वास्तान् प्रभाव्यूहान् दृष्ट्वा[2] स्वकस्वकेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः परिपृच्छन्ति स्म। कस्यायं भगवन्ननुभावो[3] येनायमेवं प्रभावभासः संदृश्यते। ते बुद्धा भगवन्तस्तान् बोधिसत्त्वान् महासत्त्वानेवमाहुः। एष कुलपुत्राः पश्चिमायां[4] यावदधो दिग्भागे सहायां लोकधातौ शाक्यमुनिर्नाम तथागतोऽर्हन् सम्यक्संबुद्धस्तिष्ठति ध्रियते[5] यापयति तेन जिह्वेन्द्रियं निर्नमय्य[6] सर्वस्यां दिशि गङ्गानदीवालुकोपमा लोकधातवोऽवभासेन स्फुटीकृता[7] यावदूर्ध्वं दिशि एवं दशसु दिक्षु गङ्गानदीवालुकोपमा[8] लोकधातवोऽवभासेन स्फुटीकृता यदुत बो° महासत्त्वानां प्रज्ञापारमितां[9] देशनाय संप्रकाशनाय। ते बोधिसत्त्वास्तांस्तथागतानेवमाहुः। गमिष्यामो वयं भगवंस्तां सहालोकधातुं तं भगवन्तं शाक्यमुनिं तथागतं दर्शनाय वन्दनाय पर्युपासनाय तांश्च दशदिक्संनिपतितान् बो° महासत्त्वांस्तां च प्रज्ञापारमितां श्रवणाय। ते बुद्धा भगवन्त आहुः। गच्छत कुलपुत्रा यस्येदानीं कालं मन्यध्वम्। अथ खलु ते बो° महासत्त्वा दशभ्यो दिग्भ्यो[10] पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीर्गृहीत्वा नानारत्नसुवर्णरूप्यपुष्पपुटानि च गृहीत्वा महत्या तूर्यताडावचरसंगीत्या[11] भगवन्तं शाक्यमुनि[12]मुपसंक्रान्ता अभूवन्। अथ खलु चातुर्महाराजकायिका देवास्त्रयस्त्रिंशा देवा etc. (the usual list[13] of

---

1 $C_1$ drops न्  
2 $C_2$ दृष्टा  
3 $C_2$ भावोऽयं येन  
4 $C_1$ & $C_2$ पश्चिमे ; A पश्चिम  
5 $C_1$ °न्ते  
6 $C_2$ निर्नमय्या  
7 $C_2$ ताः  
8 $C_2$ पमेषु  
9 $C_2$ मितायां  
10 A दिग्भ्याः ; दिग्भ्यः  
11 $C_2$ °गीत्यभिगं°  
12 A drops मुनिं।  
13 See ante p. 33.

gods) up to अकनिष्ठाश्च देवा दिव्यपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताका[1] उत्पलकुमुदपुण्डरीकमन्दारवकेसरतमालपत्राणि गृहीत्वा येन भगवांस्तेनोपसंक्रामन्[2]। अथ खलु ते बोधिसत्त्वास्ते च देवास्तैः पुष्पधूपगन्धमाल्यविलेपनैस्तथागतमर्हन्तं सम्यक्संबुद्धमवकिरन्ति स्म। अथ खलु तानि पुष्पाणि विहायसमभ्युद्गम्यास्य[3] त्रिसाहस्रमहासाहस्रस्य[4] लोकधातोरुपरिष्टात् पुष्पकूटागारः संस्थितोऽभूत्[5]। चतुस्थूणश्चतुरस्रो भागतः[6] सुविभक्तो रमणीयो मनोरमः। अथ खलु ततः पर्षदः प्राणिकोटीनियुतशतसहस्रमुत्थायासनादेकांस[7]मुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। वयं भगवन्ननागतेऽध्वनि एवंरूपाणां धर्माणां[8] लाभिनो[9] भवेम यथा [10]तथागतोऽर्हन् सम्यक्संबुद्धः[11]। एवञ्च श्रावकगणं परिकर्षेम[12] एवञ्च पर्षदि धर्मं देशयेम यथैतर्हि[13] तथागतो[14] भगवान् धर्मं देशयति। अथ खलु भगवांस्तेषां कुलपुत्राणामाशयं[15] विदित्वा सर्वधर्माणां चानुत्पादायानिरोधायानभिसंस्कारायाप्रादुर्भावाय[16] क्षान्तिं विदित्वा स्मितमकरोत्। अथ ततोऽनेकवर्णा रश्मयो भगवतो मुखद्वारान्निश्चरितास्ते सर्वावन्तं लोकं प्रदक्षिणीकृत्य [17]पुनरेवागता भगवतो मूर्धन्यन्तर्धीयन्ते स्म। अथ खल्वायुष्मानानन्द उत्थायासनादेकांसमुत्तरासङ्गं[18] कृत्वा दक्षिणं जानुमण्डलं

---

1 A & $C_1$ omit चीवरच्छत्रध्वजपताका ; $C_2$ पताकावेप्युत्पकुमुद°

2 $C_2$ °क्रामित् ; correctly उपसमक्रामन्। 3 $C_2$ °भ्युगम्य°

4 $C_2$ °साहस्रो 5 $C_2$ °भूतः 6 $C_2$ चतुस्संभावतः 7 A °कांश°

8 $C_1$ omits धर्माणा। 9 A लाभिना

10 A drops तथा। 11 A °बुद्धे:

12 $C_1$ °गणपरिकर्षंम ; A °गणस्यविकर्षेम ; $C_2$ °गुणं परिकषेम

13 $C_2$ यथेतर्हिं 14 $C_2$ °गतो 15 $C_2$ °माश्रयं

16 $C_1$ °स्कारां प्रा° 17 $C_1$ पुनरेववागता 18 A °कांश°

पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययः स्मितस्य प्रादुर्भावाय[1]। अथ खलु भगवानायुष्मन्तमानन्दमेतदवोचत्। [2]एतदानन्द प्राणिकोटीनियुतशतसहस्रमष्टषष्ट्या कल्पकोटीभिर्बोध्यङ्गपुष्पनामान[3]स्तथागता [4]अर्हन्तः सम्यक्संबुद्धा लोके उत्पत्स्यन्ते पुष्पाकरे[5] कल्पे॥ इति षड्भिक्षाववादः॥[6]

अथ खलु भगवांस्तस्यां[7]वेलायामायुष्मन्तं सुभूतिमामन्त्रयामास। प्रतिभातु ते[8] सुभूते बो० महासत्त्वानां प्रज्ञापारमितामारभ्य यथा बो० महासत्त्वाः प्रज्ञापारमितायां निर्यायुरिति। अथ खलु तेषां बो० महासत्त्वानां तेषाञ्च महाश्रावकाणां तेषाञ्च देवपुत्राणामेतदभवत्[9]। किं नु खल्वायुष्मान्[10] सुभूतिः स्वकेन प्रज्ञाप्रतिभानबलाधानेन[11] बो० महासत्त्वानां प्रज्ञापारमितामुपदेक्ष्यत्युताहो[12] बुद्धानुभावेन। अथ खल्वायुष्मान् सुभूतिर्बुद्धानुभावेन तेषां बो० महासत्त्वानां तेषाञ्च महाश्रावकाणां तेषाञ्च देवपुत्राणां चेतसैव चेतःपरिवितर्कमाज्ञाय आयुष्मन्तं शारिपुत्रमेतदवोचत्। यत् किञ्चिदायुष्मन् शारिपुत्र भगवतः[13] श्रावका भाषन्ते देशयन्त्युपदिशन्ति सर्वः स तथागतस्य पुरुषकारो वेदितव्यः[14]। तत् कस्य हेतोः यो हि तथागतेन धर्मो देशितस्तस्यां[15] धर्मदेशनायां शिक्षमाणास्तां धर्मतां साक्षात्कुर्वन्ति तां धर्मतां[16]

---

1 $C_1$ वायः 2 $C_2$ यतदा० 3 $C_1$ पुमामानस्तथा०

4 $C_2$ ०गतोऽर्हन्त 5 $C_1$ पुकरे

6 Here the first chapter of the Śatasāhasrikā ends and the second chapter begins.

7 $C_2$ भगवन्बोधिसत्वानां महासत्वानांस्तस्यां 8 $C_2$ ०तुन्ते

9 $C_2$ ०दवोचत्; $C_1$ omits it. 10 $C_1$ किन्नुषल्वायुष्मान्

11 A प्रज्ञापारमिता बलाधानेन

12 $C_2$ त्युतोहोम्बुद्धा०; $C_1$ ०तो 13 $C_2$ ०वन्तः

14 $C_2$ कारोभवेदितव्यः 15 $C_2$ ०शितस्यां 16 $C_2$ ०धर्मताच०

साक्षात्कृत्वा यद् यदेव भाषन्ते देशयन्त्युपदिशन्ति सर्वं तद्धर्मतया[1] न विरुध्यते[2]। तथागत एवैष शारिपुत्र उपाययोगेन बो॰ महासत्त्वानां प्रज्ञापारमितामुपदेक्ष्यति[3]। अविषयोऽत्र शारिपुत्र सर्वश्रावकप्रत्येकबुद्धानां बो॰ महासत्त्वानां प्रज्ञापारमिता[4]मुपदेष्टुम्॥ इति दर्शनमार्गाववादोपक्षेपः[5]॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। बोधिसत्त्व इति भगवन्नुच्यते। कतमस्यैतद् भगवन् धर्मस्याधिवचनं यदुत बोधिसत्त्व इति। नाहं भगवन् धर्मं समनुपश्यामि यदुत बोधिसत्त्व इति। सोऽहं भगवन् [6]बोधिसत्त्वमसमनुपश्यन् प्रज्ञापारमितामप्यनुपलभमानः कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्यामि[7]। भगवानाह। नाममात्रमिदं सुभूते यदुत प्रज्ञापारमिता इति बोधिसत्त्व इति च। तदपि च बोधिसत्त्वनाम नाध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यते। तद् यथापि नाम सुभूते सत्त्वः सत्त्व[8] इति चोच्यते। न च काचित् सत्त्वोपलब्धिः। यच्च[9] तन्नाम तत् प्रज्ञप्तिमात्रं प्रज्ञप्तिधर्मः प्रज्ञप्तिसत्॥ इति दुःखे धर्मज्ञानक्षान्तिः[10]॥

तस्माच्च [11]धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र[12] नामसङ्केतमात्रेण व्यवह्रियते। एवमात्मसत्त्वजीवपोषपुरुषपुद्गल[13]मनुजमानवकारकवेदक-

---

1 $C_2$ ॰मताया 2 A विरुध्यते 3 A ॰देक्ष्यन्ति

4 $C_2$ ॰मितायामु॰ 5 $C_2$ ॰मार्गो॰ ; A & $C_1$ ॰दोपक्षप:

6 $C_2$ बोधिसमनु॰

7 A ॰तायां वेदिष्यामि ; $C_2$ ॰ववन्दिष्याम्यनुशासिष्यामि ; $C_2$ वदिष्यामि

8 $C_2$ बोधिसत्व ; A सत्व मत्व

9 $C_2$ यचतन्नामन्त्रप्ति ; $C_1$ यच्चतनाम

10 A दुःख॰ ; $C_2$ दुःखधर्मक्षान्ति । See Kośa. vi. 26.

11 $C_2$ प्रज्ञप्तोत्पा ; A drops च.

12 $C_2$ ॰न्यत्र 13 $C_1$ पुग्गल ; A पुद्गल

जानकपश्यकाः सर्वं एते प्रज्ञप्तिधर्माः सर्वं एते अनुत्पादा अनिरोधा यावदेव नाममात्रेण व्यवह्रियन्ते। एवमेव सुभूते या च प्रज्ञापारमिता यश्च बो० महासत्त्वो यच्च[1] बोधिसत्त्वनाम सर्वं एते प्रज्ञप्तिधर्माः सर्वं एते अनुत्पादा अनिरोधा यावदेव नाममात्रेण[2] व्यवह्रियते। तद् यथापि नाम सुभूते इदमाध्यात्मिकं[3] रूपमिति [4]धर्मप्रज्ञप्तिमात्रं तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र नामसङ्केतमात्रेण व्यवह्रियते। वेदनेति०[5] संज्ञेति०[6]। संस्कारा इति०। विज्ञानमिति०। एवमेव सुभूते प्रज्ञापारमिता[7] च बोधिसत्त्वश्च बोधिसत्त्वनाम च सर्वं एते प्रज्ञप्तिधर्मास्तेषाञ्च प्रज्ञप्तिधर्माणां नोत्पादो न निरोधोऽन्यत्र नामसङ्केतमात्रेण व्यवह्रियते। चक्षुरिति०। यदुत चक्षुरिति तच्च चक्षुर्नाध्यात्मं न वहिर्धा नोभयमन्तरेणोपलभ्यते। श्रोत्रमिति०। यदुत श्रोत्रमिति तच्च श्रोत्रं नाध्यात्मं न वहिर्धा नोभयमन्तरेणोपलभ्यते। घ्राणमिति०[8]। जिह्वेति०। काय इति०। मन इति०। रूपमिति०। शब्द इति०। गन्ध इति०। रस इति०। स्पर्श इति०। धर्म इति०। चक्षुर्धातूरूपधातुश्चक्षुर्विज्ञानधातुः इति०। ते च नाध्यात्मं न वहिर्धा नोभयमन्तरेणोपलभ्यन्ते। श्रोत्रधातुः शब्दधातुः श्रोत्रविज्ञानधातुरिति०। ते च ना०[9]। घ्राणधातुर्गन्धधातुर्घ्राणविज्ञानधातुरिति०। ते च ना०। जिह्वाधातूरसधातुर्जिह्वाविज्ञानधातुरिति०। ते च ना०।

---

1 $C_2$ ये बोधि

2 $C_2$ ०मात्र

3 A & $C_1$ ०मध्या०

4 $C_2$ drops धर्म.

5 ०ति० stands for ०ति सुभूते धर्मप्रज्ञप्तिमात्रमेतत्। तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र नाम सङ्केतमात्रेण व्यवह्रियते.

6 A संज्ञप्ति

7 $C_2$ ०मिता चरन्बोधिसत्त्वनाम

8 The preceding lines are repeated :here after changing the substantives, viz. घ्राण, जिह्वा etc. by रूप or चक्षु.

9 ना० as before stands for नाध्यात्मं न वहिर्धा नोभयमन्तरेणोपलभ्यन्ते,

कायधातुः स्प्रष्टव्यधातुः कायविज्ञानधातुरिति० । ते च ना० । मनोधातुर्धर्मधातुर्मनोविज्ञानधातुरिति० । ते च ना० । एवमेव सुभूते यदुच्यते प्रज्ञापारमितेति[1] । बोधिसत्त्व इति बोधिसत्त्वनामेति च धर्मप्रज्ञप्तिमात्रमेतत् । तस्याश्च धर्मप्रज्ञप्तेर्नोत्पादो न निरोधोऽन्यत्र नामसङ्केतमात्रेण व्यवह्रियते । तच्च नाम नाध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यते । तद् यथापि नाम सुभूते [2]यदेतदाध्यात्मिकं शरीरं शरीरमिति व्यवह्रियते शिरो ग्रीवा[3] उदरमंसौ[4] स्कन्धौ बाहू पृष्ठं पार्श्वकाः[5] कट्यूरू जङ्घे पादावस्थीनीति व्यवह्रियन्ते ते च प्रज्ञप्तिधर्मास्तेषाञ्च नोत्पादो etc. as in p. 100, ll. 9–10. एवमेव सुभूते यदुच्यते प्रज्ञापारमितेति बोधिसत्त्व इति बोधिसत्त्वनामेति च सर्वं एते प्रज्ञप्तिधर्मास्तेषाञ्च नोत्पादो etc. as in p. 100, ll. 9–10. तद् यथापि नाम सुभूते बाह्यं तृणकाष्ठं शाखापत्रपलाशं[6] सर्वं तं[7] नानानामधेयैर्व्यपदिश्यते[8] तेषाञ्च नाम्नां नोत्पादो etc. as before. तानि च नामानि नाध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यन्ते । एवमेव सुभूते यदुच्यते प्रज्ञापारमितेति etc. as before[9] ll. 9–11. तानि च नामानि नाध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यन्ते । एवं हि सुभूते बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् । पुनरपरं सुभूते तद् यथापि नाम स्वप्नप्रतिश्रुत्कामरीचिप्रतिभासमायोपमास्तथागतनिर्मिताः सर्वे ते धर्मप्रज्ञप्तिमात्रास्तेषाञ्च नोत्पादो etc.

---

1 $C_2$ drops इति. 2 $C_2$ यदेसदा 3 $C_2$ गिवा०

4 A मंशो ; $C_1$ मंसो ; in all mss both अंसौ and स्कन्धौ appear.

5 $C_2$ पार्श्वकाकटिऊरुजंघोपादाव्यस्थीनिति

6 $C_2$ पलासं 7 $C_2$ सर्वंतन्न० ; A omits नाना. 8 $C_1$ ०न्ते

9 In this case after प्रज्ञप्तिधर्मा and before तेषां, ते च नामधेयैर्व्यपदिश्यन्ते is added.

एवमेव सुभूते यदुच्यते प्रज्ञापारमितेति० etc. as before p. 101, ll. 9-11. एवं हि सुभूते बो० महासत्त्वेन प्रज्ञापारमितायाञ्चरता नामसङ्केत[1]प्रज्ञप्त्यामववादप्रज्ञप्त्यां धर्मप्रज्ञप्त्याञ्च शिक्षितव्यम् ॥ इति दुःखे धर्मज्ञानम्[2] ॥

एवं हि सुभूते प्रज्ञापरिमितायां चरन् बो० महासत्त्वो न रूपं नित्यमिति समनुपश्यति। न रूपं सुखमिति स०[3]। न रूपं दुःखमिति स०। न रूपमात्मेति स०। न रूपमनात्मेति स०। न रूपं शान्तमिति स०। न रूपमशान्तमिति स०। न रूपं शून्यमिति स०। न रूपमशून्यमिति स०। न रूपं निमित्तमिति स०। न रूपमनिमित्तमिति स०। न रूपं प्रणिहितमिति स०। न रूपमप्रणिहितमिति स०। न रूपं संस्कृतमिति स०। न रूपमसंस्कृतमिति स०। न रूपमुत्पन्नमिति स०। न रूपमनुत्पन्नमिति स०। न रूपं निरुद्धमिति स०। न रूपमनिरुद्धमिति स०। न रूपं विविक्तमिति स०। न रूपमविविक्तमिति स०। न रूपं कुशलमिति स०। न रूपमकुशलमिति स०। न रूपं सावद्यमिति स०। न रूपमनवद्यमिति स०। न रूपं सास्रवमिति स०। न रूपमनास्रवमिति स०। न रूपं संक्लेशमिति स०। न रूपं निःक्लेशमिति स०। न रूपं लौकिकमिति स०। न रूपं लोकोत्तरमिति स०। न रूपं संक्लेशमिति स०। न रूपं व्यवदानमिति स०। न रूपं संसार इति स०। न रूपं निर्वाणमिति स०। न वेदना नित्येति स० etc.[4] न संज्ञा नित्येति स०

---

1 $C_2$ सङ्केत प्रज्ञप्ता च शिक्षितव्यं

2 Mss. have दुःख but see Kośa, vi. 26.

3 स० stands for समनुपश्यति।

4 The qualifying terms used with Rūpa are used with each of the remaining Skandhas, Dhātus etc., so these repetitions have been omitted here. In place of Rūpa if any one

etc. न संस्कारा नित्या इति समनुपश्यति etc. न विज्ञान- मित्यमिति समनुपश्यति etc.

एवं न चक्षुर्धातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न रूपधातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न चक्षुर्विज्ञानधातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न चक्षुर्धातुः सुख इति वा दुःख इति वा समनुपश्यति। न रूपधातुः सुख इति वा दुःख इति वा समनुपश्यति। न चक्षुर्विज्ञानधातुः सुख इति वा दुःख इति वा समनुपश्यति etc.[1]। एवं न श्रोत्रधातुर्न शब्दधातुर्न श्रोत्रविज्ञानधातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न श्रोत्रधातुर्न शब्दधातुर्न श्रोत्रविज्ञानधातुः सुख इति वा दुःख इति वा समनुपश्यति etc.,[1] न घ्राणधातुर्न गन्धधातुर्न घ्राणविज्ञानधातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न घ्राणधातुर्न गन्धधातुर्न घ्राणविज्ञानधातुः सुख इति वा दुःख इति समनुपश्यति etc. न जिह्वाधातुर्न रसधातुर्न जिह्वाविज्ञानधातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न जिह्वाधातुर्न रसधातुर्न जिह्वाविज्ञानधातुः सुख इति वा दुःख इति वा समनुपश्यति etc. न कायधातुर्न स्प्रष्टव्यधातुर्न कायविज्ञानधातुर्नित्य इति वा अनित्य इति वा समनुपश्यति। न कायधातुर्न स्प्रष्टव्यधातुर्न कायविज्ञानधातुः सुख इति वा दुःख इति वा समनुपश्यति etc. न मनोधातुर्न धर्मधातुर्न मनोविज्ञानधातुर्नित्य इति वा अनित्य इति वा समनु-

---

of the Skandhas or Dhātus be substituted, the text can be made up. The only thing that needs pointing out is that the qualifying terms follow the gender and case of the substantives.

1 The qualifying terms are arranged here a bit differently, otherwise the same. For Nitya or Sukha, substitute Ātmā, Śānta etc. of the list used with Rūpa on p. 102.

पश्यति। न मनोधातुर्न धर्मधातुर्न मनोविज्ञानधातुः सुख इति वा दुःख इति वा समनुपश्यति etc.

यदपि चक्षुरूपचक्षुर्विज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि न नित्यमिति वा नानित्यमिति वा समनुपश्यति। एवं न सुखमिति वा न दुःखमिति वा समनुपश्यति। नात्मेति वा नानात्मेति वा समनुपश्यति[1]। यदपि श्रोत्रशब्दश्रोत्रविज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुखं वा अदुःखासुखं वा तदपि न नित्यमिति वा नानित्यमिति वा etc.[1] यदपि घ्राणगन्धघ्राणविज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि न नित्यमिति वा नानित्यमिति वा etc. यदपि जिह्वारसजिह्वाविज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि न नित्यमिति वा नानित्यमिति वा etc. यदपि कायस्प्रष्टव्यकायविज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि न नित्यमिति वा नानित्यमिति वा समनुपश्यति। न सुखमिति न दुःखमिति नात्मेति नानात्मेति etc. यदपि कायस्पृष्टव्य[2]कायविज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा। तदपि न संसारमिति वा न निर्वाणमिति वा समनुपश्यति[3]। यदपि मनोधर्ममनोविज्ञानसंस्पर्शप्रत्ययादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि न नित्यमिति वा नानिन्यमिति वा समनुपश्यति। न सुखमिति न दुःखमिति नात्मेति नानात्मेति etc. as before॥ इति दुःखेऽन्वयज्ञानक्षान्तिः[4]॥

---

1 The qualifying terms mentioned above on p. 102. are arranged here only a bit differently. 2 $C_2$ संस्पृष्टव्य

3 The Mss. omit the repetitions; so the form as given in the Mss. is retained here.

4 $C_2$ दुःखदन्यप्रज्ञानक्षान्ति ; $C_1$ दुःखेऽन्वय॰

तत् कस्य हेतोः। तथाहि बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् प्रज्ञापारमितां[1] प्रज्ञापारमितानाम तं[2] च बोधिसत्त्वं[3] तत् च बोधिसत्त्वनाम न समनुपश्यति। संस्कृते वा [4]धातावसंस्कृते वा धातौ[5] तथाहि सुभूते बोधिसत्त्वः प्रज्ञापारमितायां चरन्नेतान्[6] सर्वधर्मान् कल्पयति न विकल्पयति[7]। सोऽविकल्पे[8] धर्मे स्थित्वा स्मृत्युपस्थानानि भावयति। प्रज्ञापारमितायां चरन् न प्रज्ञापारमितां नापि प्रज्ञापारमितानाम समनुपश्यति। न बोधिसत्त्वं नापि बोधिसत्त्वनाम समनुपश्यति। एवं सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गपारमिता-तथागतबलवैशारद्यप्रतिसंविदष्टादशावेणिकान् बुद्धधर्मान्[9] भावयति as before ll. 6–8 up to समनुपश्यति अन्यत्र सर्वाकारज्ञता मनसिकारात्॥ इति दुःखेऽन्वयज्ञानम्[10]॥

तथाहि तेन प्रज्ञापारमितायां चरता धर्मलक्षणं प्रतिविद्धं भवति। यच्च धर्माणां लक्षणं तन्न संक्लिश्यते न व्यवदायते[11]। एवं हि सुभूते बो॰ महासत्त्वेन प्रज्ञापारमितायां चरता नामसांकेतिकी धर्मप्रज्ञप्ति-रनुबोद्धव्या॥ इति [12]समुदये धर्मक्षान्तिः॥

स नामसांकेतिक्या धर्मप्रज्ञप्त्या अवबुध्य[13] न रूपमभिनिवेक्ष्यते न वेदनामभि॰[14]। न संज्ञामभि॰। न संस्कारानभि॰। न विज्ञानमभि॰।

---

1 $C_2$ omits it.
2 $C_2$ ॰नामतञ्च ; A & $C_1$ नामितं
3 $C_2$ ॰सत्वः तच्च
4 $C_2$ धतां व
5 $C_2$ ॰तोः
6 $C_2$ चरतान् सर्वं॰ ; $C_2$ चरंता सर्वं॰
7 $C_2$ drops न विकल्पयति.
8 $C_2$ ॰काल्प
9 $C_2$ ॰वेणिकाबुद्धधर्मा भाव॰
10 $C_2$ दुःखेन्वज्ञानं
11 $C^2$ वेदयते
12 A & $C_1$ समुदयधर्मं॰
13 Mss. अवबुद्धया
14 For भि॰ read अभिनिवेक्ष्यते

न चक्षुरभि॰। न रूपमभि॰। न चक्षुर्विज्ञानमभि॰। न चक्षुःसंस्पर्शमभि॰। यदपि चक्षुःसंस्पर्शप्रत्ययोत्पन्नं वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि नाभि॰। न श्रोत्रमभि॰ न शब्दं न श्रोत्रविज्ञानं न श्रोत्रसंस्पर्शं यदपि श्रोत्रसंस्पर्शप्रत्ययोत्पन्नं वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा तदपि नाभि॰ and so on with घ्राण, जिह्वा, काय and मनस्[1]। नापि संस्कृतधातुमभि॰। नाप्यसंस्कृतधातुमभि॰॥ इति समुदये धर्मज्ञानम्॥

स न दानपारमिताम[2]भिनिवेक्ष्यते। न शीलपा॰[3]। न क्षान्तिपा॰। न वीर्यपा॰। न ध्यानपा॰। न प्रज्ञापा॰। न नामापि न लक्षणमपि तासामभिनिवेक्ष्यते। न [4]कायेऽभिनिवेक्ष्यते। न मांसचक्षुष्यभि॰[5]। न दिव्यचक्षुष्यभि॰। न प्रज्ञाचक्षुष्यभि॰। न धर्मचक्षुष्यभि॰। न बुद्धचक्षुष्यभि॰। नाभिज्ञास्वभि॰। नाध्यात्मशून्यतायामभि॰। न बहिर्धाशून्यतायामभि॰। नाध्यात्मबहिर्धाशून्यतायामभि॰। न शून्यताशून्यतायां न महाशून्यतायां न परमार्थशून्यतायां न संस्कृतशून्यतायां नासंस्कृतशून्यतायां नात्यन्तशून्यतायां नानवराग्रशून्यतायां नानवकारशून्यतायां न प्रकृतिशून्यतायां न सर्वधर्मशून्यतायां न स्वलक्षणशून्यतायां नानुपलम्भशून्यतायां नाभावस्वभावशून्यतायां न भावशून्य-

---

1 In the previous set of sentences with श्रोत्र, if anyone of these terms be substituted for श्रोत्र, the text can be easily made out. For शब्द in these sentences, गन्ध, रस, स्प्रष्टव्य and धर्म are to be substituted. A full enumeration of these has already been made. See pp. 103-4.

2 $C_2$ मितायामभि॰ throughout

3 पा॰ stands for पारमितामभिनिवेक्ष्यते.

4 Ś. 380 बोधिकाये

5 भि॰ stands for भिनिवेक्ष्यते.

तायां [1]नाभावशून्यतायां न स्वभावशून्यतायां न परभावशून्यतायामभिनिवेक्ष्यते। न तथतायां न भूतकोट्यां न धर्मधातौ न सत्त्वपरिपाके न [2]बुद्धक्षेत्रपरिशुद्धौ नोपायकौशल्ये[3]ऽभिनिवेक्ष्यते। तत् कस्य हेतोः। तथाहि ते सर्वधर्मा न संविद्यन्ते [4]यश्चाभिनिविशेत येन चाभिनिविशेत यत्र चाभिनिविशेत॥ इति समुदयेऽन्वयज्ञानक्षान्तिः॥

एवं हि सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायाञ्चरन्ननभिनिविष्टः सर्वधर्मेषु दानपारमितया विवर्द्धते। शीलपा॰[5]। क्षान्तिपा॰। वीर्यपा॰। ध्यानपा॰। प्रज्ञापा॰। बोधिसत्त्वनियाममवक्रामति॥ इति समुदयेऽन्वयज्ञानम्॥

एवं हि सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्नविनिवर्तनीयां भूमिमवक्रामति॥ इति निरोधे[6]धर्मज्ञानक्षान्तिः॥

एवं चरन् सुभूते बोधिसत्त्वो महासत्त्वोऽभिज्ञाः परिपूरयति[7]। अभिज्ञाः परिपूर्य[8] बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामति सत्वांश्च परिपाचयति बुद्धांश्च भगवतः सत्करोति गुरूकरोति मानयति तेनैव कुशलमूलेन तेषां बुद्धानां भगवतां चान्तिक उपपद्यते धर्मं च शृणोति श्रुतांश्च धर्मा न जातूच्छेत्स्यन्ते[9] यावदाबोधिमण्डादिति [10]धारणीमुखानि प्रतिलभ्यते समाधिमुखानि प्रतिलभ्यते। एवं हि सुभूते बो॰ महासत्त्वेन प्रज्ञापारमितायां चरता नामसांकेतिकी धर्मप्रज्ञप्तिरनुबोद्धव्या॥ इति निरोधे धर्मज्ञानम्॥

---

1 $C_2$ drops it. 2 $C_2$ ॰क्षेत्रेषु 3 A & $C_2$ के॰

4 $C_2$ येन चाभिनिविशेत यत्रचाभिनिविशेते

5 पा॰ stands here for पारमितया विवर्द्धते.

6 A निरोधे 7 A परिपूरति 8 $C_2$ परिपूरय

9 $C_1$ जातच्छेत्स्यन्ते ; $C_2$ धर्मं न 10 $C_2$ धारणि॰

तत् किं मन्यसे सुभूते यदुच्यते बो० महासत्त्व इति अपि तु रूपं बोधिसत्त्व इति। वेदना बोधिसत्त्व इति। संज्ञा बो०[1]। संस्कारा बो०। विज्ञानं बो०। तत् किं मन्यसे सुभूतेऽन्यत्र रूपाद्बोधिसत्त्व इति। अन्यत्र वेदनाया बो०। etc.[2]। तत्[3] किं मन्यसे सुभूते रूपे बोधिसत्त्व इति। वेदनायां बो०। etc.। तत् किं मन्यसे सुभूते बोधिसत्त्वे रूपमिति। बोधिसत्त्वे वेदनेति। etc.। तत् किं मन्यसे सुभूते अरूपो बो०। अवेदना बो०। etc.। तत् किं मन्यसे सुभूते चक्षुर्बोधिसत्त्वोऽन्यत्र चक्षुषश्चक्षुषि बोधिसत्त्वो बोधिसत्त्वे चक्षुरचक्षुष्को बोधिसत्त्व इति। श्रोत्रं बोधिसत्त्वोऽन्यत्र श्रोत्राच्छ्रोत्रे[4] बोधिसत्त्वो बोधिसत्त्वे श्रोत्रमश्रोत्रो बोधिसत्त्व इति। and so on with घ्राण, जिह्वा, काय, मनस्। सुभूतिराह। नो हीदम् भगवन्। भगवानाह। तत् किं मन्यसे सुभूते रूपं बोधिसत्त्वोऽन्यत्र रूपाद्रूपे बोधिसत्त्वो बोधिसत्त्वे रूपमरूपो बोधिसत्त्व इति। and so on with शब्द, गन्ध, रस, स्पर्श[5] and धर्म। तत् किं मन्यसे सुभूते चक्षूरूपचक्षु[6]र्विज्ञानानि बोधिसत्त्वोऽन्यत्र[7] एभ्य एषु सः। एतानि तस्मिन् विना चक्षूरूपचक्षुर्विज्ञानैर्बोधिसत्त्व इति। तत् किं मन्यसे

---

1 बो० stands for बोधिसत्त्व इति.

2 Etc. stands for the Skandhas dropped here. All the Skandhas are mentioned, as रूप, वेदना have been done.

3 $C_1$ & $C_2$ drop some of the sentences.

4 $C_2$ ०ते for त्रे

5 Mss. drop the sentences constructed with रस and स्पर्श.

6 $C_2$ चक्षुविज्ञा०

7 $C_2$ अन्यत्र एतेषु एषु च। एतानि

सुभूते श्रोत्रशब्दश्रोत्रविज्ञानानि बोधिसत्त्वो अन्यत्र एभ्य एषु सः। एतानि तस्मिन् विना श्रोत्रशब्दश्रोत्रविज्ञानैर्बोधिसत्त्व इति। and so on with जिह्वारसजिह्वाविज्ञानानि। कायस्प्रष्टव्यकायविज्ञानानि। मनोधर्ममनोविज्ञानानि। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते पृथिवीधातुर्बोधिसत्त्वोऽन्यत्र पृथिवीधातोस्तत्र[1] बोधिसत्त्व बोधिसत्त्वे[2] पृथिवीधातुरपृथिवीधातुको[3]-बोधिसत्त्व इति। and so on with अब्धातु, तेजोधातु, वायुधातु, आकाशधातु and विज्ञानधातु। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते अविद्या बोधिसत्त्वोन्यत्राविद्यायाः अविद्यायां बोधिभत्त्वो बोधिसत्त्वेऽविद्याऽनविद्या बोधिसत्त्व इति। तत् किं मन्यसे सुभूते संस्कारा बोधिसत्त्वोऽन्यत्र संस्कारेभ्यः संस्कारेषु बोधिसत्त्वो बोधिसत्त्वे संस्कारा असंस्कारा बोधिमत्त्व इति। and so on with विज्ञान, नामरूप, षडायतन, स्पर्श, वेदना, तृष्णा, उपादान, भव, जाति and जरामरण। सुभूतिराह। नो हीदं भगवन्॥ इति निरोधेऽन्वयज्ञानक्षान्तिः॥

भगवानाह। तत् किं मन्यसे सुभूतेऽपि नु या रूपस्य तथता सा बोधिसत्त्वोऽन्यत्र रूपतथतायां रूपतथतायां बोधिसत्त्वो बोधिसत्त्वे रूपतथता अरूपतथता[4] बोधिसत्त्व इति। तत् किं मन्यसे सुभूते या वेदनातथता सा बोधिसत्त्वोऽन्यत्र वेदनातथताया वेदनातथतायां बोधिसत्त्वो बोधिसत्त्वे वेदनातथता अवेदनातथता बोधिसत्त्व इति। and so on with संज्ञातथता, संस्कारतथता, विज्ञानतथता।

---

1 $C_2$ धातुस्तत्र   2 A सत्वे

3 A writes here धातु but afterwards धातुका.

4 $C_2$ drops many of these repetitions.

सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते यदि[1] व्यस्तेषु न बोधिसत्त्वः [2]समस्तेषु भवतु[3] या [4]स्कन्धतथता सा[5] बोधिसत्त्वोऽन्यत्र स्कन्धतथतायाः स्कन्धतथतायां बोधिसत्त्वो बोधिसत्त्वे स्कन्धतथता अस्कन्धतथता बोधिसत्त्व इति। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते या चक्षूरूपचक्षुर्विज्ञानतथता सा बोधिसत्त्वोऽन्यत्रचक्षूरूपचक्षुर्विज्ञानतथतायाश्चक्षुरूपचक्षुर्विज्ञानतथतायां बोधिसत्त्वो बोधिसत्त्वे चक्षूरूपचक्षुर्विज्ञानतथता अचक्षूरूपचक्षुर्विज्ञानतथता बोधिसत्त्व इति। एवं श्रोत्रशब्दश्रोत्रविज्ञानतथता, घ्राणगन्धघ्राणविज्ञानतथता, जिह्वारसजिह्वाविज्ञानतथता, कायस्प्रष्टव्यकायविज्ञानतथता, मनोधर्ममनोविज्ञानतथता।। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते या पृथिवीधातुतथता सा बोधिसत्त्वोऽन्यत्र पृथिवीधातुतथतायाः पृथिवीधातुतथतायां बोधिसत्त्वो बोधिसत्त्वे पृथिवीधातुतथता अपृथिवीधातुतथता बोधिसत्त्व इति and so on with अब्धातुतथता, तेजोधातुतथता, वायुधातुतथता, आकाशधातुतथता and विज्ञानधातुतथता। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते यदि व्यस्तेषु धातुषु न बोधिसत्त्वः समस्तेषु etc. as before p. 109, putting धातु for स्कन्ध। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते या चक्षुस्तथता सा बोधिसत्त्वोऽन्यत्र चक्षुस्तथतायाश्चक्षुस्तथतायां बोधिसत्त्वो बोधिसत्त्वे चक्षुस्तथता अचक्षुस्तथता बोधिसत्त्व इति। एवं या श्रोत्रतथता घ्राणतथता जिह्वातथता कायतथता। तत् किं मन्यसे सुभूते या मनस्तथता सा बोधिसत्त्वोऽन्यत्र मनस्तथताया मनस्तथतायां बोधिसत्त्वो बोधिसत्त्वे मनस्तथता

---

1 $C_2$ यद्विव्यस्तेषु स्कन्धेषु न बोधिसत्वः  2 $C_2$ समन्तेषु

3 $C_2^{m}$ भवंतु  4 $C_2$ स्कन्धे  5 $C$ & $C_2$ च

अमनस्तथता बोधिसत्त्व इति। In the same way with रूप, शब्द, गन्ध, रस, स्प्रष्टव्य and धर्मतथता। यदि सुभूते व्यस्तेष्वायतनेषु न बोधिसत्त्वः समस्तेषु भवतु या सुभूते आयतनतथता सा बोधिसत्त्वोऽन्यत्रायतनतथताया आयतनतथतायां बोधिसत्त्वो बोधिसत्त्वे आयतनतथता अनायतनतथता बोधिसत्त्व इति। सु०[1] । भ०[2] । अविद्यातथता सा बोधिसत्त्वोऽन्यत्राविद्यातथताया अविद्यातथतायां बोधिसत्त्वो बोधिसत्त्वे अविद्यातथता अनविद्यातथता बोधिसत्त्वः। एवं या संस्कारतथता विज्ञानतथता नामरूपतथता षडायतनतथता स्पर्शतथता वेदनातथता तृष्णातथता उपादानतथता भवतथता जातितथता जरामरणतथता। यदि व्यस्तेषु प्रतीत्यसमुत्पादाङ्गेषु न बोधिसत्त्वः समस्तेषु भवतु या प्रतीत्यसमुत्पादतथता बोधिसत्त्वोऽन्यत्र प्रतीत्यसमुत्पादतथतायाः प्रतीत्यसमुत्पादतथतायां बोधिसत्त्वो बोधिसत्त्वे प्रतीत्यसमुत्पादतथता अप्रतीत्यसमुत्पादतथता बोधिसत्त्व इति। सु०[1] ।

किं पुनस्त्वं सुभूतेऽर्थवशमुपादायैवं वदसि। न रूपं बोधिसत्त्व इति न वेदना न संज्ञा न संस्कारा न विज्ञानं, न पृथिवीधातुर्नाब्धातुर्न तेजोधातुर्न वायुधातुर्नाकाशधातुर्न विज्ञानधातुः, न रूपाणि न शब्दा न गन्धा न रसा न स्प्रष्टव्या न धर्माः, न चक्षुर्न श्रोत्रं न घ्राणं न जिह्वा न कायो न मनः, न चक्षूरूपचक्षुर्विज्ञानं न श्रोत्रशब्दश्रोत्रविज्ञानं न घ्राणगन्धघ्राणविज्ञानं न जिह्वारसजिह्वाविज्ञानं न कायस्प्रष्टव्यकायविज्ञानं न मनोधर्ममनोविज्ञानं नाविद्या एवं न संस्कारविज्ञाननामरूपषडायतनस्पर्शवेदनातृष्णोपादानभवजातिजरामरणं बोधिसत्त्व इति यावत्स्कन्धधात्वायतनप्रतीत्यसमुत्पादो बोधिसत्त्व इति। न रूप-

1 सु० stands for सुभूतिराह। नो हीदं भगवन्।

2 भ० stands for भगवानाह। तत् किं मन्यसे सुभूते।

तथता बोधिसत्त्व इति। न वेदनातथता yāvan[1] न विज्ञानतथता, न पृथिवीधातुतथता yāvan न विज्ञानधातुतथता, न चक्षुस्तथता yāvan न मनस्तथता, न रूपतथता yāvan न धर्मतथता, न चक्षूरूपचक्षुर्विज्ञानतथता yāvan न मनोधर्ममनोविज्ञानतथता, नाविद्यातथता yāvan न जरामरणतथता, यावन्न स्कन्धधात्वायतनतथता न प्रतीत्यसमुत्पादतथता बोधिसत्त्व इति। सुभूतिराह। अत्यन्ततया भगवन् बोधिसत्त्वो न विद्यते नोपलभ्यते। तत् कुतो रूपं बोधिसत्त्वो भविष्यति। वेदना संज्ञा संस्कारा विज्ञानम् बोधिसत्त्वो भविष्यति। अत्यन्ततया भगवन् बोधिसत्त्वो न विद्यते नोपलभ्यते। तत् कुतः पृथिवीधातु बोधिसत्त्वो भविष्यति। एवमब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुर्बोधिसत्त्वो भविष्यति। अ०[2]। तत् कुतो रूपम्बोधिसत्त्वो भविष्यति। एवं शब्दो yāvat धर्मो बोधिसत्त्वो भविष्यत्येवञ्चक्षुः श्रोत्रं yāvan मनो बोधिसत्त्वो भविष्यति। तत् कुतश्चक्षूरूपचक्षुर्विज्ञानानि बोधिसत्त्वो भविष्यति। एवं श्रोत्रशब्दश्रोत्रविज्ञानानि yāvan मनोधर्ममनोविज्ञानानि बोधिसत्त्वो भविष्यति। अविद्या बोधिसत्त्वो भविष्यति। एवं संस्कारविज्ञानं yāvat जरामरणं बोधिसत्त्वो भविष्यति। अ०। तत् कुतः पुनरस्य रूपतथता उपलभ्यते। वेदनातथता yāvat विज्ञानतथता उपलभ्यते। अ०। तत् कुतः पृथिवीधातुतथतोपलभ्यते। एवमब्धातुः yāvat विज्ञानधातुतथतोपलभ्यते। अ०। तत् कुतो रूपतथतोपलभ्यते। एवं शब्दः yāvat धर्मतथतोपलभ्यते। एवं चक्षुस्तथता yāvat मनस्तथतोपलभ्यते। एवं चक्षूरूपचक्षुर्विज्ञानतथतो

---

1 Henceforth yāvan or yāvat will be used to indicate the omissions in the enumeration of skandhas, dhātus, āyatanas, pratityasamutpādāṅgas.

2 अ० stands for अत्यन्ततया भगवन् बोधिसत्त्वो न विद्यते नोपलभ्यते।

पलप्स्यते yāvat मनोधर्ममनोविज्ञानतथतोपलप्स्यते। अ०[1]। तत् कुतोऽस्याविद्यातथतोपलप्स्यते। एवं संस्कारतथता yāvat जरामरणतथतोपलप्स्यते। एवमेकैकशः स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु व्यस्तसमस्तेषु अ०। तत् कुतोऽस्य स्कन्धधात्वायतनप्रतीत्यसमुत्पादतथतोपलप्स्यते। नैतत् स्थानं विद्यते। भगवानाह। साधु साधु सुभूते। एवं खलु सुभूते बो० महासत्त्वेन सत्त्वानुपलब्ध्या प्रज्ञापारमितानुपलब्धौ शिक्षितव्यम्॥ इति निरोधेऽन्वयज्ञानम्॥

भगवानाह। तत् किं मन्यसे सुभूते रूपस्यैतदधिवचनं बोधिसत्त्व इति। वेदनायाः संज्ञायाः संस्काराणां विज्ञानस्यैतदधिवचनं बोधिसत्त्व इति। सुभूतिराह। नो हीदं भगवन्। भगवानाह। तत् किं मन्यसे सुभूते रूपनित्यताया रूपानित्यताया एतदधिवचनं बोधिसत्त्व इति। रूपसुखताया रूपदुःखताया रूपात्मताया रूपानात्मताया रूपशान्तताया रूपाशान्तताया एतदधिवचनं बोधिसत्त्व इति। तत् किं मन्यसे सुभूते वेदनानित्यताया वेदनाऽनित्यताया एतदधिवचनं बोधिसत्त्व इति। वेदनासुखताया वेदनादुःखताया वेदनात्मताया वेदनाऽनात्मताया वेदनाशान्तताया वेदनाऽशान्तताया एतदधिवचनं बोधिसत्त्व इति and so on with संज्ञा, संस्काराः, विज्ञानम्। तत् किं मन्यसे सुभूते रूपशून्यताया रूपाशून्यताया रूपनिमित्तताया रूपानिमित्तताया रूपप्रणिहितताया रूपाप्रणिहितताया एतदधिवचनं बोधिसत्त्व इति। एवं वेदना संज्ञा संस्काराः। तत् किं मन्यसे सुभूते विज्ञानशून्यताया विज्ञानाशून्यताया विज्ञाननिमित्तताया विज्ञानानिमित्तताया विज्ञानप्रणिहितताया विज्ञानाप्रणिहितताया एतदधिवचनं बोधिसत्त्व इति। सुभूतिराह। नो हीदं भगवन्। भगवानाह। किं पुनस्त्वं सुभूतेऽर्थवशं[2] प्रतीत्य एवं वदसि। न रूपस्य नित्यताधिवचनं अनित्यताधिवचनं बोधिसत्त्व इति। एवं न सुखाधि०[3] न दुःखाधि०

1 अ० stands for अत्यन्ततया भगवन् बोधिसत्त्वो न विद्यते नोपलभ्यते.

2 $C_2$ अर्थवशं

3 For धि० read धिवचनं.

नात्माधि० नानात्माधि० नानात्माधि० न शान्ताधि० न शून्यताधि० नाशून्यताधि० न निमित्ताधि० नानिमित्ताधि० न रूपस्य प्रणिहिताधि० नाप्रणिहिताधि० बोधिसत्त्व इति। न वेदनाया नित्याधिवचनं etc.[1] as before with each of the remaining स्कन्धs.

सुभूतिराह। अत्यन्ततया रूपं न विद्यते नोपलभ्यते। कुतो रूपाधिवचनं बोधिसत्त्वो भविष्यति। अत्यन्तया भगवन्ननित्यं न विद्यते नोपलभ्यते। कुतो वेदनाधिवचनं बोधिसत्त्वो भविष्यति and so on with the other स्कन्धs.।

अत्यन्ततया भगवन् नित्यं न विद्यते नोपलभ्यते। कुतो रूपानित्यताधिवचनं बोधिसत्त्वो भविष्यति। अत्यन्ततया भगवन्ननित्यं न विद्यते नोपलभ्यते। कुतो रूपानित्यताधिवचनं बोधिसत्त्वो भविष्यति। एवं न सुखाधिवचनं न दुःखाधि० नात्माधि० नानात्माधि० न शान्ताधि० नाशान्ताधि० न शून्यताधि० नाशून्यताधि० न निमित्ताधि० नानिमित्ताधि० न प्रणिहिताधि० नाप्रणिहिताधि० बोधिसत्त्वो भविष्यति। एवं वेदनासंज्ञासंस्काराः। अत्यन्ततया भगवन् नित्यं न विद्यते नोपलभ्यते। कुतो विज्ञाननित्यताधि० बोधिसत्त्वो भविष्यति। अत्यन्ततया भगवन्नित्यं न विद्यते नोपलभ्यते। कुतो विज्ञानानित्यताधिवचनं बोधिसत्त्वो भविष्यति। एवं न सुखाधिवचनं etc. as in p. 113, l. 24—p. 114, l. 3. भगवानाह। साधु साधु सुभूते। एवं हि सुभूते बो० महासत्त्वेन प्रज्ञापारमितायां चरता रूपाधिवचनमनुपलभमानेन वेदनाधि०[2] संज्ञाधि० संस्काराधि० विज्ञानाधि० रूपस्य नित्यानित्याधि० सुखदुःखाधि० शान्ताशान्ताधि० शून्याशून्याधि० निमित्तानिमित्ताधि० प्रणिहिताप्रणिहिताधि०। वेदनाया नित्या etc. as before ll. 21-22. संज्ञाया नित्या etc. संस्काराणां नित्या etc. विज्ञानस्य नित्या etc. प्रज्ञापारमितायां शिक्षितव्यम्॥ इति मार्गे धर्मज्ञानक्षान्तिः॥

---

1 In the previous sentence, रूप is to be replaced by वेदना संज्ञा, संस्काराः, विज्ञानम्।

2 For धि० read धिवचनमनुपलभमानेन

यदपि सुभूते एवं वदसि। नाहं तं धर्मं समनुपश्यामि यदुत बोधिसत्त्व इति। न हि सुभूते धर्मो[1] धर्मधातुं समनुपश्यति। नापि धर्मधातुर्धर्मं[2] समनुपश्यति ॥ इति मार्गे[3] धर्मज्ञानम् ॥

न सुभूते रूपधातुधर्मधातुं समनुपश्यति। नापि धर्मधातू रूपधातुं समनुपश्यति। न वेदनाधातुर्धर्मधातुं समनुपश्यति। नापि धर्मधातुर्वेदनाधातुं समनुपश्यति and so on with the other स्कन्धs and आयतनs ॥ इति मार्गेऽन्वयज्ञानक्षान्तिः[4] ॥

न सुभूते संस्कृतधातुरसंस्कृतधातुं समनुपश्यति। नाप्यसंस्कृतधातुः संस्कृतधातुं समनुपश्यति ॥ इति मार्गेऽन्वयज्ञानम् ॥ इति दर्शनमार्गाववादः ॥

न च सुभूते संस्कृतव्यतिरेकेणासंस्कृतं शक्यं प्रज्ञपयितुम्। नाप्यसंस्कृतव्यतिरेकेण संस्कृतं शक्यं प्रज्ञपयितुम्। एवं हि सुभूते महासत्त्वः प्रज्ञापारमितायां चरन् न कञ्चिद्धर्मं समनुपश्यति। असमनुपश्यन्नोत्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते। न चास्य क्वचिद्धर्मे चित्तमवलीयते[6]। न विप्रतिसारी[7] भवति मानसम्। तत् कस्य हेतोः। तथाहि सुभूते महासत्त्वः प्रज्ञापारमितायां चरन् रूपं न समनुपश्यति। वेदनां न समनुपश्यति and so also the other स्कन्धs, आयतनs, धातुs, प्रतीत्यसमुत्पादाङ्गs। रागं न समनुपश्यति। द्वेषं न स०[8]। मोहं न स०। आत्मानं न स०। [9]सत्त्वजीवपोषपुरुषपुद्गलमनुजमानवकारकवेदकजानकपश्यकान् न स०। कामधातुं न स०[10]। रूपधातुं न स०। आरूप्यधातुं न स०। आकाशधातुं

1 $C_2$ drops it ; A has धर्माधर्म

2 $C_1$ धातुधर्मः ; $C_2$ धर्म धातु धर्म

3 Mss. मार्ग

4 A & $C_2$ मार्गेन्वय ; $C_2$ drops about 2 leaves after this.

5 $C_2$ कां चित्

6 $C_2$ क्वचिद्धर्मे धर्मं चित्तमपरीयते

7 $C_2$ विपतिo

8 स० = समनुपश्यति

9 $C_2$ पुगल

10 $C_2$ adds here द्वेषं न समनुपश्यति

न स०। श्रावकं न स०। प्रत्येकबुद्धं न स०। बोधिसत्त्वं न स०। श्रावकधर्मान्[1] न स०। प्रत्येकबुद्धधर्मान् न स०। बोधिसत्त्वधर्मान्[2] न स०। बुद्धं न स०। बुद्धधर्मान् न स०। बोधिं न स०। यावत् सर्वधर्मान् न स०। सर्वधर्मानसमनुपश्यन् नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापत्स्यते।

सुभूतिराह। केन कारणेन भगवन् महासत्त्वस्य चित्तं नावलीयते न संलीयते। भगवानाह। तथाहि सुभूते महासत्त्वश्चित्तचैतसिकान् धर्मान् नोपलभते[3] न समनुपश्यति। एवं हि सुभूते महासत्त्वस्य चित्तं नावलीयते न संलीयते। सुभूतिराह। कथं भगवन् बो० महासत्त्वस्य नोत्त्रस्यति[4] मानसम्। भगवानाह। तथाहि सुभूते बो० महासत्त्वो मनश्च मनोधातुं च नोपलभते न[5] समनुपश्यति। एवं हि सुभूते बो० महासत्त्वस्य नोत्त्रस्यति मानसम्। एवं हि सुभूते बो० महासत्त्वेन सर्वधर्मानुपलब्ध्या प्रज्ञापारमितायां चरितव्यम्। स चेत् सुभूते बो० महासत्त्वः प्रज्ञापारमितानुचरंस्तां प्रज्ञापारमितां[6] नोपलभते न समनुपश्यति तच्च बोधिसत्त्वं तच्च बोधिसत्त्वनाम तच्च बोधिचित्तं नोपलभते[7] न समनुपश्यति। एष[8] एव बोधिसत्त्वस्य महासत्त्वस्याववादः। प्रज्ञापारमितायामेषैवानुशासनी।[9]

अथ खलु आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। रूपं परिज्ञातुकामेन भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् yāvat[10] विज्ञानं परिज्ञातुकामेन भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। चक्षुः

---

1 $C_2$ श्रावकबुद्धधर्मान्

2 $C_2$ ०धर्माण समनु०

3 A ०लभ्यते

4 $C_2$ नोत्तस्रात

5 $C_2$ drops न in many places.

6 $C_1$ ०मिताम्नोप० ; $C_2$ चरता प्रज्ञापारमिताम्नोपलभ्यते

7 $C_2$ ०लभ्यते

8 A य

9 Here ends the second chapter and commences the third chapter of the *Śatsāhasrikā* (p. 473).

10 'yāvat' as usual stands for the [illegible] omitted here.

प०[1] yāvat मनः प० । रूपं प० yāvat धर्मं प० । चक्षुर्विज्ञानं प० yāvat मनोविज्ञानं प० । चक्षुःसंस्पर्शं चक्षुःसंस्पर्शजां वेदनां प० yāvat[2] मनःसंस्पर्शं मनःसंस्पर्शजां वेदनां प० ।

रागद्वेषमोहान् प्रहातुकामेन भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम् । एवं सत्कायदृष्टिं शीलव्रतपरामर्शं विचिकित्सां कामरागं व्यापादं रूपरागमारूप्यरागं[3] संयोजनानुशयपर्युत्थानानि[4] प्रहातुकामेन etc.[5]

पुनरपरं चतुरो [6]योगानोघान् ग्रन्थानुपादानानि चतुरो विपर्यासान्[7] प्रहातुकामेन etc. दशाकुशलान् कर्मपथान् प्रहातुकामेन दश कुशलान् कर्मपथान् परिज्ञातुकामेन चत्वारि ध्यानानि चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तीश्चत्वारि[8] स्मृत्युपस्थानानि चत्वारि सम्यक्प्रहाणानि चतुर ऋद्धिपादान् पञ्चेन्द्रियाणि पञ्च बलानि सप्त बोध्यङ्गानि आर्याष्टांगमार्गं चतस्रः प्रतिसंविदश्चत्वारि वैशारद्यानि षड्भिज्ञा दशतथागतबलानि अष्टादशावेणिकान् बुद्धधर्मान् परिपूरयितुकामेन भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यं बोध्यङ्गं[9] नाम समाधिं प्रतिलब्धुकामेन सिंहविक्रीडितं समाधिं सिंहविजृम्भितं स०[10] सर्वधारणीमुखं स० शूरंगमं स० [11]रत्नमुद्रं स० चन्द्रप्रभं स० चन्द्रध्वजकेतुं स० सर्वधर्ममुद्रागतं

---

1 प० = परिज्ञातुकामेन भगवन् बोधिसत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्

2 Mss. here do not repeat the lines denoted by प०.

3 $C_2$ drops व्यापादं रूपरागमारूप्यरागं.

4 $C_2$ अनुशय ; $C_1$ पर्युत्थानानि

5 etc. = भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्

6 $C_1$ योगानां घान्ग्रन्थानुपादानां ; $C_2$ योगानोघाणग्रंथ्यानुपादानि ; A योगाघन् ; cf. Mvyut. 109,60-3.

7 $C_2$ विपर्यासा

8 $C_2$ ०प्रत्ति चत्वारि

9 Mvyut. बोध्यङ्गवती

10 स० = समाधि

11 $C_2$ drops it.

स० अवलोकितमुद्रागतं स० नियतऽवजकेतुं स० वज्रोपमं[1] स० सर्वधर्मप्रवेशमुखं स० समाधिराजं स० गगनगञ्जमुद्रं[2] स० बलविशुद्धं[3] स० समुद्गतं[4] स० सर्वधर्मनिरुक्तिनियतप्रवेशं स० सर्वधर्मज्ञानमुद्राप्रवेशं स० सर्वधर्ममुद्राधारणीमुखं[5] स० सर्वधर्मासंप्रमोषं[6] स० सर्वधर्मसमवसरणाकारमुद्रं[7] स० आकाशावस्थितं स० त्रिमण्डलपरिशुद्धं स० अच्युतानागामिन्यभिज्ञं[8] स० पात्रगतं स० ध्वजाग्रकेयूरं स० सर्वक्लेशनिर्दहनं स० [9]चतुर्मारबलविकिरणं स० ज्ञानोल्कां[10] स० दशबलोद्गतं[11] स० [12]आकाशाऽसंगनिरुक्तनिरुपलेपं नाम स०। एतानि चान्यानि च समाधिमुखानि प्रतिलब्धुकामेन[13] भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्।

पुनरपरं भगवन् बो० महासत्त्वेन सर्वसत्त्वानामभिप्रायं परिपूरयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्।

पुनरपरं भगवन् बो० महासत्त्वेन सर्वकुशलमूलानि परिपूरयितुकामेन यैः कुशलमूलैः परिपूर्णैर्नापायेषूपपद्यते न हीनकुलेषूपपद्यते न च

---

1 All the mss. in all places have वज्रोपमं.

2 Ś. 484 राजमुद्रां

3 $C_2$ puts for it अवलोकितमुद्रं; see S. 484. बलव्यूहं.

4 $C_2$ समुगतं   5 Ś. 484 सर्वधारणीमुखमुद्रां

6 S. 484 सर्वधर्मज्ञानाऽधिवासनप्रवेशं and after it has दशदिग्व्यावलोकितं समाधिं.   7 $C_2$ ०वशरणाकार०

8 $C_1$ ०भिज्ञानं ; $C_2$ ०भिज्ञा ; S 484 अच्युताऽभिज्ञां

9 $C_2$ चतुमार० ; Ś. 484 ०बलनिराकरणं

10 $C_1$ & $C_2$ ज्ञानात्कवां ; S. 485 drops it.

11 $C_2$ दशबलोमतं ; Ś. 485 drops it.

12 $C_2$ आकाशमार्गे० ; Ś. 485 संगविमुक्त०

13 A ०लब्धकामेन

श्रावकभूमिं वा न च प्रत्येकबुद्धभूमिं वा पतति न च बोधिसत्त्वमूर्धामं वा पततीति प्रज्ञापारमितायां शिक्षितव्यम् ।

शारिपुत्र आह । कथं वायुष्मन् सुभूते बो० महासत्त्वो मूर्धामं[1] पतति । सुभूतिराह । यदायुष्मन् शारिपुत्र बो० महासत्त्वोऽनुपायकुशलः षट्सु पारमितासु चरन्नुपायकौशलमजानन् शून्यतानिमित्ताप्रणिहितान् समाधी-नागम्य नैव श्रावकभूमिं नैव प्रत्येकबुद्धभूमिं वा पतति नैव बोधिसत्त्वन्याम-मवक्रामति । अयमुच्यते बोधिसत्त्वमूर्धामः । शारिपुत्र आह । केन कारणेन आयुष्मन् सुभूते बो० महासत्त्वस्यायमामः । सुभूतिराह । आम[2] इत्यायुष्मन् शारिपुत्र उच्यते बो० महासत्त्वस्य धर्मतृष्णा ॥ इति भावना-मार्गाववादः ॥ इत्युक्तोऽववादः ॥

शारिपुत्र आह । कतमा आयुष्मन् सुभूते धर्मतृष्णा । सुभूतिराह । इहायुष्मन् शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां [3]चरन् रूपमनित्य-मिति नाभिनिविशते[4] नाधितिष्ठति न संजानीते[5] । दुःखं शून्यम-नात्मकमिति ना०[6] । शून्यमित्यप्रणिहितमिति ना० । वेदनां संज्ञां संस्कारान् विज्ञानमनित्यमिति ना० । दुःखं शून्यमनात्मकमिति[7] ना० । शून्यमित्यप्रणिहितमिति ना० । इयमायुष्मन् शारिपुत्र बो० महासत्त्वस्य [8]आनुलोमिकी धर्मतृष्णा आमः[9] ॥ इति दुःखसत्याधिकारेण [10]मृदुष्म-गतस्यालम्बनाकारविशेषः ॥

एवं रूपं प्रहातव्यमनेन रूपं प्रहातव्यमिति नाभिनिविशते नाधितिष्ठति न

1 A मूद्दध्वानिम्बा ; Ś. 485. मूर्धान

2 Tib. skyon

3 $C_1$ चरं पम इत्यमिति

4 Ś. 485 omits here all नs.

5 $C_1$ संजानीति

6 ना० = नाभिनिविशते नाधितिष्ठति न संजानीते

7 $C_2$ दुःखशून्यतामनात्मकं रूपं

8 $C_2$ आनिलो०

9 $C_2$ आत्मः

10 $C_1$ ०ष्म एतस्यां ; ०ष्मागतेस्या

संजानीते and so on with वेदना, संज्ञा, संस्काराः, विज्ञानम्। एवं दुःखं परिज्ञयमनेन दुःखं परिज्ञयमिति एवं समुदयः प्रहातव्योऽनेन समुदयः प्रहातव्य इति नाभिनिविशते नाधितिष्ठति न संजानीते॥ इति समुदय-सत्याधिकारेण मृदूष्मगतस्यालम्बनाकारविशेषः॥

एवं निरोधः साक्षात्कर्तव्योऽनेन निरोधः साक्षात्कर्तव्य इति। एवं मार्गो भावयितव्योऽनेन मार्गो भावयितव्य इति। अयं संक्लेश इदं व्यवदानमिति। इमे धर्माः[1] सेवितव्याः इमे धर्मा न सेवितव्या इति। इह चरितव्यमिह न चरितव्यम्। अयं मार्गो भावयितव्योऽयं न भावयितव्यः। इयं बोधिसत्त्वस्य शिक्षा इयमशिक्षा[2]। इयं बोधिसत्त्वस्य न दानपारमिता इयं०[3] न शीलपा०[4] इयं० न क्षान्तिपा० इयं० न वीर्यपा० इयं० न ध्यानपा० इयं० न प्रज्ञापा० इदं बोधिसत्त्वस्योपायकौशलमिदमनुपायकौशलमिति नाभिनिविशते नाधितिष्ठति न संजानीतेऽयं बोधिसत्त्वस्य मूर्धामः। स चेदायुष्मन् बो० महासत्त्वः प्रज्ञापारमितायां चरन् इमान धर्मानेवं नाभिनिविशते नाधितिष्ठति न संजानीते इयं बोधिसत्त्वस्यानुलोमिकी धर्मतृष्णा आमः[5]।

शारिपुत्र ताह। कतमः पुनरायुष्मन् सुभूते बो० महासत्त्वस्य न्यामः[6]। सुभूतिराह। इहायुष्मन् शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् नाध्यात्मशून्यतया बहिर्धाशून्यतां[7] समनुपश्यति। न बहिर्धाशून्यतया अध्यात्मशून्यतां[8] समनुपश्यति। न बहिर्धाशून्यतया अध्यात्मबहिर्धाशून्यतां समनुपश्यति। नाध्यात्मबहिर्धाशून्यतया बहिर्धाशून्यतां समनुपश्यति। नाध्यात्मबहिर्धाशून्यतया शून्यताशून्यतां समनुपश्यति। न शून्यताशून्यतया अध्यात्मबहिर्धाशून्यतां समनुपश्यति। न शून्यताशून्यतया महाशून्यतां[9]

1 $C_2$ धर्माण
2 A & $C_1$ drop this
3 इयं० = इयं बोधिसत्त्वस्य
4 पा० = पारमिता
5 $C_2$ आत्मः
6 A & $C_1$ आमः; but see Ś. 489.
7 $C_2$ बहिर्धात्मशून्यतया
8 $C_2$ शून्यमतया
9 A न महाशून्यता शून्यताशून्यतां

समनुपश्यति। And so with all other शून्यताs up to न परभावशून्यतया स्वभावशून्यतां[1] समनुपश्यति। अयं हि शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वन्यामः[2] ॥ इति निरोधसत्याधिकारेण मृदूष्मगतस्यालम्बनाकारविशेषः ॥

पुनरपरं शारिपुत्र बो० महासत्त्वेन प्रज्ञापारमितायां चरतैवं शिक्षितव्यम्। यथा शिक्षमाणेन रूपं ज्ञातव्यं न च तेन मन्तव्यम्। वेदनासंज्ञासंस्कारा विज्ञानं ज्ञा०[3]। चक्षुर्ज्ञातव्यमेवं श्रोत्रं घ्राणं जिह्वा कायो मनो ज्ञा०। शब्दगन्धरसस्प्रष्टव्यधर्मा ज्ञा०। दानपारमिता ज्ञातव्या yāvat प्रज्ञापारमिता ज्ञा०। एवं पञ्चाभिज्ञाः पञ्चचक्षुंषि चत्वारि स्मृत्युपस्थानानि सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गा भावयितव्या न च तैर्मन्तव्यम्। चत्वारि वैशारद्यानि दशतथागतबलानि चतस्रः प्रतिसंविदोऽष्टादशावेणिका बुद्धधर्मा ज्ञा०। एवं हि शारिपुत्र बो० महासत्त्वेन प्रज्ञापारमितायां चरता[4] बोधिचित्तं नाम ज्ञातव्यं [5]समचित्तं नामोदारचित्तं नाम[6] ज्ञा०। तत् कस्य हेतोः। तथा तच्चित्तमचित्तं प्रकृतिश्चित्तस्य प्रभास्वरा।

शारिपुत्र आह। का पुनरायुष्मन् सुभूते चित्तस्य प्रभास्वरता[7]। सुभूतिराह। यदायुष्मन् शारिपुत्र चित्तं न रागेण संयुक्तं न विसंयुक्तं[8]

---

1 If the various शून्यताs be called A, B, C, D, E, the arrangement stands thus :

Not by A, B is seen. Not by C, D is seen.
Not by B, A is seen. Not by D, C is seen.
Not by B, C is seen. Not by D, E is seen.
Not by C, B is seen.

For a list of the शून्यताs, see p. 24, ll. 10-16,

2 See Mvyut. 245,100.

3 For ज्ञा० read ज्ञातव्यं न च (तेन or तैः or ताभिः) मन्तव्यम्

4 $C_2$ चरतायां 5 A समं 6 $C_2$ उदारचित्त

7 $C_2$ प्रभास्वराः 8 $C_1$ विसंयुक्तं

न द्वेषेण[1] सं०। न मोहेन[2] सं०[3]। न पर्युत्थानैः सं०। नावरणैः सं०। नानुशयैः सं०। न संयोजनैः सं०। न [4]दृष्टिकृतैः सं०। इयं शारिपुत्र चित्तस्य प्रभास्वरता।

शारिपुत्र आह। किं पुनरायुष्मन् सुभूते अस्ति तच्चित्तं यच्चित्तमचित्तम्। सुभूतिराह। किं पुनरायुष्मन् शारिपुत्र या अचित्तता तत्रास्तिता वा नास्तिता वा विद्यते वा उपलभ्यते वा। शारिपुत्र आह। न खल्वायुष्मन् सुभूते। सुभूतिराह। स चेदायुष्मन् शारिपुत्र तत्राचित्ततायामस्तिता वा नास्तिता वा न विद्यते नोपलभ्यते वा अपि नु ते युक्त एष पर्यनुयोगः। यदायुष्मन् शारिपुत्र एवमाह अस्ति तच्चित्तं यच्चित्तमचित्तमिति[5]। शारिपुत्र आह। का पुनरेषा आयुष्मन् सुभूते अचित्तता। सुभूतिराह। अविकारा आयुष्मन् शारिपुत्र अविकल्पा [6]अचित्तता या सर्वधर्माणां धर्मता। इयमुच्यते अचित्तता।

शारिपुत्र आह। किं पुनरायुष्मन् सुभूते यथैव तच्चित्तमविकारमविकल्पं[7] तथैव रूपमप्यविकारमविकल्पं yāvat विज्ञानमप्यविकारमविकल्पम्। एवमेव चक्षुर्धातू रूपधातुश्चक्षुर्विज्ञानधातुरविकारोऽविकल्पः yāvat मनोधातुर्धर्मधातुर्मनोविज्ञानधातुरविकारोऽविकल्पः। एवमायतनानि प्रतीत्य-समुत्पादः पारमिता अभिज्ञाः स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रिय-बलबोध्यङ्गमार्गवैशारद्यप्रतिसंविदावेणिका बुद्धधर्मा[8] यावदनुत्तरा सम्यक्-संबोधिरविकारा अविकल्पा। सुभूतिराह। एवमेतदायुष्मन् शारिपुत्र यथैव चित्तमविकारमविकल्प तथैव स्कन्धधात्वायतन etc. (as above ll. 15-17) यावदनुत्तरा सम्यक्संबोधिः। शारिपुत्र आह। साधु साधु आयुष्मन् सुभूते तद् यथापि नाम भगवतः[9] पुत्र औरसो मुखतो जातो धर्मजो धर्म-

---

1 A & $C_1$ द्वेषे; $C_2$ द्वेषेन

2 A & $C_1$ मोहे

3 सं० = संयुक्तं न विसंयुक्तं

4 $C_1$ न दृष्टे

5 $C_1$ & $C_2$ तच्चित्तमचित्तमिति

6 $C_2$ कल्पाचित्तता

7 $C_1$ मविकार विकल्पं

8 A & $C_2$ वेणिकबुद्ध० ; Mss. ०संविद्दलादेणिका०

9 $C_2$ भगवन्तः

निर्मितो धर्मदायादो नामिषदायादः प्रत्यक्षचक्षुर्धर्मेषु[1] कायसाक्षी[2] यथापि [3]नामाग्रारण्यविहारिणां भगवता अग्रतायां निर्दिष्टस्यायमुपदेशः। एवमायुष्मन् सुभूते बो० महासत्त्वेन प्रज्ञापारिमतायां शिक्षितव्यम्। अतश्च बो० महासत्त्वोऽविनिवर्तनीय उपपरीक्षितव्योऽविरहितश्च प्रज्ञापारमितया वेदितव्यः॥ इति मार्गसत्याधिकारेण मृदूष्मगतस्यालम्बनाकारविशेषः॥

श्रावकभूमावपि आयुष्मन् सुभूते शिक्षितुकामेन बो० महासत्त्वेन इयमेव प्रज्ञापारमिता[4] श्रोतव्योद्ग्रहीतव्या धारयितव्या वाचयितव्या पर्यवाप्तव्या योनिशश्च उपपरीक्षितव्या। प्रत्येकबुद्धभूमावपि आयुष्मन् etc. as before ll. 6-8 बोधिसत्त्वभूमावपि आयुष्मन् etc. as before ll. 6-8. बुद्धभूमावपि आयुष्मन् etc. as before' ll. 6-8. तत् कस्य हेतोः। तथाहि अत्र प्रज्ञापारमितायां त्रीणि यानानि विस्तरेणोपदिष्टानि यत्र बोधिसत्त्वैर्महासत्त्वैः श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा बोधिसत्त्वभूमौ वा शिक्षितव्यम्॥ इति सर्वेषां हेतुत्वविशेषः[5]॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। [6]योऽहं भगवन् न बोधिसत्त्वं न प्रज्ञापारमितां विन्दामि[7] नोपलभे न समनुपश्यामि[8] तत् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि। एतदेव[9] मे भगवन् कौकृत्यं स्यात्। योऽहं वस्तु न विन्दामि नोपलभे[10] न समनुपश्यामि सोऽहं भगवन् वस्त्वविन्दन्ननुपलभमानो[11]ऽसमनुपश्यन् कतमेन

---

1 $C_1$ प्रत्यचत्वबुद्धधर्मेषु　　2 $C_2$ ०साक्षि

3 A नामाग्रोऽरण्यं ; $C_2$ नामाग्रोऽरण्योविहाविहारिणां भगवतामग्र०

4 A ०मितायां ; $C_2$ मितायाः

5 Here ends ch. III of Śata and ch. IV commences.

6 $C_2$ यो भग०　　7 $C_1$ विदामि

8 $C_2$ नोपलभ्यते न समनुपश्यति　　9 $C_2$ एवमिदेव

10 $C_2$ नविदानोपलभ्यते

11 $C_2$ ०लंभमानो समनुपश्यति। तत् कतमं धर्मं

धर्मेण कतमं धर्ममववदिष्याम्यनुशासिष्यामि। एतदेव मे भगवन् कौकृत्यं स्यात्। योऽहं सर्वधर्मानविन्दन्ननुपलभमानोऽसमनुपश्यन् नामधेयमात्रेण[1] आयव्ययं कुर्यां बोधिसत्त्व इति वा प्रज्ञापारमितेति वा। अपि तु खलु पुनर्भगवन् तदपि नामधेयं न स्थितं नास्थितं न विष्ठितं नाविष्ठितम्[2]। तत् कस्य हेतोः। अविद्यमानत्वेन तस्य नामधेयस्य एवं तन्नामधेयं न स्थितं नास्थितं न विष्ठितं नाविष्ठितम्। रूपस्याहं भगवन्नायं च व्ययं च नोपलभे[3] न समनुपश्यामि। वेदनाया अहं०[4]। संज्ञाया अहं०। संस्काराणामहं०। विज्ञानस्याहं०[5]। सोऽहं भगवन् रूपादीनामायञ्च व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अनेन भगवन् पर्यायेण तदपि नामधेयं न स्थितं०[6]। तत् कस्य हेतोः। अविद्यमानत्वात् तस्य नामधेयस्य। एवं तन्नाम न स्थितं०। चक्षुषोऽहं श्रोत्रस्याहं yāvat[7] मनसोऽहं०। अपि तु खलु पुनर्भगवन् वेदयितं रूपं[8] नाम वेदना नाम yāvat विज्ञानं नाम। चक्षुः श्रोत्रं yāvat मन इति नाम। एतानि नामधेयानि न स्थितानि नास्थितानि न विष्ठितानि[9] नाविष्ठितानि। तत् कस्य हेतोः। अविद्यमानत्वेन तेषां नामधेयानाम्।

एवं तानि नामधेयानि न स्थितानि नास्थितानि न विष्ठितानि नाविष्ठितानि। रूपस्याहं०। एवं शब्दगन्धरसस्प्रष्टव्यधर्माणामायञ्च व्ययञ्च न समनुपश्यामि नोपलभे। सोऽहं भगवन् रूप yāvat धर्माणामायञ्च

---

1 $C_2$ नामधेयस्यमात्रेण

2 Ś 395 नाधिष्टितं

3 $C_2$ नोपलभ्यते throughout

4 अहं० = अहं भगवनायञ्च व्ययञ्च नोपलभे न समनुपश्यामि

5 $C_2$ confuses many of the repetitions.

6 स्थितं० = स्थितं नास्थितं न विष्ठितं नाविष्ठितम्

7 yāvat indicates the omitted स्कन्धs, धातुs, etc.

8 $C_2$ भगवन् यदपि तदुत्पन्नाम वेदना नाम

9 $C_2$ ०धिस्थितानि

व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु etc. as in p. 124, ll. 1-6. चक्षुर्विज्ञानस्याहं०। एवं श्रोत्रविज्ञानस्य yāvat मनोविज्ञानस्याहं०। सोऽहं भगवंश्चक्षुर्विज्ञानस्य yāvat मनोविज्ञानस्यायञ्च[1] व्ययञ्चसमनुपश्यन् as before in l. 1. अपि तु खलु etc. as in p. 124, ll. 3-6. चक्षुःसंस्पर्शस्याहं भगवन् यावच्चक्षुःसंस्पर्शप्रत्ययवेदयितस्यायञ्च० श्रोत्रसंस्पर्शस्याहं भगवन् यावच्छ्रोत्रसंस्पर्शप्रत्ययवेदयितस्यायञ्च० and so on with घ्राण, जिह्वा, काय up to मनःसंस्पर्शस्याहं भगवन् यावत् मनःसंस्पर्शप्रत्ययवेदयितस्यायञ्च०। पृथिवीधातोरेवमब्धातोस्तेजोधातोर्वायुधातोराकाशधातोर्विज्ञानधातोरायञ्च०। एवमविद्या यावज्जरामरणस्याहं भगवनायञ्च०। एवमविद्यानिरोधस्य यावज्जरामरणनिरोधस्याहं आयञ्च०। स्कन्धधात्वायतनप्रतीत्यसमुत्पादानामहं भगवन् आयञ्च०। रागद्वेषमोहानामहं०[2]। [3]पर्युत्थानावरणानुशयसंयोजनदृष्टिकृतानामहं०। दानपारमिताया अहं० yāvat प्रज्ञापारमिताया अहं०। आत्मनोऽहं० एवं सत्वजीवपोषपुरुषपुद्गलमनुजमानवकारकवेदकजानकपश्यकानामहं०। स्मृत्युपस्थानानामहं०। एवं सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गस्याहं०। शून्यताया अनिमित्तस्याप्रणिहितस्याहं० चतुर्णां ध्यानानां चतुर्णामप्रमाणानां चतसृणामारूप्यसमापत्तीनामहं०। बुद्धानुस्मृतेर्धर्मानुस्मृतेः[5] संघानुस्मृतेः शीलानुस्मृतेस्त्यागानुस्मृतेर्देवतानुस्मृतेरायञ्च०। आनापानानुस्मृतेर्मरणानुस्मृतेरायञ्च०। पञ्चानां चक्षुषामभिज्ञानां वैशारद्यानां दशानां तथागतबलानामायञ्च०। अष्टादशानामावेणिकानामहं भगवन्

---

1 आयञ्च० = आयञ्च व्ययञ्च न समनुपश्यामि नोपलभे

2 अहं० = अहं भगवन् आयञ्च व्ययञ्च न समनुपश्यामि नोपलभे

3 $C_2$ पर्युत्थानावरणानुशय० ; A ०वरणानुपसंयोजनदृष्टि०

4 $C_2$ पुंगल

5 $C_2$ स्मृत्यः throughout

बुद्धधर्माणामायञ्च०। सोऽहं भगवन्नष्टादशानामावेणिकानां बुद्धधर्माणामायञ्च व्ययञ्चानुपलभमानोऽसमनुपश्यन् कस्य नामधेयं करिष्यामि बोधिसत्त्व इति। अपि तु खलु etc. as in p. 124, ll. 3-6. स्वप्नोपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायञ्च०। एवं मायोपमानां प्रतिश्रुत्कोपमानां प्रतिभासोपमानां प्रतिबिम्बोपमानां मरीच्युपमानां उदकचन्द्रोपमानां[1] निर्मितकोपमानामहं भगवन् पञ्चानामुपादानस्कन्धानामायञ्च०। एवं विविक्तस्य शान्तस्यानुत्पादस्यानिरोधस्यासंक्लेशस्याव्यवदानस्य अहं भगवनायञ्च०। एवं धर्मधातोस्तथताया भूतकोटेर्धर्मस्थितिताया धर्मनियामताया अहं भगवनायञ्च०। एवं कुशलानामकुशलानां [2]सावद्यानामनवद्यानां सास्रवाणामनास्रवाणां संक्लेशानां निःक्लेशानां[3] लौकिकानां लोकोत्तराणां संस्कृतानामसंस्कृतानां संक्लेशानां व्यवदानानां सांसारिकाणां नैर्वाणिकानां अहं भगवन् धर्माणामायञ्च०[4] अतीतानागतप्रत्युत्पन्नानां धर्माणामायञ्च०। भगवतोप्यहं भगवन् आयञ्च०। पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु तथागतानामर्हतां सम्यक्संबुद्धानां सश्रावकसंघानां सबोधिसत्त्वसंघानामहं भगवन् आयञ्च०। And so on with the other directions सोऽहं भगवन् तथागतानामर्हतां etc. as before l. 124, ll. 3-6. आयञ्च व्ययञ्चानुपलभमानोऽसमनुपश्यन् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि। अपि तु खलु etc. as in p. 124 ll. 3-6. सर्वधर्मतथताया अहं भगवन् आयञ्च etc. as before

<u>इति मध्योष्मगतस्यालम्बनाकारविशेषः</u> ॥

यापीयं भगवन् धर्मसांकेतिकी धर्मप्रज्ञप्तिर्यदुत बोधिसत्त्व इति। सा न केनचिद् वचनीया स्कन्धेन वा धातुना वा आयतनेन वा

---

1 $C_2$ ममच्य प्रमार्षे दकाचन्द्री

2 $C_1$ सावद्या० 3 $C_1$ drops it.

4 आयञ्च० — आयञ्च व्ययञ्च न समनुपश्यामि नोपलभे

यावदावेणिकेन वा बुद्धधर्मेण। [1]यावदेवैषा धर्मप्रज्ञप्तिः। तद् यथापि नाम भगवन् स्वप्नो न केनचिद् वचनीयः प्रतिश्रुत्को प्रतिभासः प्रतिबिम्बं निर्मितकं[2] न केनचिद् वचनीयम्। तद् यथापि नाम भगवन् पृथिव्यप्तेजोवाय्वाकाशं नाम न०[3]। तद् यथापि नाम भगवन् शीलमिति समाधिरिति प्रज्ञेति विमुक्तिरिति विमुक्तिज्ञानदर्शनमिति नाम न०। स्रोतआपन्न[4] इति नाम न०। सकृदागामीति[5] अनागामीति अर्हन्निति प्रत्येकबुद्ध इति यावद् बोधिसत्त्वधर्म इति तथागत[6] इति बुद्ध इति तथतेति बुद्धधर्म[7] इति नाम न०। कुशलेन वा अकुशलेन वा सावद्येन वा अनवद्येन वा सुखेन वा दुःखेन वा आत्मना वा अनात्मना वा शान्तेन वा अशान्तेन वा विविक्तेन वा अविविक्तेन वा निमित्तेन वा अनिमित्तेन वा भावेन वा अभावेन वा इममप्यहं भगवन् अर्थवशं प्रतीत्य[8] एवं वदामि एतदेव मे भगवन् कौकृत्यं स्यात्[9]। योऽहं सर्वधर्माणामायञ्च व्ययञ्चानुपलभमानोऽसमनुपश्यन् नामधेयमात्रेणायञ्च व्ययञ्च कुर्यां बोधिसत्त्व इति। अपि तु खलु पुनर्भगवंस्तदपि नामधेयं न स्थितं नास्थितं न विष्ठितं नाविष्ठितम्[10]। तत् कस्य हेतोः। अविद्यमानत्वात् तस्य नामधेयस्य। एवं तत् नामधेयं न स्थितं नास्थितं न विष्ठितं नाविष्ठितं[11]। स चेह भगवन् एवं बो० महा० सत्त्वस्य प्रज्ञापारमितायां भाष्यमाणायां चित्तं नावलीयते न संलीयते[12] न विप्रतिसारी भवति। मानसं नोत्त्रस्यति[13] न संत्रस्यति[14] न संत्रासमापद्यते

---

1 A यावद वैषा

2 $C_2$ ०निर्मितकं

3 न० = न केनचिद वचनीयं

4 $C_2$ ०पन्ना

5 $C_2$ ०मिति

6 $C_2$ तथागतधर्मं

7 A ०धर्मा

8 A प्रतीता

9 $C_2$ कौक्रत्यस्यते

10 $C_2$ has throughout स्थ for ष्ट of विष्ठितम्.

11 Mss. repeat lines 4-6 from तत् —०ष्टितं

12 $C_2$ drops it.

13 A नवत्मोव०

14 $C_2$ drops it.

नियतं महासत्त्वोऽविनिवर्तनीयायां[1] बोधिसत्त्वभूमौ स्थितो वेदितव्यः सुस्थितोऽस्थानयोगेन ॥ इति [2]अधिमात्रोष्मगतस्यालम्बनाकारविशेषः ॥

पुनरपरं भगवन् बो० महासत्त्वेन प्रज्ञापारमितायाञ्चरतो न रूपे स्थातव्यं yāvat न विज्ञाने स्थातव्यं । तेन न चक्षुषि स्थातव्यं yāvat न मनसि स्थातव्यं । तेन न रूपे स्थातव्यं[3] न शब्दे yāvat न धर्मे स्थातव्यम् । तेन न चक्षुर्विज्ञाने स्थातव्यं yāvat न मनोविज्ञाने स्थातव्यं । तेन न चक्षुःसंस्पर्शे स्थातव्यं न चक्षुःसंस्पर्शप्रत्ययवेदयिते स्थातव्यं yāvat न मनःसंस्पर्शे न मनःसंस्पर्शप्रत्ययवेदयिते स्थातव्यम् । तेन[4] न पृथिवीधातौ स्थातव्यं yāvat न विज्ञानधातौ स्थातव्यम् । तेन नाविद्यायां स्थातव्यं न संस्कारेषु yāvat न दौर्मनस्योपयासेषु स्थातव्यम् । तत् कस्य हेतोः । तथा हि भगवन् रूपं [5]रूपत्वेन शून्यं । वेदना yāvat विज्ञानं विज्ञानत्वेन शून्यं या च भगवन् रूपस्य शून्यता न तद्रूपं । न चान्यत्र शून्यताया रूपं रूपमेव शून्यता शून्यतैव रूपम् । And so on with वेदना, संज्ञा, संस्काराः up to या च भगवन् विज्ञानस्य शून्यता न तद्विज्ञानं न चान्यत्र शून्यताया विज्ञानं विज्ञानमेव शून्यता शून्यतैव विज्ञानम् ।

अनेन भगवन् पर्यायेण० बो० महासत्त्वेन प्रज्ञापारमितायां चरता न रूपे स्थातव्यं yāvat न विज्ञाने स्थातव्यं । न पृथिवीधातौ yāvat न विज्ञानधातौ स्थातव्यं । तत् कस्य हेतोः । तथाहि भगवन् पृथिवीधातुः पृथिवीधातुत्वेन शून्या । या च पृथिवीधातुशून्यता नासौ पृथिवीधातुर्न चान्यत्र शून्यतायाः पृथिवीधातुः । पृथिवीधातुरेव शून्यता । शून्यतैव पृथिवीधातुः । एवमब्धातुस्तेजोधातुर्वायुधातुराकाशधातुस्तथाहि भगवन् विज्ञानधातुर्विज्ञानधातुत्वेन शून्या । या च विज्ञानधातुशून्यता नासौ विज्ञानधातुर्न चान्यत्र शून्यताया विज्ञानधातुर्विज्ञानधातुरेव शून्यता । शून्यतैव विज्ञानधातुः । अनेन

---

1 $C_2$ ०यामां

2 A अधि अधि मा०

3 $C_2$ drops तेन रूपे स्थातव्यं

4 Mss drop it.

5 A drops it.

भगवन् पर्यायेण बोधि०[1] न पृथिवीधातौ स्थातव्यं yāvat न विज्ञानधातौ स्थातव्यम् । न रूपे स्थातव्यं yāvat न धर्मे स्थातव्यं । तत् कस्य हेतोः । तथाहि भगवन् रूपं रूपत्वेन शून्यम् etc. as usual, and with all the other terms of this group up to धर्म एव शून्यता शून्यतैव धर्मः । अनेन भगवन् पर्यायेण बोधि० न रूपे स्था०[2] yāvat न धर्मे स्था० न चक्षुषि स्था० yāvat न मनसि स्था० । न चक्षुर्विज्ञाने स्था० yāvat न मनोविज्ञाने स्था० । तत् कस्य हेतोः । तथाहि भगवंश्चक्षुर्विज्ञानं चक्षुर्विज्ञानत्वेन शून्यम् etc. as usual, and with all other terms of this group. अनेन भगवन् पर्यायेण बोधि० न चक्षुर्विज्ञाने स्था० yāvat न मनोविज्ञाने स्था० । न चक्षुःसंस्पर्शे स्था० yāvat न मनःसंस्पर्शे स्था० । तत् कस्य हेतोः । तथाहि भगवंश्चक्षुःसंस्पर्शश्चक्षुःसंस्पर्शत्वेन शून्यः etc. as usual, and with all other terms of this group.[3] अनेन भगवन् पर्यायेण बोधि० न चक्षुःसंस्पर्शे स्था० न मनःसंस्पर्शे स्था० । न चक्षुःसंस्पर्शप्रत्यय-वेदयिते स्था० एवं यावन्न मनःसंस्पर्शप्रत्ययवेदयिते स्था० । तत् कस्य हेतोः । तथाहि भगवंश्चक्षुःसंस्पर्शप्रत्ययवेदयितं चक्षुःसंस्पर्शप्रत्ययवेदयितत्वेन शून्यं etc. as usual, and with all other terms of this group.[4]

अनेन भगवन् पर्यायेण बोधि० न चक्षुःसंस्पर्शप्रत्ययोत्पन्ने वेदयिते स्था० yāvat न मनःसंस्पर्शप्रत्ययोत्पन्ने वेदयिते स्था० । नाविद्यायां स्था० । एवं यावन्न जरामरणे । तत् कस्य हेतोः । तथाहि भगवन् अविद्या अविद्यात्वेन शून्या । या चाविद्याशून्यता न सा अविद्या न चान्यत्र शून्यताया अविद्या अविद्यैव शून्यता शून्यतैवाविद्या । एवं संस्काराः संस्कारत्वेन शून्याः विज्ञानं विज्ञानत्वेन शून्यं and so on up to तथाहि भगवन् जरामरणं

1 बोधि० = बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता

2 स्था० = स्थातव्य'

3 Henceforth the mss. do not work out all the five propositions with the rest of the terms.

4 See above fn.

जरामरणत्वेन शून्यम्। या च जरामरणशून्यता न तज्जरामरणं न चान्यत्र शून्यताया जरामरणं जरामरणमेव शून्यता शून्यतैव जरामरणम्। अनेन भगवन् पर्यायेण बोधि० नाविद्यायां स्थातव्यं yāvat न जरामरणे स्थातव्यम्। एवं स्कन्धधात्वायतनेषु च न कर्त्तव्यम्[1]। पुनरपरं बोधि० स्मृत्युपस्थानेषु न स्थातव्यम्। तत् कस्य हेतोः। तथाहि भगवन् स्मृत्युपस्थानानि स्मृत्युपस्थानत्वेन शून्यानि etc. as usual.[2] तदनेनापि भगवन् पर्यायेण बोधि० न स्मृत्युपस्थानेषु स्था०। एवं सम्यक् प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गपारमिताभिज्ञादशबलवैशारद्यप्रतिसंविदष्टादशावेणिकबुद्धधर्मेषु न स्था०[3]। तत् कस्य हेतोः। तथाहि आवेणिकबुद्धधर्मो आवेणिकबुद्धधर्मत्वेन शून्या etc. as usual. तदनेनापि भगवन् पर्यायेण बोधि० न सम्यक्प्रहाणर्द्धिपादेन्द्रिय yāvat आवेणिकबुद्धधर्मेषु न स्थातव्यम्।

पुनरपरं भगवन् बोधि० न दानपारमितायां[4] स्था०। तत् कस्य हेतोः। तथाहि दानपारमितैव शून्या दानपारमितास्वभावेन etc. as usual and with all other पारमिताs.[2] तदनेनापि भगवन् पर्यायेण बोधि० न दानपारमितायां स्था० yāvat न प्रज्ञापारमितायां स्था०।

पुनरपरं भगवन् बोधि०[5] अक्षरेषु न स्था०। अक्षराभिनिर्हारेषु न स्था०। एकोदाहारे द्विरुदाहारे त्रिरुदाहारे न स्था०। तत् कस्य हेतोः। तथाहि अक्षराणि शून्यान्यक्षरस्वभावेन। या च भगवन्नक्षरशून्यता न सा अक्षराणि न चान्यत्र शून्यताया अक्षराणि अक्षराण्येव शून्यता शून्यतैवाक्षराणि। तदनेन भगवन् पर्यायेण बोधि० नाक्षरेषु स्थातव्यम्। पुनरपरं भगवन् बोधि०

---

1 A. वक्तव्य'; after this word A repeats ll. 2-4 changing only अनेन by पुनरपरम्।

2 A drops the lines 5-6.

3 स्था० = स्थातव्य'

4 It will be observed that पारमिताs are included in the list in l. 8 but repeated here in full.

5 बोधि० = बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरता

नाभिज्ञासु स्थातव्यम्। तत् कस्य हेतोः। अभिज्ञा एव शून्या अभिज्ञास्वभावेन या च भगवन्नभिज्ञाशून्यता न ता अभिज्ञा न चान्यत्र शून्यताया अभिज्ञा अभिज्ञा एव शून्यता शून्यतैवाभिज्ञा। तदनेन भगवन् पर्यायेण बोधि०[1] नाभिज्ञासु[2] स्थातव्यम्।

पुनरपरं भगवन् बोधि० न रूपमनित्यमिति स्था०। न वेदना न संज्ञा न संस्कारा न विज्ञनमनित्यमिति स्था०। तत् कस्य हेतोः। तथाहि रूपानित्यता अनित्यतास्वभावेन शून्या या च भगवन् रूपानित्यता शून्यता न सा अनित्यता न चान्यत्र शून्यताया अनित्यता अनित्यतैव शून्यता शून्यतैव अनित्यता। तदनेनापि भगवन् पर्यायेण बोधि० रूपमनित्यमिति न स्थातव्यं and so on with वेदना, संज्ञा, संस्काराः and विज्ञानम्[3]। एवं न रूपं दुःखमिति स्था०। न वेदना न संज्ञा न संस्कारा न विज्ञानं दुःखमिति स्था०। तत् कस्य हेतोः। तथाहि रूपदुःखता दुःखतास्वभावेन शून्या। या च भगवन् रूपदुःखताशून्यता न सा दुःखता न चान्यत्र शून्यताया दुःखता दुःखतैव शून्यता शून्यतैव दुःखता। तदनेनापि भगवन् पर्यायेण बोधि० न रूपं दुःखमिति स्थातव्यम्। न वेदना न संज्ञा न संस्कारा न विज्ञानम्। तत् कस्य हेतोः। तथाहि विज्ञानदुःखता दुःखतास्वभावेन शून्या। या च भगवन् विज्ञानदुःखताशून्यता न सा दुःखता न चान्यत्र शून्यताया दुःखता दुःखतैव शून्यता शून्यतैव दुःखता। तदनेनापि भगवन् पर्यायेण बोधि० न विज्ञानम् दुःखमिति स्था०। Instead of अनित्य and दुःखं, अनात्म and शान्त[4] are used with each of the स्कन्धs as before up to तदनेनापि

---

1 See p. 130, fn. 5.

2 अभिज्ञा is included in the list in p. 130, l. 9.

3 i. e. in the place of रूप, each of the other skandhas is to be substituted.

4 It will be observed that the other expressions of this category, viz., शून्य, अनिमित्त, अप्रणिहित, विविक्त, are passed over here. Cf. Ś. 574-580.

भगवन् पर्यायेण बोधि०[1] न विज्ञानं शान्तमिति स्था०। एवं हेतु-समुदयप्रभवप्रत्ययतायां न स्था०।

पुनरपरं भगवन् बोधि० तथतायां न स्था०। तत् कस्य हेतोः। तथाहि तथता तथतास्वभावेन शून्या। या च भगवंस्तथतायाः शून्यता न सा तथता न चान्यत्र तथतायाः शून्यता तथतैव शून्यता शून्यतैव तथता। तदनेनापि भगवन् पर्यायेण बोधि० तथतायां न स्थातव्यमेव धर्मतायां न स्थातव्यम्। तत् कस्य हेतोः। तथाहि धर्मता धर्मतास्वभावेन शून्या etc. as usual, and so on with धर्मधातु, धर्मनियामता and भूतकोटी।

पुनरपरं भगवन् बो० सर्वधारणीमुखेषु न स्थातव्यम्। तत् कस्य हेतोः। तथाहि धारणीमुखानि धारणीमुखैः शून्यानि etc. as usual up to धारणीमुखेषु न स्थातव्यम्।

पुनरपरं भगवन् बो० महासत्त्वः प्रज्ञापारमितायां चरन्[2] अनुपायकुशलोऽहङ्कार-ममकार-पतितेन मानसेन सचेद्रूपे तिष्ठति रूपाभिसंस्कारे चरति न चरति[3] प्रज्ञापारमितायाम्। सचेद् वेदनायां संज्ञायां संस्कारेषु सचेद् विज्ञाने तिष्ठति विज्ञानाभिसंस्कारे चरति न चरति प्रज्ञापारमितायाम्। तत् कस्य हेतोः। नह्यभिसंस्कारे चरन् प्रज्ञापारमितायां परिगृह्णाति न प्रज्ञापारमितायां योगमापद्यते न प्रज्ञापारमितां परिपूरयति,[4] अपरिपूरयन्[5] प्रज्ञापारमितां न निर्यास्यति सर्वाकारज्ञतायाम्। तत् कस्य हेतोः। तथाहि भगवन् रूपमपरिगृहीतं वेदनासंज्ञासंस्काराविज्ञानमपरिगृहीतम्। तत् कस्य हेतोः। यश्च रूपस्यापरिग्रहो न तद्रूपं प्रकृतिशून्यतामुपादाय, वेदनासंज्ञासंस्कारा यश्च विज्ञानस्यापरिग्रहो न तद् विज्ञानं प्रकृतिशून्यतामुपादाय एवं यावद् भूतकोटिरपरिगृहीता। तत् कस्य हेतोः। यश्च भूतकोट्या अपरिग्रहो न सा भूतकोटिः प्रकृतिशून्यतामुपादाय, एवं बोधि० प्रकृतिशून्याः सर्वधर्माः

---

1 बोधि० = बोधिसत्त्वेन महासत्वेन प्रज्ञापारमितायां चरता

2 $C_2$ चरन् नुपाय

3 $C_2$ drops न चरति.

4 $C_1$ ०रिति

5 A ०पूरयं ; $C^1$ पूरण ; $C_2$ पूरयति

6 $C_1$ स्यन्ति

प्रत्यवेक्षितव्याः। तथा च प्रत्यवेक्षितव्या यथा न कचिद्‌ धर्मे मनसो व्युपचारो[1] भवेत्। इदं बो० महासत्त्वस्य सर्वधर्मापरिगृहीतं नाम समाधिमण्डलं विपुलं[2] पुरस्कृतमप्रमाणं[3] नियतमसंहार्यं सर्वश्रावकप्रत्येकबुद्धैः[4]। सापि सर्वाकारज्ञता[5] अपरिगृहीता अध्यात्मशू०[6] बहिर्धाशू० अध्यात्मबहिर्धाशू० महाशून्यशू० शून्यताशू० परमार्थशू० संस्कृतशू० असंस्कृतशू० अत्यन्तशू० अनवराग्रशू० अनवकारशू० प्रकृतिशू० सर्वधर्मशू० स्वलक्षणशू०, अनुपलम्भशू० अभावस्वभावशू० भावशू०[7] अभावशू० स्वभावशू० परभावशून्यतामुपादायेति [8]मृदुमूर्द्धगतस्यालम्बनाकारविशेषः॥

तत् कस्य हेतोः। तथाहि न भगवन् सर्वाकारज्ञता निमित्ततः उद्ग्रहीतव्या, निमित्तम् हि क्लेशः। कतमत्[9] पुनर्निमित्त। रूपं निमित्तं yāvat विज्ञानं निमित्तम्। चक्षुर्निमित्तम् yāvat मनो निमित्तं, रूपं निमित्तं yāvat धर्मो निमित्तं, स्मृत्युपस्थान yāvat बुद्धधर्मशून्यतानिमित्ताप्रणिहितानभिसंस्कारधर्मधातुधर्मताधर्मनियामताभूतकोटिनिमित्तमयमुच्यते[10] क्लेशः, स चेत् पुनः प्रज्ञापारमिता निमित्तत उद्ग्रहीतव्या अभविष्यन्न वेह श्रेणिकः[11] परिव्राजकः शासने श्रद्धामलप्स्यत[12]। अत्र सर्वज्ञज्ञाने कतमा च श्रद्धा येयं प्रज्ञापारमितायामभिश्रद्दधानता अवकल्पनता अधिमुक्तिश्चिन्तना तुलना व्युपपरीक्षणा तच्चानिमित्तयोगेन। एवमनिमित्तत उद्ग्रहीतव्या अत्र पुनः

---

1 $C_2$ पुपस्थानो ; Ś. 613 व्यवचारो

2 A विपुतं 3 Mss. & Ś. 613 omit *anusvāra*.

4 Ś. 613 adds here यत्र समाधिमण्डले विहरन् बो० महासत्वो निर्यास्यति सर्वाकारज्ञतायाः।

5 $C_2$ ज्ञतया 6 शू० = शून्यतामुपादाय।

7 The order of the शून्यताs, it will be seen, is slightly different from the list of the *Mvyut*. There is an addition of भावशून्यता. See ante, p. 53.

8 $C_2$ मृदुमर्द्ध 9 $C_2$ कतमन्

10 $C_2$ निमित्तेयमुच्यते 11 $C_2$ श्रमिकः

12 $C_2$ प्सते

श्रेणिकः परिव्राजकः अधिमुच्य श्रद्धानुसारी प्रादेशिकेन ज्ञानेनावतीर्णः[1]। सोऽवतीर्य न रूपं परिगृहीतवान्न वेदनां न संज्ञां[2] न संस्कारान्न विज्ञानं परीगृहीतवान्। तत् कस्य हेतोः। तथा हि स तेन स्वलक्षणशून्येषु धर्मेषु न कश्चिद्धर्मः परिगृहीतो[3] निमित्तामनसिकारतामुपादाय। तत् कस्य हेतोः। तथाहि स [4]नाध्यात्मप्राप्त्यभिसमयतस्तज्ज्ञानं समनुपश्यति। न बहिर्धाप्राप्त्यभिसमयतस्तज्ज्ञानं[5] समनुपश्यति, नाध्यात्मबहिर्धाप्राप्त्यभिसमयतस्तज्ज्ञ°[6] नाप्यन्यत्रप्राप्त्यभिसमयतस्तज्ज्ञ°। तत् कस्य हेतोः। तथाहि स तं धर्मं[7] न समनुपश्यति, यो[8] वा प्रजानीयाद् येन वा प्रजानीयात्[9]। तत् कस्य हेतोः। नाध्यात्मं रूपस्य तज्ज्ञ°, नाध्यात्मं वेदनायास्तज्ज्ञ°, नाध्यात्मं संज्ञायास्तज्ज्ञ°, नाध्यात्मं संस्काराणां तज्ज्ञ°, नाध्यात्मं विज्ञानस्य तज्ज्ञ°, न बहिर्धारूपस्य तज्ज्ञ°, न बहिर्धावेदनाया न बहिर्धासंज्ञानां न बहिर्धासंस्काराणां न बहिर्धाविज्ञानस्य :तज्ज्ञ°, नाध्यात्मबहिर्धारूपस्य तज्ज्ञ° yāvat नाध्यात्मबहिर्धाविज्ञानस्य तज्ज्ञ°, नाप्यन्यत्ररूपात् तज्ज्ञ°, नाप्यन्यत्र वेदनाया yāvat नाप्यन्यत्र विज्ञानात् तज्ज्ञ° [10]अध्यात्मबहिर्धाशून्यतामुपादाय। अत्र पदपर्याये श्रेणिकः परिव्राजकोऽधिमुक्तः सोऽत्राधिमुच्य श्रद्धानुसारी प्रादेशिकेन ज्ञानेनावतीर्णः सर्वज्ञज्ञानधर्मतां प्रमाणीकृत्य सर्वधर्मानुपलब्धितामुपादाय, एवम[11]धिमुक्तस्तेन न कश्चिद् धर्मः परीगृहीतो[12] निमित्तामनसिकारतामुपादाय, नाप्यनेन कश्चिद्धर्म उपलब्धोऽयं परिगृह्णीयाद् वा मुञ्चेद् वा सर्वधर्मानुद्ग्रहानुत्सर्गतामुपादाय,

---

1 $C_2$ °तीर्णा    2 $C_1$ °वाणवेदना न संज्ञा

3 $C_1$ & $C_2$ गृहीतो निमित्तानमनसि°

4 A °नाध्यात्मं प्रा° ; $C_1$ °समये    5 $C_2$ बहिर्ज्ञान्प्रा° ; $C_1$ °समये°

6 तज्ज्ञ° = तज्ज्ञानं समनुपश्यति    7 $C_2$ धर्मसम°

8 $C_1$ या    9 $C_1$ & $C_2$ drop येन वा प्रजानीयात्।

10 $C_1$ adds before it न।

11 $C_2$ स य एवम° ; Ś. 633 स एवम°    12 A & $C_1$ °हीता

स निर्वाणेनापि न मन्यते सर्वधर्मानुदुग्रहानुत्सर्गतामुपादाय[1]। तत् कस्य हेतोः। यः सर्वधर्माणामपरिग्रहोऽनुत्सर्गः सा[2] प्रज्ञापारमिता। इयमपि भगवन् बो० महासत्त्वस्य प्रज्ञापारमिता अपारपारगतामुपादाय, यद्रूपं न परिगृह्णाति yāvat यद्विज्ञानं न परिगृह्णाति सर्वधर्मापरिगृहीततामुपादाय, यावद् व्यस्तसमस्तां स्कन्धधात्वायतनप्रतीत्यसमुत्पाद[3]स्मृत्युपस्थान yāvat बुद्धधर्मशून्यतानिमित्ताप्रणिहितानभिसंस्कारधर्मधातुधर्मताधर्मनियामतासमाधिमुखधारणीमुखानि यावत् समाधिं न परिगृह्णाति सर्वधर्मापरिगृहीततामुपादाय, न चान्तरापरिनिर्वाणापरिपूर्णैः [4]प्रणिधानै र्यावद्दशभिस्तथागतबलैश्चतुर्भिर्वैशारद्यैश्चतसृभिः प्रतिसंविद्भिरष्टादशभि रावेणिकैर्बुद्धधर्मैः। तत् कस्य हेतोः। तथाहि सर्वधर्मा अधर्मा[5] यावत् स्मृत्युपस्थान yavat बुद्धधर्मा अधर्मा नापि ते धर्मा नाधर्माः,[6] इयं बो० महासत्त्वस्य प्रज्ञापारमिता सर्वधर्मापरिगृहीततामुपादाय॥ इति मध्यमूर्ध्वंगतालम्बनाकारविशेषः॥

पुनरपरं भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां चरता एवं व्युपपरीक्षितव्यं, कतमैषा प्रज्ञापारमिता, कस्य वैषा[7] प्रज्ञापारमिता, किमेषा प्रज्ञापारमिता, केनैषा प्रज्ञापारमिता, सचेत् पुनः बो० महासत्त्वः प्रज्ञापारमितायां चरन्नेवमुपनिध्यायति तत् किं यो धर्मो न विद्यते नोपलभ्यते सा प्रज्ञापारमितेति न चरति[8] प्रज्ञापारमितायां। अथ खलु आयुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्। कतमे ते आयुष्मन् सुभूते धर्मा न विद्यन्ते नोपलभ्यन्ते। सुभूतिराह। प्रज्ञापारमिता आयुष्मन्

---

1 $C_1$ ०धर्म्मा उदग्रहा०

2 $C_2$ यो

3 $C_2$ ०पादाय० ; A ०पादात्०

4 $C_1$ निर्व्वान्य परिपूर्णं प्र० ; $C_2$ Ś. 637 ०निर्व्वात्य परिपूर्णं प्र० ; A ०निर्व्वाण प०

5 $C_1$ drops it. 6 $C_2$ धर्म्माधर्म्म: 7 $C_1$ चैषा

8 A repeats चरति ; $C_1$ drops न चरति .

शारिपुत्र न विद्यते नोपलभ्यते, ध्यानपा०[1] वीर्यपा० क्षान्तिपा० शीलपा० दानपा० अध्यात्मशून्यतामुपादाय [2]बहिर्धाशून्यतामुपादाय yāvat परभावशून्यतामुपादाय, रूपमायुष्मन् शारिपुत्र न०[3] yāvat विज्ञानमायुष्मन् शारिपुत्र न०, अध्यात्मशून्यता आयुष्मन् शारिपुत्र न०, बहिर्धाशून्यता न०, yāvat[4] परभावशून्यता न०, यावत् सप्तत्रिंशद् बोधिपक्षा धर्मा न०, अभिज्ञा न०, दशबलवैशारद्यप्रतिसंविदष्टादशावेणिका बुद्धधर्मा न०, तथता न०, धर्मता न०, धर्मस्थितिता न०, धर्मनियामता न०, भूतकोटिर्न०, बुद्धोऽप्यायुष्मन् शारिपुत्र न०, सर्वाकारज्ञतापयायुष्मन् [5]शारिपुत्र न०, अध्यात्मशून्यतामुपादाय यावत् परभावशून्यतामुपादाय सचेत् पुनः शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्नेवमुपपरीक्षते एवमुपनिध्यायति तस्यैवमुपपरीक्षमाणस्यैवमुपनिध्यायतश्चित्तं नावलीयते न संलीयते नोत्त्रस्यति न संत्रस्यति न संत्रासमापद्यते अविरहितो बो० महासत्त्वः प्रज्ञापारमिताया वेदितव्यः ॥ इत्यधिमात्रमूर्ध्वंगतालम्बनाकारविशेषः ॥

अथ खलु आयुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्। केन कारणेनायुष्मन् सुभूते बो० महासत्त्वः प्रज्ञापारमितया अविरहितो वेदितव्यः। सुभूतिराह। रूपमायुष्मन् शारिपुत्र विरहितं रूपस्वभावेन, एवं वेदनासंज्ञासंस्काराः, विज्ञानमायुष्मन् शारिपुत्र विरहितं विज्ञानस्वभावेन, दानपारमिताप्यायुष्मन् शारिपुत्र विरहिता दानपारमितास्वभावेन, and so on with the other पारमिताs yāvat बुद्धधर्मा विरहिता बुद्धधर्मस्वभावेन, भूतकोटिरप्यायुष्मन् शारिपुत्र विरहिता भूतकोटिस्वभावेन।

शारिपुत्र आह। कथं पुनरायुष्मन् सुभूते रूपस्य स्वभावः, कथं वेदनायाः संज्ञायाः संस्काराणाम्। कथं विज्ञानस्य स्वभावः कथं व्यस्तसमस्तानां

---

1 पा० stands for पारमिता न विद्यते नोपलभ्यते .

2 The list is identical with the one in p. 133.

3 न० stands for न विद्यते नोपलभ्यते or न विद्यन्ते नोपलभ्यन्ते .

4 The list is identical with the preceding one.

5 $C_2$ drops all the terms from तथता .

स्कन्धधात्वायतनप्रतीत्यसमुत्पादानां स्वभावः। एवं विस्तरेण यावत् कथं भूतकोट्याः[1] स्वभावः। सुभूतिराह। अभाव आयुष्मन् शारिपुत्र रूपस्य स्वभावः। अभावो वेदनायाः yāvat अभावो विज्ञानस्य स्वभावः। अभावो व्यस्तसमस्तानां स्कन्धधात्वायतनप्रतीत्यसमुत्पादानां स्वभावः, अभावः[2] शून्यतानिमित्ताप्रणिहितानभिसंस्काराणां जातः स्वभावः,[3] अभावः [4]तथताधर्मधातुधर्मस्थितिताधर्मनियामतानां स्वभावः, एवं विस्तरेण यावदभावो भूतकोट्याः स्वभावः। तदनेन आयुष्मन् शारिपुत्र पर्यायेणैवं[5] वेदितव्यम्। यथा रूपं विरहितं रूपस्वभावेन वेदना विरहिता वेदनास्वभावेन and so on with the other स्कन्धs। एवं विस्तरेण व्यस्तसमस्तेषु स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु कर्तव्यं यावद्भूतकोटि-र्विरहिता भूतकोटिस्वभावेन।

पुनरपरं शारिपुत्र रूपं विरहितं रूपलक्षणेन, वेदना etc. as before ll. 8-11 replacing लक्षणेन by स्वभावेन up to यावद्भूतकोटिर्विरहिता भूतकोटिलक्षणेन। [6]लक्षणस्वभावेनापि लक्षणं विरहितं, स्वभाव-लक्षणेनापि स्वभावो विरहितः।

शारिपुत्र आह। य[7] आयुष्मन् सुभूते बो० महासत्त्वोऽत्र शिक्षिष्यते स[8] निर्यास्यति सर्वाकारज्ञतायाम्। सुभूतिराह। एवमेतदायुष्मन् शारिपुत्र योह्येवमत्र शिक्षिष्यते स निर्यास्यति सर्वाकारज्ञतायाम्। इति मृदु-क्षान्तेरालम्वनाकारविशेषः[9]। तत् कस्य हेतोः। तथा ह्यायुष्मन् शा० अजाता

---

1 $C_2$ ०कोटेः 2 A drops it.

3 $C_1$ ०संस्काराणां but drops स्वभाव whereas $C_2$ puts it as ०संस्काराज्ञाता, and A ०संस्काराजाताः

4 A & $C_1$ भावतथता ; $C_2$ ०ज्ञाताभावतथता

5 $C_1$ पर्य्यायेन नैवं

6 $C_1$ लक्षणस्वभावोपि लक्षणविरहिता स्वभावलक्षणेनापि स्वभावविरहितो।

7 $C_2$ drop य ; $C_1$ यश्चायु

8 $C_1$ सर्वं for स 9 A & $C_1$ ०क्षान्तिर०

अनिर्याताः[1] सर्वधर्माः। शा० आह। केन कारणेनायुष्मन् सुभूते अजाता अनिर्याताः सर्वधर्माः। सुभूतिराह। रूपमायुष्मन् शा० शून्यं रूपस्वभावेन, तस्य नापि जातिर्नापि निर्याणमुपलभ्यते, and so on with संज्ञा, संस्काराः, विज्ञानम्। एवं विस्तरेण व्यस्तसमस्तेषु स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु कर्तव्यं यावद् भूतकोटिः शून्या[2]भूतकोटिस्वभावेन, तस्या नापि जातिर्नापि [3]निर्याणमुपलभ्यते। एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् सर्वाकारज्ञताया आसन्नीभवति [4]यथा यथा च सर्वाकारज्ञताया आसन्नीभवति तथा तथा कायपरिशुद्धिञ्च चित्तपरिशुद्धिञ्च लक्षणपरिशुद्धिञ्चाधिगच्छति। यथा यथा च कायपरिशुद्धिञ्च चित्तपरिशुद्धिञ्च लक्षणपरिशुद्धिञ्चाधिगच्छति तथा तथा बो० महासत्त्वस्य रूपसहगतं चित्तं नोत्पद्यते, [5]दोषस०, मोहस०[6] मानस०, लोभस०, कुदृष्टिस०, स रागचित्तानुत्पादाद्दोषचित्तानुत्पादात्[7] मोहचि०[8] मानचि० कुदृष्टिचि० न जातु मातुः कुक्षावुपपद्यते, सततसमितमौपपादुको भवति, बुद्धक्षेत्रेण बुद्धक्षेत्रं संक्रामति, बुद्धांश्च भगवतः पर्युपास्ते, सत्त्वांश्च परिपाचयति, बुद्धक्षेत्रं च परिशोधयति। न तैर्बुद्धै र्भगवद्भिर्विरहितो भवति, यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। एवं हि शारिपुत्र बो० महासत्त्व आसन्नीभवत्यनुत्तरायाः सम्यक्संबोधेः। इति मध्यन्तान्तेरालम्बनाकारविशेषः[9]।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। सचेद् भगवन् बो० महासत्त्वोऽनुपायकुशलः प्रज्ञापारमितायां चरन् रूपे चरति निमित्ते चरति न

1 Mss. अनिर्जाता:

2 A drops शून्या भूतकोटि०

3 $C_1$ & $C_2$ नापिजाति निर्य्याण

4 A drops from यथा to भवति ; $C_1$ यथा यथा भवति तथा०

5 $C_2$ द्वेष

6 स० stands for सहगतं चित्तं नोत्पद्यते

7 $C_2$ ०द्वेष०

8 चि० stands for चित्तानुत्पादात्

9 Here ends the 4th chap. and commences the 5th chap. of the Śata.

चरति प्रज्ञापारमितायाम्[1]। सचेद्वेदनायाञ्चरति निमित्ते चरति न चरति प्रज्ञापारमितायां, and so on with संज्ञा, संस्काराः, विज्ञानम्। सचेद्रूपंनित्यमनित्यं वे०[2], and so on with the remaining स्कन्धs, सचेद्रूपं सुखं दुःखं वे० and so on with the other स्कन्धs, सचेद्रूपमात्मानात्म वे० and so on with the rest of the स्कन्धs, सचेद्रूपं शान्तमशान्तं वे० and so on with the remaining स्कन्धs, सचेद्रूपं विविक्तमविविक्तं वे० and so on with the other स्कन्धs, सचेद् भगवन् बो० महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकुशलः सप्तत्रिंशत्बोधिपक्षेषु धर्मेषु चरति निमित्ते चरति न चरति प्रज्ञापारमितायाम्। एवं यावदभिज्ञासु पारमितासु अप्रमाणध्यानारूप्यसमापत्तिषु पञ्चसु चक्षुःषु दशसु तथागतबलेषु चतसृषु प्रतिसंवित्सु चतुर्षु वैशारद्येषु यावदष्टादशस्वावेणिकेषु बुद्धधर्मेषु चरति निमित्ते चरति न चरति प्रज्ञापारमितायाम्।

सचेद् भगवन् बो० महासत्त्वस्यानुपायकौशलेन प्रज्ञापारमितायां चरत एवं भवति। अहं प्रज्ञापारमितायां चरामीति उपलम्भे चरति, अहं चरामीति चरति निमित्ते चरति, सचेद् बो० महासत्त्वस्यैवं भवति य एवञ्चरति स प्रज्ञापारमितायाञ्चरति स प्रज्ञापारमितां भावयतीति। अथ खल्वायुष्मान् शारिपुत्र आयुष्मन्तं सुभूतिमेतदवोचत्। केन कारणेनायुष्मन् सुभूते इदं बो० महासत्त्वस्यानुपायकौशलं वेदितव्यम्। सुभूतिराह। तथा ह्यायुष्मन् शारिपुत्र यो बो० महासत्त्वः प्रज्ञापारमितायां चरन् रूपमधितिष्ठति संजानीतेऽधिमुच्यते, वेदनामधि०[3], संज्ञामधि०, संस्कारानधि०, विज्ञानमधि०, स रूपमधितिष्ठन् संजानानोऽधिमुच्यमानः, वेदनामधिति०[4], संज्ञामधिति०, संस्कारानधिति०, विज्ञानमधिति०, रूपस्याभिसंस्कारे चरति तत्। तस्य जातिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासकरमिति वदामि।

पुनरपरं शारिपुत्र सचेद् बो० महासत्त्वः प्रज्ञापारमितायां चरन्ननुपाय-

---

1 $C_1$ drops here many lines.

2 वे० = वेति चरति, निमित्ते चरति न चरति प्रज्ञापारमितायां।

3 धि० stands for धितिष्ठति संजानीतेऽधिमुच्यते।

4 ति० stands for तिष्ठन् संजानानोऽधिमुच्यमानः.

कुशलः, चक्षुरधि०[1] श्रोत्रं घ्राणं जिह्वां कायं मनोऽधि०, रूपमधि०, शब्दान् गन्धान् रसान्[2] स्प्रष्टव्यं धर्मानधि०, and so on with all विज्ञानs, संस्पर्शs संस्पर्शप्रत्ययवेदयितs सुखं वा दुखं वा अदुःखं वा असुखं वा up to सचेत् सप्तत्रिंशद्बोधिपक्षान् धर्मानधि० । एवं पञ्चचक्षूंषि षड्भिज्ञाः षट्पारमिताश्चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदश्चत्वार्यप्रमाणानि चत्वारि ध्यानानि चतस्र आरूप्यसमापत्तीर्दश तथागतबलान्यष्टादशावेणिकान् बुद्धधर्मानर्हत्त्वं प्रत्येकबुद्धत्वं बोधिसत्त्वत्वं बुद्धधर्मानधि० । सर्वान् बुद्धधर्मानधिति०[3] बुद्धधर्माणामभिसंस्कारे चरति, अभिसंस्कारे चरन्नपरिमुच्यते जात्या जरामरणेन च शोकपरिदेवदुःखदौर्मनस्योपायासैर्न परिमुच्यते दुःखेनेति वदामि । स खलु पुनः शारिपुत्र बो० महासत्त्वोऽभव्यः श्रावकभूमिं प्रत्येकबुद्धभुमिं वा पतितुं कुतः सोऽनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते नेदं स्थानं विद्यते । एवं हि शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकुशलो वेदितव्यः ।

शारिपुत्र आह । कथमायुष्मन् सुभूते बो० महासत्त्वः प्रज्ञापारमितायां चरन् उपायकुशलो वेदितव्यः । सुभूतिराह । य आयुष्मन् शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन् न रूपमधितिष्ठति न संजानीते नाधिमुच्यते, वेदनासंज्ञासंस्कारान् विज्ञानं नाधि० एवं यावद् बुद्धधर्मान्नाधि०, स न रूपे चरति yāvat न विज्ञाने चरति, न रूपस्य निमित्ते चरति yāvat न विज्ञानस्य निमित्ते चरति, न रूपं नित्यमिति नानित्यमि०[4], न वेदना न संज्ञा न संस्कारा न विज्ञानं नित्यमिति नानित्यमि०, न रूपं सुखमिति न दुःखमिति नात्मेति नानात्मेति न शान्तमिति नाशान्तमि०, न वेदना न संज्ञा न संस्कारा न विज्ञानं सुखमिति नात्मेति नानात्मेति न शान्तमिति नाशान्तमि०, न रूपं शून्यमिति नाशून्यमिति चरति न निमित्तमिति नानिमित्तमि० न प्रणिहितमिति नाप्रणिहितमि० न विविक्तमिति नाविविक्तमि०, एवं न वेदना न संज्ञा न संस्कारा न विज्ञानं न शून्यमिति नाशून्यमि०, न निमित्तमिति नानिमित्तमि०,

---

1 धि० stands for धितिष्ठति न संजानीते नाधिमुच्यते .

2 A शब्दां गन्धां रसां

3 See p. 139 fn. 4.

4 मि० stands for मिति चरति ।

न प्रणिहितमिति नाप्रणिहितमि०, न विविक्तमिति नाविविक्तमि०। तत् कस्य हेतोः। तथाहि आयुष्मन् शारिपुत्र या रूपस्य शून्यता न तद्रूपं न चान्यत्र शून्यतायाः रूपं नान्यत्र रूपाच्छून्यता रूपमेव शून्यता शून्यतैवं रूपम्। या वेदनायाः शून्यता संज्ञायाः शून्यता संस्काराणां शून्यता या विज्ञानस्य शून्यता तद्विज्ञानं नचान्यत्र शून्यताया विज्ञानं नान्यत्र विज्ञानाच्छून्यता शून्यतैव विज्ञानं विज्ञानमेव शून्यता। एवं व्यस्तसमस्तेषु स्कन्ध yāvat बुद्धधर्मेषु यावद् या बुद्धधर्माणां शून्यता न ते बुद्धधर्मा न चान्यत्र शून्यताया बुद्धधर्माः नान्यत्र बुद्धधर्मेभ्यः[1] शून्यता, शून्यतैव बुद्धधर्मा बुद्धधर्मा एव शून्यता, एवमायुष्मन् शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायां चरन्नुपाय-कुशलो वेदितव्यः। एमायुष्मन् शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् [2]भव्योनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्[3]।

पुनः प्रज्ञापारमितायाञ्चरन् सचेत् कश्चिद्धर्ममुपैति न चरति प्रज्ञापारमितायां, नोपैति न चरति, उपैति नोपैति च न चरति, नैवोपैति न नोपैति च न चरति[4] प्रज्ञापारमितायाम्। शारिपुत्र आह। केन कारणेनायुष्मन् सुभूते नोपैति बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन्। सुभूतिराह। तथा ह्यायुष्मन् शारिपुत्र प्रज्ञापारमितायाः स्वभावो नोपलभ्यते। तत् कस्य हेतोः। तथा ह्यभावस्वभावा[5] प्रज्ञापारमिता,अनेनायुष्मन् शारिपुत्र पर्यायेण बो० महासत्त्वः प्रज्ञापारमितायां चरामीति[6] नोपैति, न चरामीति नोपैति, चरामि च न चरामि चेति नोपैति, नैव चरामि न न चरामीति नोपैति। तत् कस्य हेतोः। तथाहि तेन सर्वधर्मा अभावस्वभावा इति अनुगता अनुप्राप्ताः[7]। सचेदेवं प्रज्ञापारमितायां चरतो बो० महासत्त्वस्य चित्तं नावलीयते न संलीयते नोत्त्रस्यति न संत्रस्यति न संत्रासमापद्यते वेदितव्यमायुष्मन् शारिपुत्रासन्नीभवत्ययं बो० महासत्त्वः सर्वाकारज्ञतायाः। इत्यधिमात्रक्षान्तेरालम्बनाकारविशेषः॥

---

1 A धर्मेस्य

2 $C_1$ भव्यो

3 A drops संबोधि.

4 A repeats it.

5 $C_1$ repeats here स्वभाव।

6 $C_1$ चरति

7 Mss. अनुपाताः, so also in Ś. 825.

सोऽपि खल्वायुष्मन् शारिपुत्र सर्वाकारज्ञता अद्वया अद्वैधीकारा सर्वधर्माभावस्वभावतामुपादाय, अयं सर्वधर्मस्वभावानुत्पत्तिर्नाम समाधि र्बो० महासत्त्वानां विपुलः पुरस्कृतोऽप्रमाणो नियतोऽसंहार्यः सर्वश्रावकप्रत्येकबुद्धैः अनेनायुष्मन् शारिपुत्र समाधिना विहरन् बो० महासत्त्वः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्यते।

शारिपुत्र आह। कतमैरायुष्मन् सुभूते समाधिभिर्विहरन् बो० महासत्त्वः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्यते। सुभूतिराह। अस्त्यायुष्मन् शारिपुत्र बो० महासत्त्वानां शूरङ्गमो[1] नाम समाधिर्यत्समाधिना विहरन् बो० महासत्त्वः क्षिप्रमनुत्तरां सम्यक् संबोधिमभिसंबुध्यते। अस्ति-रत्नमुद्रो नाम समाधिः। अ०[2] सुचन्द्रो[3]। अ० चन्द्रध्वजकेतुः।[4] अ० सर्वधर्ममुद्रो। अ० अवलोकितमूर्द्धा[5]। अ० धर्मधातुनियतो। अ० नियतध्वजकेतुः। अ० बज्रोपमो। अ० सर्वधर्मप्रवेशमुद्रो।[6] अ० समाहितावस्थाप्रतिष्ठानो। अ० राजमुद्रो[7]। अ० बलवीर्यो। अ० सर्वधर्मसमुद्गतो। अ० निरुक्तिनियतप्रवेशो। अ० आसेचनकप्रवेशो। अ० दिगवलोकनो। अ० धारणीमुद्रो। अ० असंप्रमुषितो। अ० समवसरणो। अ० आकाशस्फारणो। अ० वज्रमण्डलो। अ० ध्वजाग्रकेतुराजो[8]। अ० इन्द्रकेतुः। अ० स्रोतोऽनुगतो[9]। अ० सिंहविजृम्भितो[10]। अ० व्यत्यस्तसमापत्तिः। अ० रणंजहो। अ० वैरोचनो। अ० निमिषो। अ० निकेतस्थितो। अ० निश्चितो। अ० विपुलप्रतिपन्नो। अ० अनन्तप्रभो। अ० प्रभाकरो। अ० वरधर्ममुद्रो। अ० समन्तावभासो। अ० शुद्धावासो। अ० विमलप्रभो।

---

1 A शूरङ्गम    2 For अ० read अस्ति......नाम समाधिः.

3 *Mvyut.* inserts here सिंहविक्रीडितो ; see *infra.*

4 *Mvyut.* inserts here सर्वधर्मोद्गतो.

5 *Mvyut.* विलोकितमूर्धा

6 The *Mvyut.* list does not agree any further.

7 A drops राज.    8 $C_1$ राजा    9 A -स्रोता-

10 $C_1$ inserts here अस्ति अनन्तप्रभो नाम समाधिः but $C_2$ follows A in putting it afterwards.

अ० अरतिकरो[1]। अ० अजयो[2]। अ० तेजोवती। अ० क्षयापगतो।[3] अ० अनिर्जितो। अ० विवृतो[4]। अ० सूर्यप्रदीपो। अ० चन्द्रविमलो। अ० शुद्धप्रतिभासो। अ० आलोककरो। अ० काराकारो। अ० ज्ञानकेतुः। अ० चित्तस्थितो। अ० समन्तावलोको। अ० सुप्रतिष्ठितो। अ० रत्नकोटिः[5]। अ० सर्वधर्मसमता[6]। अ० रतिजहो[7]। अ० धर्मङ्गतो[8]। अ० विकिरणो। अ० सर्वधर्मपदप्रभेदो। अ० समाक्षरावतारो। अ० अनिगरो। अ० प्रभाकरो। अ० नामनियतप्रवेशो। अ० अनिकेतचारी। अ० वितिमिरापगतो। अ० चारित्रवती[9]। अ० अचलो। अ० विषम-शान्तिः। अ० सर्वगुणसंचयो। अ० निश्रितो। अ० शुभपुष्पितशुद्धो। अ० बोध्यङ्गवती। अ० अनन्तप्रभा। अ० आगमसमो। अ० विमतिविकिरणो।[10] अ० प्रतिच्छेदकरो। अ० आकारानभिनिवेशनिर्हारो। अ० आकारानवकारो[11]। अ० निरतिशय[12] सर्वभवतलविकिरणो। अ० संकेतरुतप्रवेशो। अ० घोष-वती। अ० निरक्षरविमुक्तिः[13]। अ० तेजोवती[14]। अ० ज्वलनोल्का। अ० रक्षानुपरिशोषणो। अ० अनाविलक्षान्तिः। अ० सर्वाकारावतारो। अ० सर्वसुखदुःखनिरभिनन्दी। अ० अक्षयाकारो। अ० धारणीमतिः[15]। अ० सम्यक्त्वमिथ्यात्वसंग्रहो। अ० [16]रोषविरोषप्रतिरोषो। अ० [17]विमलप्रभो। अ० शारवती। अ० [18]परिपूर्णविमलचन्द्रप्रभो। अ० विद्युत्प्रभो[19]। अ०

---

1 A & $C_2$ अक्लिरतिकरो    2 A अजयों ; $C_2$ अजर्यं

3 $C_1$ चयोपगतो    4 $C_2$ विमलप्रभा

5 After this the mss. repeat वरधमसुद्रो see ante, p. 142, l. 20.

6 $C_1$ समाता ; $C_2$ समन्तो    7 $C_1$ रतिरहो

8 $C_1$ धर्मंगतो ; see supra fn. धर्माङ्गतो।    9 $C_1$ वाति

10 A & $C_2$ विमल विकिरणो ; $C_1$ विमतिविकरणो

11 $C_1$ -कारा    12 $C_1$ निरतिशयः    13 A & $C_2$ विमुक्तो

14 In all mss. it occurs twice.

15 $C_1$ पति ; $C_2$ प्रति    16 $C_2$ रोषनिरोष

17 See fn. 4.    18 $C_2$ वारिपूर्णं

19 $C_2$ प्रभो

महाव्यूहो । अ० [1]सर्वलोकप्रभाकरो । अ० समाधिसरता[2] । अ० अनयविनयनयविमुक्तो । अ० अनुसरणासर्वसमवसरणो । अ० अनिलनियतो[3] । अ० तथतास्थितनिश्चितो । अ० [4]कायकलिसंप्रमथनो । अ० वाक्कलिविध्वंसनो । अ० गगनकल्पो । अ० आकाशसङ्गविमुक्तिनिरुपलेपो । इमे आयुष्मन् शारिपुत्र समाधयो यैः समाधिभिर्विहरन् बो० महासत्त्वः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्यते । अन्यानि चासंख्येयाप्रमेयाणि समाधिमुखानि येषु शिक्ष्यमाणा बो० महासत्त्वाः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ।

तत्र कतमः शूरङ्गमो नाम समाधिः । येन समाधिना सर्वसमाधीनां गोचरमनुभवत्ययमुच्यते शूरङ्गमो नाम समाधिः । तत्र कतमो रत्नमुद्रो नाम समाधिः । येन समाधिना सर्वसमाधयो मुद्रिता भवत्ययमुच्यते रत्नमुद्रो नाम समाधिः । एवं यावत् तत्र कतम आकाशसङ्गविमुक्तिनिरुपलेपो नाम समाधिः । यत्र समाधौ स्थित्वा सर्वधर्माणामाकाशसङ्गविमुक्तिनिरुपलेपतामनुप्राप्नोत्ययमुच्यते आकाशसङ्गविमुक्तिनिरुपलेपो नाम समाधिः । इति[5] मृद्वग्रधर्मस्यालम्बनाकारविशेषः ।

अथ खल्वायुष्मन् सुभूतिर्बुद्धानुभावेन आयुष्मन्तं शारिपुत्रमेतदवोचत् । व्याकृतोऽयमायुष्मन् शारिपुत्र बो० महासत्त्वः पूर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैः । येऽप्येतर्हि दशदिशि लोके तिष्ठन्ति ध्रियन्ते यापयन्ति । तेऽपि तथागता अर्हन्तः सम्यक् संबुद्धास्तं बो० महासत्त्वं व्याकुर्वन्ति । य एतैः समाधिभिर्विहरति स समाधिमपि न समनुपश्यति । स न च तेन समाधिना मन्यते[6] अहं समाहित इति । अहं समाधिं समापत्स्ये । अहं समाधिं समापन्नः । अहं समाधिं समापद्ये[7] । सर्वे एते विकल्पा बो० महासत्त्वस्य न विद्यन्ते नोपलभ्यन्ते । इति मध्याग्रधर्मस्यालंबनाकारविशेषः ।

---

1 $C_1$ omits सर्व्व.

2 $C_2$ समस्ता

3 $C_1$ विरतो

4 A & $C_2$ कायलि

5 A मूर्द्धागं ।

6 A omits न समाधिना मन्यते ; $C_1$ समाधि मन्यते ।

7 $C_2$ ०पद्यते

शा०[1] आह। किं पुनरायुष्मन् सु०[2] एषु समाधिषु स्थितो बो० महासत्त्वो व्याक्रियते तथागतैरर्हद्भिः सम्यक्संबुद्धैः।

सु० आह। नो हीदमायुष्मन् शा०। तत् कस्य हेतोः। तथा ह्यायुष्मन् शा० नान्या प्रज्ञापारमिता अन्यः समाधिः अन्यो बोधिसत्त्वो बोधिसत्त्व एव समाधिः समाधिरेव बोधिसत्त्वः।

शा० आह। यद्यायुष्मन् सु० नान्यः समाधिः[3] नान्यो बोधिसत्त्वः समाधिरेव बोधिसत्त्वो बोधिसत्त्व एव समाधिः[4] सर्वधर्मसमतामुपादाय। तत् किं शक्यः स समाधिर्दर्शयितुम्।

सु० आह। न ह्येतदायुष्मन् शा०।

शा० आह। किं पुनरायुष्मन् स कुलपुत्रस्तं समाधिं संजानीते।

सु० आह। नायुष्मन् शा० स कुलपुत्रस्तं समाधिं संजानीते।

शा० आह। कथं न[5] संजानीते।

सु० आह। यथा न विकल्पयति।

शा० आह। कथं न विकल्पयति।

सु० आह। अविद्यमानत्वेन सर्वधर्माणाम् एव समाधिं न विकल्पयति। अनेनायुष्मन् शा० पर्यायेण बो० महासत्त्वो न संजानीते।

शा० आह। कथं न संजानीते।

सु० आह। अविकल्पत्वेन तस्य समाधे र्बो० महासत्त्वो न संजानीते। इति [6]अधिमात्राग्रधर्मस्यालम्बनाकारविशेषः।

---

अथ खलु भगवानायुष्मते सुभूतये[7] साधुकारमदात्। साधु साधु सु० यथापि नाम ते मया [8]अरणाविहारिणामग्रतायां निर्दिष्टस्य निर्देशः। एवं सु० बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षितव्यम्। एवं

---

1 शा० = शारिपुत्र — 2 सु = सुभूतिः or सुभूते

3 $C_1$ & $C_2$ drop it. — 4 A समाधिना

5 A & $C_2$ कथञ्च ; $C^1$ कथञ्च

6 Mss. omit इति ; A ०मात्राग्र ; $C_1$ ०मात्राग०

7 $C_1$ & $C_2$ ०तेयो — 8 A चरणा

ध्यान yāvat दानपारमितायां शिक्षितव्यम्। एवं सप्तत्रिंशद्बोधिपक्षेषु धर्मेषु यावदष्टादशावेणिकेषु बुद्धधर्मेषु शिक्षितव्यम्।

अथ खल्वायुष्मान् शा० भगवन्तमेतदवोचत्। एवं शिक्षमाणो भगवन् बो० महासत्त्वः प्रज्ञापारमितायां शिक्षते। भगवानाह। एवं शिक्षमाणः शा० बो० महासत्त्वः प्रज्ञापारमितायां शिक्षते अनुपलम्भयोगेन। एवं ध्यानपा० as before यावद् विस्तरेण सप्तत्रिंशद्बोधिपक्षेषु धर्मेषु शि०[1] यावदप्रमाणध्याना-रूप्यसमापत्तिषु शि०। दशबलचतुर्वैशारद्याष्टादशावेणिकेषु बुद्धधर्मेषु शि०।

शा० आह। किमिति भगवन् नोपलभते[2]।

भगवानाह। आत्मानं शारिपुत्र नोपलभते[3] यावत् सत्त्वजीवपोष-पुरुषपुद्गलमनुजमानवकारकवेदकजानकपश्यकान् नोपलभते अत्यन्तविशुद्धिता-मुपादाय यावद् व्यस्तसमस्तान्[4] स्कन्धधात्वायतनप्रतीत्यसमुत्पादान् नोपलभते अत्यन्तविशुद्धितामुपादाय। दुःखं नो०[5] समुदयं नो० निरोधं नो०। मार्गं नो०। रूपधातुं नो०। आरूप्यधातुं नो०। अप्रमाणध्यानारूप्य-समापत्तीर्नो०। स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गान्नो०। पारमिता नो०। दशबलचतुर्वैशारद्याष्टादशावेणिकान् बुद्धधर्मान् नो०। स्रोतआपन्नं नो०। सकृदागामिनं नो०। अनागामिनं नो०। अर्हन्तं नो०। प्रत्येकबुद्धं नो०। बोधिसत्त्वं नो०। बुद्धं नो०।

शा० आह। का पुनर्भगवन् विशुद्धिः।

भगवानाह। अनुत्पादः शारिपुत्र अप्रादुर्भावोऽनुपलम्भोऽनभिसंस्कारो विशुद्धिरित्युच्यते। इति सामान्येन विकल्पसंप्रयोगाधिकारः।

शा० आह। एवं शिक्षमाणो भगवन् बो० महासत्त्वः कतमेषु धर्मेषु शिक्षते।

भगवानाह। एवं शिक्षमाणः शारिपुत्र बोः महासत्त्वो न कस्मिंश्चिद्

---

1 शि० = शिक्षते अनुपलम्भयोगेन    2 Mss. लभ्यते

3 A लभ्यते    4 A समसात्; $C_1$ समसा

5 नो० = नोपलभते अत्यन्तविशुद्धितामुपादाय।

धर्मेषु शिक्षते। तत् कस्य हेतोः। नैते शारिपुत्र धर्मास्तथा संविद्यन्ते यथा बालपृथग्जनानामभिनिवेशः।

शा० आह। कथं भगवन्नैते धर्माः संविद्यन्ते।

भगवानाह। तथा न संविद्यन्ते यथा बालपृथग्जनानामभिनिवेशः।

शा० आह। कथं भगवन्नैते धर्माः संविद्यन्ते।

भगवानाह। यथा न संविद्यन्ते तथा संविद्यन्ते। एवमसंविद्यमानाः[1] तेनोच्यतेऽविद्ये ति[2] ॥ इति उष्मगतविकल्पसंप्रयोगे प्रथमोऽविद्याविकल्पः ॥

शा० आह। केन कारणेनोच्यते असंविद्यमाना अविद्ये ति[3]।

भगवानाह। रूपं शा० न संविद्यते अध्यात्यशून्यतामुपादाय बहिर्धाशू०[4] अध्यात्मबहिर्धाशू० यावदभावस्वभावशू०। वेदना संज्ञा संस्कारा विज्ञानं शा० न संविद्यते अ०[5]। यावत् सप्तत्रिंशद्बोधिपक्षा धर्मा न संविद्यन्ते यावदष्टादशावेणिकबुद्धधर्मा न संविद्यन्ते अ० ॥ इति तत्रैव द्वितीयो रूपादिस्कन्धविकल्पः ॥ तत्र बाला अविद्यायां तृष्णायाञ्चाभिनिविष्टाः। [6]तैरविद्यां तृष्णां च कल्पितां[7] कल्पयित्वा अविद्यातृष्णाभ्यामभिनिविश्य[8] उभाभ्यां अन्ताभ्यां सक्तास्ते उभावन्तौ[9] न जानन्ति न पश्यन्ति यथा धर्मा न संविद्यन्ते। ते[10] तान् धर्मान् कल्पयित्वा नामरूपे अभिनिविष्टाः। यावद् बुद्धधर्मेष्वभिनिविष्टाः ॥ इति तत्रैव तृतीयो नामरूपाभिनिवेशविकल्पः ॥ ते धर्मेष्वभिनिविष्टा असंविद्यमानावुभावन्तौ कल्पयन्ति कल्पयित्वा न जानन्ति न पश्यन्ति। किं न जानन्ति न पश्यन्ति। रूपं न जानन्ति न पश्यन्ति। वेदनां संज्ञां संस्कारान् विज्ञानं न०[11]। यावत् स्कन्धधात्वायतनप्रतीत्यसमुत्पादं न०

---

1 A ०मानास्तमोच्यते ; cf. Ś. 842. 2 $C_1$ & $C_2$ अविद्यति

3 $C_1$ अविद्यन्ते ; $C_2$ अविद्यति 4 शू० = शून्यतामुपादाय

5 अ० = अध्यात्मशून्यतामुपादाय। बहिर्धाशून्यतामुपादाय। अध्यात्मबहिर्धाशून्यतामुपादाय।

6 A तेन विद्या 7 A कल्पितायां 8 $C_2$ निवाशा

9 $C_1$ उत्भवन्तौ 10 A & $C_2$ omit it.

11 न० = न जानन्ति न पश्यन्ति

यावदष्टादशावेणिकान् बुद्धधर्मान् न०। तेन ते बाला इति संख्यां गच्छन्ति ॥ इति तत्रैव चतुर्थोऽन्तद्वयासक्तिविकल्पः[1] ॥ ते अविद्यातृष्णाप्रत्ययं न०[2]। रूपं संक्लिष्टमिति न०। एवं रूपं व्यवदानमिति न०। वेदनां संज्ञां विज्ञानं संक्लिष्टमिति न०। एवं विज्ञानं व्यवदानमिति न०। ते न निर्यास्यन्ति। कुतो न निर्यास्यन्ति। कामधातो न नि०[3]। रूपधातोर्न नि०। आरूप्यधातोर्न नि०। श्रावकप्रत्येकबुद्धधर्मेभ्यो न नि० ॥ इति तत्रैव पञ्चमः संक्लेशव्यवदानज्ञान[4]-विकल्पः ॥ ते न श्रद्दधति। किमिति न श्रद्दधति। रूपं रूपेण शून्यमिति न श्रद्दधति। यावद्बोधि बोध्यात्मना शून्यमिति न श्रद्दधति। ते न प्रतिष्ठन्ते। किमिति न प्रतिष्ठन्ते। दानपारमितायां न प्र०[5] yāvat प्रज्ञापारमितायां न प्र०। अविनिवर्तनीयभूमौ न प्र० यावत् बुद्धधर्मेषु न प्र०। अनेन कारणेन बाला इत्युच्यन्ते। ते अभिनिविष्टाः। किमिति अभिनिविष्टाः। रूप yāvat विज्ञानेष्वभि०[6]। रागद्वेषमोहेष्वभि०। दृष्टिकृतेष्वभि० यावद् बोधावभि०। शारिपुत्र आह। एवं शिक्षमाणो भगवन् बो० महासत्त्वः प्रज्ञापारमितायां शिक्षते सर्वाकारज्ञतायां निर्यास्यति। भगवानाह। एवं शिक्षमाणः शारिपुत्र बो० महासत्त्वः प्र०[7]। भगवानाह। इह शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितामनुपायकुशलः कल्पयत्यभिनिविशते। ध्यानपारमितां क०[8] yāvat दानपारमितां क०। एवमप्रमाणध्यानारूप्यसमापत्तीः क०। स्मृत्युपस्थानं सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गान् क०। दशबलवैशारद्यप्रतिसंविदष्टादशावेणिकान् बुद्धधर्मान् क० यावत् सर्वधर्मान् सर्वाकारज्ञतां क०। अनेन शारिपुत्र पर्यायेण बो० महासत्त्वः प्र०। शारिपुत्र आह। एवं शिक्षमाणो भगवन् बो० महासत्त्वः प्र०। भगवानाह। एवं शिक्षमाणः शारिपुत्र बो० महासत्त्वः प्र० ॥ इति [9]तत्रैव षष्ठ आर्यमार्गप्रतिष्ठानविकल्पः ॥

---

1 A यश्यक्ति ; $C_1$ यसक्ति

2 न० = न जानन्ति न पश्यन्ति

3 नि० = निर्यास्यन्ति

4 A महेश: ; $C_1$ & $C_2$ व्यवदाना

5 प्र० = प्रतिष्ठन्ते

6 भि० = भिनिविष्टाः

7 प्र० = प्रज्ञापारमितायां न शिक्षते। सर्व्वाकारज्ञतायां न निर्यास्यति।

8 क० = कल्पयत्यभिनिविशते

9. A •षाष्ठ

शारिपुत्र आह। कथं पुनर्भगवन् बो० महासत्त्वः प्रज्ञापारमितायां शिक्षते यथा शिक्षमाणः सर्वाकारज्ञतायां निर्यास्यति। भगवानाह। यदा शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् प्रज्ञापारमितां नोपलभते न समनुपश्यति। एवं खलु शारिपुत्र बो० महासत्वः प्रज्ञापारमितायाञ्चरम् प्रज्ञापारमितायां शिक्षमाणः सर्वाकारज्ञतायां निर्यास्यति अनुपलम्भयोगेन। एवं ध्यानपारमितां yāvat दानपारमितां नो०[1] यावद्बोधिं सर्वाकारज्ञतां नो०। एवं खलु शारिपुत्र बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् प्रज्ञापारमितायां शिक्षमाणः सर्वाकारज्ञतायां निर्यास्यत्यनुपलम्भयोगेन॥ इति तत्रैव सप्तम उपलम्भविकल्पः॥ शारिपुत्र आह। कस्यानुपलम्भयोगेन। भगवानाह। आत्मानं शारिपुत्र नो० अत्यन्तविशुद्धितामुपादाय॥ इति तत्रैवाष्टम आत्मादिविकल्पः[2]॥ अनुत्पादः शारिपुत्राप्रादुर्भावोऽनभिसंस्कारो विशुद्धिः॥ इति तत्रैव नवमो विशुद्ध्यनुत्पादादिविकल्पः॥ इति प्रथमो[3] ग्राह्यविकल्पः॥

सोऽनुपायकुशलो रूपं क०[4] यावद् विज्ञानं क०॥ इति मूर्धगतविकल्पसंप्रयोगे प्रथमो राश्यर्थविकल्पः॥ चक्षुः क० एवं यावन्मनः। रूपं क० एवं यावद् धर्मान्॥ इति तत्रैव द्वितीय आयद्वारार्थविकल्पः॥ चक्षूरूपचक्षुर्विज्ञानधातून् क०। एवं यावन्मनोधर्ममनोविज्ञानधातून् क०॥ इति तत्रैव तृतीयो गोत्रार्थविकल्पः॥ अविद्यां क० एवं यावज्जरामरणं क०॥ इति तत्रैव चतुर्थ उत्पादार्थविकल्पः॥ सोऽध्यात्मशून्यतां[5] बहिर्धाशू० अध्यात्मबहिर्धाशू० यावदभावस्वभावशू[6]० क०॥ इति तत्रैव पञ्चमः शून्यतार्थविकल्पः॥ षट्पारमिताः क०॥ इति तत्रैव षष्ठः पारमितार्थविकल्पः॥ सप्तत्रिंशद् बोधिपक्षान्[7] धर्मान् क०॥ इति तत्रैव सप्तमो दर्शनमार्गविकल्पः॥ स ध्यानाभिज्ञाप्रमाणारूप्यसमापत्तीः क०॥ इति तत्रैवाष्टमो भावनामार्गविकल्पः॥ स दशतथागतबलानि यावत् सर्वा-

---

1 नो० = नोपलभते न समनुपश्यति

2 $C_2$ ०आत्माविकल्पः

3 $C_2$ प्रथमा

4 क० = कल्पयत्यभिनिविशते

5 $C_2$ शून्यतायां

6 Mss. drop स्वभाव

7 $C_1$ पक्षधर्मान्

कारज्ञतां क० ॥ इति तत्रैव नवमो शैक्षमार्गविकल्पः ॥ इति द्वितीयो ग्राह्यविकल्पः ॥

आत्मानं शारिपुत्र नोप०[1] । एवं सत्त्वं जीवं पोषं पुरुषं पुद्गलं मनुजं मानवं कारकं वेदकं जानकं पश्यकन्नो०[2] । तत् कस्य हेतोः । अत्यन्ततयात्मा न विद्यते नो० ॥ इति [3]क्षान्तिसहगतविकल्पसम्प्रयोगे[4] प्रथमः स्वतन्त्रात्मविकल्पः[5] ॥ रूपं शारिपुत्र नोपलभते यावद्विज्ञानं नो० ॥ इति तत्रैव द्वितीय एकात्मविकल्पः ॥ चक्षुः शारिपुत्र नो० एवं यावन्मनः । रूपं नो० एवं यावद् बुद्धधर्मान्नो०[6] ॥ इति तत्रैव तृतीयः कारणात्मविकल्पः ॥ चक्षूरूपविज्ञानानि शारिपुत्र नो० यावत् मनोधर्ममनोविज्ञानानि नो० ॥ इति तत्रैव चतुर्थो [7]द्रष्टाद्यात्मविकल्पः ॥ प्रतीत्यसमुत्पादं शारिपुत्र नो० यावदारूप्यसमापत्तीर्नो० ॥ इति तत्रैव षष्ठो वैराग्याधारात्मविकल्पः ॥ आर्यसत्यानि नो० ॥ इति तत्रैव सप्तमो दर्शनाधारात्मविकल्पः ॥ अष्टौ विमोक्षान् नवानुपूर्वविहारसमापत्तीर्नो०[8] ॥ इति तत्रैवाष्टमो भावनाधारात्मविकल्पः ॥ दशबलानि नो० यावत् सर्वाकारज्ञतां नो० । कथं नो० । आत्मत्वेन । तत् कस्य हेतोः । आत्मनोऽत्यन्तविशुद्धितामुपादाय ॥ इति तत्रैव नवमः कृतार्थताधारात्मविकल्पः[9] ॥ इति प्रथमो ग्राहकविकल्पः[10] ॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । यो भगवन् पृच्छेत् किमयं[11] मायापुरुषः प्रज्ञापारमितायां शिक्षित्वा सर्वाकारज्ञातायां[12] निर्यास्य-

---

1 नो० = नोपलभते

2 $C_2$ drops all anusvāras.

3 A क्षान्तिगत ; $C_2$ क्षान्तिसहगत

4 $C_2$ सम्प्रयोगे: प्रथम:

5 A & $C_1$ त्मकविकल्प:

6 $C_1$ धर्मान्नोप०

7 A द्रष्टाद्या०

8 $C_1$ पत्तिनो०

9 $C_1$ कृतार्थधारात्म०

10 Ś. ch. v ends here.

11 $C_2$ या भगवन्पृच्छिद्किमयं ; $C_1$ भगवान् पृच्छे किमयं ; A भगवन् पृच्छन् किमयं

12 $C_1$ ज्ञतामि०

तीति। तस्यैवं पृच्छतः कथं निर्देष्टव्यं स्यात्। एवं ध्यानपारमितायां yāvat दानपारमितायां शि०[1]। तस्यैवं etc.[2] यावत् सप्तत्रिंशद्बोधिपक्षेषु धर्मेषु यावत् सर्वाकारज्ञातायां शि० सर्वाकारज्ञतां प्राप्स्यतीति। तस्यैवं etc.

भगवानाह। तेन हि सुभूते त्वामेवात्र[3] प्रतिप्रक्ष्यामि। यथा ते क्षमते तथा व्याकुर्याः[4]। तत् किं मन्यसे सुभूते। अन्यद्रूपमन्या माया अन्या वेदना अन्या संज्ञा अन्ये संस्काराः अन्यत् विज्ञानमन्या माया। सुभूतिराह। नो भगवान्॥ इत्यग्रधर्मगतविकल्पसंप्रयोगे प्रथमः [5]स्कन्धप्रज्ञप्तिविकल्पः॥

भगवानाह। तत् किं मन्यसे सुभूते। अन्या माया अन्यच्चक्षुः। अन्या माया अन्यच्छ्रोत्रं घ्राणं जिह्वा कायोऽन्या माया अन्यन्मनः अन्या माया अन्यद्रूपं अन्या माया अन्यः शब्दो गन्धो रसः स्प्रष्टव्यः। अन्या माया अन्ये धर्माः। सुभूतिराह। नो भगवन्॥ इति तत्रैव द्वितीय आयतनप्रज्ञप्तिविकल्पः॥

भगवानाह। तत् किं मन्यसे सुभूते अन्या माया अन्यच्चक्षुर्विज्ञानं and so on up to अन्या माया अन्यत् मनोधर्ममनोविज्ञानम् अन्या माया अन्यः चक्षुःसंस्पर्शः and so on up to अन्या माया अन्यो मनःसंस्पर्शः। सु०। नो०[6]। भ०। त०[7]। अन्या माया अन्यच्छ्रोत्रघ्राणजिह्वाकायमनःसंस्पर्शप्रत्ययवेदनादुत्पद्यते वेदयितं सुखं वा दुःखं वा अदुःखासुखं वा[8]। सु०। नो०।

भ०। त०। अन्या माया अन्यः पृथिवीधातुरन्या माया अन्योऽब्धातु and so on up to अन्यो विज्ञानधातुः। सुभूतिराह नो भगवन् अन्या पृथिवीधातुरन्या माया। पृथिवीधातुरेव माया मायैव पृथिवीधातुः and

1 शि० = शिक्षित्वा सर्वाकारज्ञतायां निर्यास्यतीति।

2 तस्यैवं etc. = तस्यैवं पृच्छतः कथं निर्देष्टव्यं स्यात्।

3 A & $C_2$ तामेवात्र 4 $C_2$ व्याकुर्य्यात् 5 $C_1$ स्कन्धे०

6 सु० नो० = सुभूतिराह। नो भगवन्।

7 भ० त० = भगवानाह। तत् किं मन्यसे सुभूते।

8 A drops here 2 lines.

so on up to नो भगवन्नन्यो विज्ञानधातुरन्या माया। विज्ञानधातुरेव माया मायैव विज्ञानधातुः॥ इति तत्रैव तृतीयो धातुप्रज्ञप्तिविकल्पः॥

भ०। त०[1]। अन्या माया अन्यः प्रतीत्यसमुत्पादः। सु०। नो भगवन्नन्या अविद्या अन्या माया। अविद्यैव माया मायैवाविद्या and so on up to नो भगवन्नन्यज्जरामरणमन्या माया। जरामरणमेव माया मायैव जरामरणम्॥ इति तत्रैव चतुर्थः प्रतीत्यसमुत्पादप्रज्ञप्तिविकल्पः।

भ०। त०। अन्या माया अन्ये सप्तत्रिंशद्बोधिपक्षा धर्माः। सु०। नो०[2]॥ इति तत्रैव पञ्चमो व्यवदानप्रज्ञप्तिविकल्पः॥

भ०। त०। अन्या माया अन्या शून्यता। अन्या माया अन्यत् निमित्तमन्या माया अन्यत् प्रणिहितम्। सु०। नो०॥ इति तत्रैव षष्ठो दर्शनमार्गप्रज्ञप्तिविकल्पः॥

भ०। त०। अन्या माया अन्या ध्यानारूप्यसमापत्तयः। सु०। नो०॥ इति तत्रैव सप्तमो भावनामार्गप्रज्ञप्तिविकल्पः॥

भ०। त०। अन्या माया अन्या सर्वशून्यता। सु०। नो०। इति तत्रैवाष्टमो विशेषमार्गप्रज्ञप्तिविकल्पः।

भ०। त०। अन्या माया अन्यानि दशबलानि। अन्या माया अन्येऽष्टादशावेणिकाबुद्धधर्माः। सु०। नो०।

भ०। त०। अन्या माया अन्यो बोधिः। सु०। नो भगवन् अन्या माया अन्यद्रूपं रूपमेव भगवन् माया मायैव भगवन् रूपम् and so on up to नो भगवन् अन्या माया अन्यद् विज्ञानं विज्ञानमेव भगवन् माया मायैव भगवन् विज्ञानम्।

न भगवन् अन्यच्चक्षुरन्या माया न भगवन् अन्यद्रूपमन्या माया and so on as before (see p. 151, ll. 14-18) to अदुःखं वा असुखं वा।[3] न भगवन् अन्या माया अन्ये बोधिपक्षा धर्माः। बोधिपक्षा धर्मा एव भगवन् माया। मायैव भगवन् बोधिपक्षा धर्माः। न भगवन्

---

1 भ० त० = भगवानाह। तत् किं मन्यसे सुभूते

2 सु० नो० = सुभूतिराह। नो भगवन्।

3 Mss. add here अन्या माया।

अन्या माया अन्येऽष्टादशावेणिका बुद्धधर्माः। अष्टादशावेणिका बुद्धधर्मा एव भगवन् माया मायैव भगवन्नष्टादशावेणिका बुद्धधर्माः। न भगवन् अन्या माया अन्यो बोधिः बोधिरेव माया मायैव भगवन् बोधिः।

भ०। त०[1]। अपि नु मायाया उत्पादो वा निरोधो वा। सु०। नो०[2]। भ०। त०। मायायाः संक्लेशो वा व्यवदानं वा। सु०। नो०। भ०। त०। यस्य नोत्पादो न निरोधो न संक्लेशो न व्यवदानं स प्रज्ञापारमितायां शिक्षते ध्यानपारमितायां yāvat दानपारमितायां शिक्षते। अप्रमाणध्यानारूप्यसमापत्तिषु शिक्षते सप्तत्रिंशद्बोधिपक्षेषु धर्मेषु अभिज्ञादशबलवैशारद्यप्रतिसंविदावेणिकबुद्धधर्मेषु शिक्षते। सर्वज्ञतायां[3] निर्यास्यति यावत् सर्वाकारज्ञतामनुप्राप्स्यति। सु०। नो०।

भ०। त०। अत्रैषा संज्ञा समज्ञा प्रज्ञप्तिर्व्यवहारो बोधिसत्त्व इति पञ्चसूपादानस्कन्धेषु। सु०। नो०। भ०। त०। संज्ञा समज्ञा प्रज्ञप्तिर्व्यवहारमात्रेण पञ्चानामुपादानस्कन्धानामुत्पादो वा निरोधो वा संक्लेशो वा व्यवदानं वा उपलभ्यते। सु०। नो०। भ०। त०। यस्य न संज्ञा न समज्ञा न प्रज्ञप्तिर्न व्यवहारो न नाम न नामप्रज्ञप्तिर्न कायो न कायकर्म न वाक् न वाक्कर्म न मनो न मनःकर्म नोत्पादो न निरोधो न संक्लेशो न व्यवदानमपि न स प्रज्ञापारमितायां शिक्षित्वा सर्वाकारज्ञतायां निर्यास्यति। सु०। नो०। भ०। एवं खलु सुभूते बो० महासत्त्वः प्रज्ञापारमितायां शिक्षित्वा सर्वाकारज्ञतायां निर्यास्यति अनुपलम्भयोगेन। सु०। एवं भगवन् बो० महासत्त्वेन प्रज्ञापारमितायां शिक्षमाणेन मायापुरुषेणैव शिक्षितव्यं भगवत्यनुत्तरायायां सम्यक् संबोधौ। तत् कस्य हेतोः। तथाहि भगवन् स[4] एव मायापुरुषो वेदितव्यः। यदुत[5] पञ्चोपादानस्कन्धाः। भ०। त०। अपि त्विमे[6] पञ्चोपादानस्कन्धाः प्रज्ञापारमितायां शिक्षित्वा सर्वाकारज्ञतायां निर्यास्यति। सु०। नो०। तत्

---

1 भ० त०= भगवानाह। तत् किं मन्यसे सुभूते।

2 सु० नो०= सुभूतिराह। नो भगवन्।

3 $C_2$ सर्वाकारज्ञतायां

4 A omits स

5 A & $C_1$ यदुतेयं

6 A त्वमीयं $C_2$ त्वमीपञ्चो०; cf Ś. 905.

कस्य हेतोः । तथाहि भगवन्नभावस्वभावाः[1] पञ्चोपादानस्कन्धाः । एवं स्वप्नोपमाः पञ्चस्कन्धाः [2]स्वप्नश्चाभावस्वभावो नोपलभ्यते[3] तथैव पञ्चस्कन्धा अभावस्वभावतया नोपलभ्यन्ते । भ० । त० । प्रतिश्रुत्कोपमाः पञ्चस्कन्धाः प्रतिभासोपमाः निर्मितिकोपमाः प्रतिबिम्बोपमाः पञ्चस्कन्धाः प्रज्ञापारमितायां शिक्षित्वा सर्वाकारज्ञतायां निर्यास्यति । सु० । नो० । तत् कस्य हेतोः । तथाहि भगवन्नभावस्वभावो प्रतिश्रुत्क एव प्रतिभासो निर्मितकं प्रतिबिम्बस्तथैव पञ्चस्कन्धा अभावस्वभावतया नोपलभ्यन्ते । तथाहि भगवन् मायोपमं रूपं मायोपमा वेदना yāvat विज्ञानं । यच्च विज्ञानं तत् षडिन्द्रियं ते पञ्चस्कन्धास्ते च अध्यात्मशून्यतया नोपलभ्यन्ते । बहिर्धाशून्यतया नोप०[4] । अध्यात्मबहिर्धाशून्यतया नोप० । यावदभावस्वभावशून्यतया नोप० । सचेदेवं भगवन् भाष्यमाणो यो बो० महासत्त्वो नावलीयते न संलीयते न विप्रतिसारी भवति नोत्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते, वेदितव्यमयम्भगवन् निर्यास्यति सर्वज्ञतायां सर्वाकारज्ञतामनुप्राप्स्यति ॥ इति तत्रैव नवमोऽशैक्षमार्गप्रज्ञप्तिविकल्पः ॥ इति द्वितीयो ग्राहकविकल्पः ।

---

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । मा खलु[5] भगवन् नवयानसंप्रस्थितो बो० महासत्त्व इमं निर्देशं श्रुत्वा अवलीयते संलीयते विप्रतिसारी भवेत् । उत्त्रस्येत् सन्त्रस्येत् सन्त्रासमापद्येत । भगवानाह । सचेत् सुभूते नवयानसंप्रस्थितो बो० महासत्त्वः प्रज्ञापारमितायां चरन् अनुपायकुशलो भवेन्न च कल्याणमित्रहस्तगतो भवेत् उत्त्रस्येत् संत्रस्येत् सन्त्रासमापद्येत । सुभूतिराह । कतमद् भगवन् बो० महासत्त्वस्य प्रज्ञापारमितायाञ्चरत उपायकौशल्यं यत्र चरन् बो० महासत्त्वो नोत्त्रस्यति etc.[6] ।

भगवानाह । इह सुभूते बो० महासत्त्वः सर्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपमनित्यमिति प्रत्यवेक्षते न चोपलभते । वेदनां स०[7] । संज्ञां स० । संस्कारान्

---

1 A ०भगवन्नभावस्वभावा: 2 A स्वप्नस्य भाव० 3 A ०लभ्य:

4 नोप० = नोपलभ्यन्ते, A. sometimes नोपलभ्यन्ते । 5 Ś 910 : माहैव

6 नोत्त्रस्यति etc. = नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते ।

7 स० = सर्वाकारज्ञताप्रतिसंयुक्तेन चित्तेनानित्येति प्रत्यवेक्षते न चोपलभते ।

स०। विज्ञानं स०। इदं सुभूते बो० महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशल्यं वेदितव्यम्।

पुनरपरं सुभूते बो० महासत्त्वः सर्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन रूपं दुःखमिति प्रत्यवेक्षते न चोपलभते and so on as in p. 154, lines 23ff. only अनित्य is replaced by दुःखं, शून्यं, अनात्म, शान्तं, विविक्तं, अनिमित्तं, अप्रणिहितं up to उपायकौशल्यं वेदितव्यम्।

पुनरपरं सुभूते बो० महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्या[1] धर्मदेशनाङ्करोत्यनुपलम्भयोगेन इयं बो० महासत्त्वस्य दानपारमिता। तेषामेव सर्वाकारज्ञताप्रतिसंयुक्तानां मनसिकाराणामपरामर्षणता इयं०[2] शीलपा०[3]। या०[4] क्षमणारोचनप्रत्यवेक्षणता[5] इयं० क्षान्तिपा०। या० अनुत्सृष्टिरियं० वीर्यपा०। या० च श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानां मनसिकाराणामनवकाशदानता अन्येषामपि वाकुशलानां धर्माणामियं० ध्यानपा०। एवं हि सुभूते बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् नोत्त्रस्यति etc.।

पुनरपरं सुभूते बो० महासत्त्वः प्रज्ञापारमितायां चरन्नेवं प्रत्यवेक्षते न रूपशून्यतया रूपं शून्यं, रूपमेव शून्यता, शून्यतैव रूपम्। न वेदनाशून्यतया वेदना शून्या, वेदनैव शून्यता, शून्यतैव वेदना, and so on with the remaining स्कन्धs; the groups of धातुs; आयतनs; विज्ञानs; संस्पर्शs; संस्पर्शप्रत्ययवेदयितs; स्मृत्युपस्थानs, एवं सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गानि। न मार्गशून्यतया मार्गः शून्यो, मार्ग एव शून्यता, शून्यतैव मार्गः। न बलवैशारद्यावेणिकबुद्धधर्मशून्यतया बुद्धधर्माः शून्याः, बुद्धधर्मा एव शून्यता. शून्यतैव बुद्धधर्माः। इयं सुभूते बो० महासत्त्वस्य

---

1 A याम्; $C_2$ या

2 इयं = इयं बोधिसत्त्वस्य महासत्त्वस्य     3 पा० = पारमिता

4 या० = या तेषामेव सर्वाकारज्ञताप्रतिसंयुक्तानां मनसिकाराणाम्

5 cf. Ś. 921.

प्रज्ञापारमिता, एवं हि सुभूते बो० महासत्त्वः प्रज्ञापारमितायाश्चरन् नोत्त्रस्यति etc.। इत्युपायकौशल्यं[1] प्रथमः संपरिग्रहः।

---

सुभूतिराह। कतमानि भगवन् बो महासत्त्वस्य कल्याणमित्राणि यैः परिगृहीत इमं प्रज्ञापारमितानिर्देशं श्रुत्वा[2] नोत्त्रस्यति etc.

भगवानाह। इह सुभूते बो० महासत्त्वस्य कल्याणमित्रानि यान्यस्य[3] रूपमनित्यमिति धर्मं देशयन्ति तच्चानुपलम्भयोगेन। तानि च कुशलमूलानि न श्रावकप्रत्येकबुद्धभूमौ परिणामयन्ति अन्यत्र सर्वाकारज्ञतायाः। वेदना संज्ञा संस्कारा विज्ञानमनित्यमिति etc. as before ll. 6-7 up to सर्वाकारज्ञतायाः। अमूनि सुभूते बो० महासत्त्वस्य कल्याणमित्राणि यान्यस्य रूपं दुःखमिति धर्मं देशयन्ति। रूपमनात्मेति शान्तमिति विविक्तमिति शून्यमिति अनिमित्तमिति अप्रणिहितमिति धर्मं देशयन्ति तच्चानुपलम्भ etc as before ll. 6-7 up to सर्वाकारज्ञतायाः। वेदना संज्ञा संस्काराः यान्यस्य विज्ञानं दुःखमिति etc. as before ll. 10-12 up to सर्वाकारज्ञतायाः। अमूनि सुभूते बो० महासत्त्वस्य कल्याणमित्राणि। पुनरपरं सुभूते बो० महासत्वस्य कल्याणमित्रानि यान्यस्य चक्षुरनित्यमिति धर्मं देशयन्ति etc. as before. And so on with the remaining धातुs; विज्ञानs; संस्पर्शs; संस्पर्शप्रत्ययवेदयितs; स्मृत्युपस्थानs; सम्यक्प्रहाणs; up to सर्वाकारज्ञतायाः। एवं सम्यक्प्रहाणानि ऋद्धिपादा इन्द्रियानि बलानि बोध्यङ्गानि आर्याष्टाङ्गमार्गोऽनित्य इति etc. as before ll. 10-12. एवमप्रमाणध्यानारूप्यसमापत्तयोऽभिज्ञा अनित्या etc. as before ll. 10-12. एवं वैशारद्यानि प्रतिसंविदो दश तथागतबलानि अष्टादशावेणिका बुद्धधर्मा अप्यनित्या इति धर्मं देशयन्ति दुःखा etc. as before ll. 10-12. इमानि सुभूते बो० महासत्त्वस्य कल्याणमित्राणि यैः परिगृहीत इमं प्रज्ञापारमितानिर्देशं श्रुत्वा नोत्त्रस्यति etc.

---

1 Mss. कौशलं $C_2$ कुशलमूलं

2 A श्रुत्वो

3 $C_2$ यानि यानस्य

सुभूतिराह। कथं भगवन् बो० महासत्त्वः प्रज्ञापारमितायामनुपायकुशलो भविष्यति पापमित्रहस्तगतश्च भविष्यति। य इमं[1] प्रज्ञापारमितानिर्देशं श्रुत्वा उत्त्रसिष्यति संत्रसिष्यति सन्त्रासमापत्स्यते।

भगवानाह। इह सुभूते बो० महासत्त्वोऽपगतसर्वाकारज्ञताप्रतियुक्तैः मनसिकारैः प्रज्ञापारमितां भावयति उपलभते। तया च प्रज्ञापारमितया मन्यते। And so on with the other पारमिताs; replace प्रज्ञा by ध्यान, वीर्य, क्षान्ति, शील and दान।

पुनरपरं सुभूते बो० महासत्त्वः प्रज्ञापारमितायां चरन् अप०[2] रूपमध्यात्मशून्यमिति मनसिकरोति। रूपं बहिर्धाशू०[3] यावद्रूपमभावस्वभावशू० and so on with the other स्कन्धs। अप० तां चाध्यात्मशून्यतां बहिर्धाशून्यतां अध्यात्मबहिर्धाशून्यतां यावदभावस्वभावशून्यतामुपलभते ताभिश्च शून्यताभिर्मन्यते उपलम्भयोगेन। चक्षुरध्यात्मशू०[3] बहिर्धाशू० आध्यात्मबहिर्धाशू० यावदभावस्वभावशू०। ताश्च शून्यता उपलभते तया च मन्यते उपलम्भयोगेन। एवं श्रोत्रं घ्राणं जिह्वा कायो मनोऽध्यात्मशू० as before ll. 7-9. And so on with the आयतनs; विज्ञानs; संस्पर्शs; and संस्पर्शप्रत्ययवेदयितs। एवमविद्यायां यावज्जरामरणमध्यात्मशू० as before ll. 7-9।

पुनरपरं सु० बो० महासत्त्वः प्रज्ञापारमितायां चरन् अप० स्मृत्युपस्थानानि भावयति तानि च स्मृत्युपस्थानानि उपलभते तैश्च मन्यते उपलम्भयोगेन। एवं सम्यक्प्रहाणानि yāvat बुद्धधर्मान् भावयति। तांश्च बुद्धधर्मानुपलभते तैश्च मन्यते उपलम्भयोगेन। एवं खलु सुभूते बो० महासत्त्वः प्रज्ञापारमितायां चरन्ननुपायकुशल इमं प्रज्ञापारमितानिर्देशं श्रुत्वा उत्त्रस्यति etc[4].

सुभुतिराह। कथं भगवन् बो० महासत्त्वः पापमित्रपरिगृहीतो भवति।

---

1 $C_2$ इयं

2 अप० = अपगतसर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः

3 शू० = शून्यमिति मनसिकरोति

4 उत्त्रस्यति etc. = उत्त्रस्यति सन्त्रस्यति सन्त्रासमापद्यते

येन पापमित्रपरिग्रहणेनेमं प्रज्ञापारमितानिर्देशं[1] श्रुत्वा उत्त्रस्यति etc भगवानाह। इह सुभूते बो० महासत्त्वस्य प्रज्ञापारमिताया विवेचयति[2] ध्यानपारमिताया yāvat दानपारमिताया विवेचयति। नात्र[3] शिक्षितव्यमिति नैतत् तथागतेनार्हता सम्यक्संबुद्धेन भाषितमिति कविकृतान्येतानि काव्यानि नैतानि श्रोतव्यानि नोद्ग्रहीतव्यानि न पर्यवाप्तव्यानि न धारयितव्यानि न वाचयितव्यानि न मनसिकर्तव्यानि[4] नापि परस्या-देशयितव्यानि। इदं[5] etc.

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं योऽस्य न मारकर्माण्युपदिशति। न मारदोषानाचष्ट इति हि मारः पापीयान् बुद्धवेषेण विवेचयति बो० महासत्त्वमुपसंक्रम्यैवं ब्रवीति। किं ते कुलपुत्र प्रज्ञापारमितया भावितया yāvat किं ते दानपारमितया भावितया। इदं etc.

पु० सु० मारः पापीयान् बुद्धवेषेण श्रावकभूमिप्रतिसंयुक्तानि सूत्राणि गेयं व्याकरणं गाथोदानं निदानमितिवृत्तकं जातकानि वैपुल्यमद्भुतधर्मावदानोपदेश-मुपदेक्ष्यति प्रकाशयिष्यति विभजिष्यति उत्तानीकरिष्यति संप्रकाशयिष्यति। इमान्येवंरूपाणि मारकर्माणि चाख्यातानि नावबोधयति। इदमपि etc.

पु० सु० मा०[6] बो० महासत्त्वमुपसंक्रम्यैवं वक्ष्यति। न ते कुलपुत्र किंचिद्बोधिचित्तं नापि त्वमविनिवर्तनीयो नापि त्वं शक्ष्यस्यनुत्तरां सम्यक्संबोधिमभि-संबोद्धुम्। य इमान्येवं रूपाणि मारकर्माण्याख्यातानि नावबोधयति। इदमपि etc.

पु० सु० मा० बो० महासत्त्वस्य बुद्धवेषेणोपसंक्रम्यैवं वक्ष्यति चक्षुः कुल-

---

1 $C_2$ ०पारमिताया चरणनिर्द्देशे श्रुत्वा

2 Ś. 1185 : इह सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं यः प्रज्ञापार-मितायां चरन्तं विवेचयति विच्छिन्दयति।

3 $C_2$ नोत्र

4 $C_2$ मनसितव्यानि

5 इदं, or इदमपि, or इमानि etc. = इदं, or इदमपि, or इमानि सुभूते बोधिसत्त्वस्य महासत्त्वस्य पापमित्रं वेदितव्यम्।

6 मा० = मारः पापीयान्

पुत्र शून्यमात्मना चात्मीयेन च। एवं श्रोत्रं yāvat मनः शून्यमात्मना चात्मीयेन च and so on with the आयतनs; विज्ञानs; संस्पर्शs; संस्पर्शप्रत्ययवेदयितs; पारमिताs up to स्मृत्युपस्थानानि शून्यानि आत्मना चात्मीयेन च एवं सम्यक्प्रहाणानि ऋद्धिपादाः इन्द्रियाणि बलानि बोध्यङ्गानि मार्गो यावदावेणिका बुद्धधर्माः शून्या आत्मना चात्मीयेन च। किं करिष्यत्यनुत्तरां सम्यक्संबोधिमभिसंबुध्य य इमान्येवंरूपाणि मारकर्माणि नाचष्टे नोपदिशति। इदं etc.[1]

पु० सु० मा० पा०[2] बो० महासत्त्वं प्रत्येकबुद्धवेषेणोपसंक्रम्यैवं वक्ष्यति। शून्या कुलपुत्र पूर्वदिग् बुद्धैर्भगवद्भिर्बोधिसत्त्वैः श्रावकैश्च नात्र बुद्धो न बोधिर्न बोधिसत्त्वो न श्रावकः। एवं समन्ताद् दशदिशः शून्या बुद्धैर्भगवद्भिः बोधिसत्त्वैः श्रावकैश्च नात्र बुद्धो न बोधिर्न बोधिसत्त्वो न श्रावकः। य इमान्येवंरूपाणि मारकर्माणि नोपदेक्ष्यति। इमानि etc.

पु० सु० मा० पा० श्रमणवेषेणोपसंक्रम्य बो० महासत्त्वं सर्वाकारज्ञताप्रतिसंयुक्तेभ्यो मनसिकारेभ्यो विवेच्य श्रावकप्रत्येकबुद्धप्रतिसंयुक्तै र्मनसिकारैरनुशासिष्यति अववदिष्यति[3]। य इदमेवं रूपं मारकर्म नोपदेक्ष्यति। इदं etc.

पु० सु० मा० पा० उपाध्यायाचार्यवेषेणोपसंक्रम्य बो० महासत्त्वं बोधिसत्त्वचर्याया विवेचयिष्यति[4] सर्वाकारज्ञताप्रतिसंयुक्तेभ्यो मनसिकारेभ्यो विवेचयिष्यति। स्मृत्युपस्थानेषु नियोजयिष्यति सम्यक्प्रहाणेषु ऋद्धिपादेषु इन्द्रियेषु बलेषु बोध्यङ्गेषु मार्गेषु नियोजयिष्यति शून्यतायामनिमित्ते अप्रणिहिते नियोजयिष्यति। इमान्येवंरूपान् धर्मान् साक्षात्कृत्य श्रावकभूमिं साक्षात्कुरुष्व, किं ते करिष्यत्यनुत्तरया सम्यक्संबोध्यभिसंबुद्धया[5] य इमान्येवंरूपाणि मारकर्माणि नाचष्टे नोपदिशति। इदं etc.

---

1 See p. 158, fn. 5

2 पु० सु० मा० पा० = पुनरपरं सुभूते मारः पापीयान्

3 A अववेदयिष्यति

4 $C_2$ विप्पचयिष्यन्ति

5 Mss. ०तरासम्यक्संबोधि

पु० सु० मा० पा० मातापितृवेषेणोपसंक्रम्य बो० महासत्त्वमेवं वक्ष्यति । एहि त्वं कुलपुत्र स्रोतआपत्तिफलसाक्षात्क्रियायै योगमापद्यस्व yāvat अर्हत्त्वफलसाक्षात्क्रियायै योगमापद्यस्व । किं तेऽनुत्तरया सम्यक्संबोध्याभिसंबुद्धया यस्याः कृतशोऽसंख्येयान् अप्रमेयान् कल्पान् संसारे संसरतो हस्तच्छेदाः पादच्छेदाश्चानुभवितव्याः[1] । य इमान्येवं रूपाणि मारकर्माणि नोपदेक्ष्यति नाख्यास्यति । इदं etc.

पु० सु० बो० महासत्त्वस्य मा० पा० भिक्षुवेषेणोपसंक्रम्य रूपमनित्यमिति देशयिष्यति उपलम्भयोगेन । रूपं दुखमनात्मकं शान्तं विविक्तं शून्यमनिमित्तमप्रणिहितमिति देशयिश्यति उपलम्भयोगेन and so on with the remaining स्कन्धs and धातुs । एवं यावत् स्मृत्युपस्थानान्यानित्यानि etc. as before ll. 7-8 । एवं सम्यक्प्रहाणानि yāvat मार्गोऽनित्यो etc. as before ll. 7-8. यावद्बुद्धधर्मा अपि अनित्या etc. as before ll. 7-8. । य इमान्येवंरूपाणि मारकर्माणि नोपदेक्ष्यति नाख्यास्यति इदमपि etc. पापमित्रं वेदितव्यं विदित्वा च परिवर्जयितव्यम् ॥ इति कल्याण-[2]मित्रद्वितीयसंपरिग्रहः । इत्युक्तं [3]निर्वेधाङ्गं चतुर्विधम्० ॥

सुभूतिराह । बोधिसत्त्वो बोधिसत्त्व[4] इति भगवन्नुच्यते । बोधिसत्त्व इति भगवन् कः पदार्थः । भगवानाह । अपदार्थः सुभूते बोधिसत्त्वपदार्थः । तत् कस्य हेतोः । नहि सुभूते बोधेरुत्पादास्तिता वा नास्तितता वा विद्यते वोपलभ्यते । तस्मादपदार्थः सुभूते बोधिसत्त्वपदार्थः ॥ इतिगोत्रस्वरूपम् । तद् यथापि नाम सुभूते आकाशे शकुनेः पदं न वि०[4] एवमेव सुभूते बोधिसत्त्वपदार्थो न वि०[5] । then the previous lines are repeated, replacing शकुनेः by स्वप्नस्य ; मायायाः ; मरीच्याः ; प्रतिश्रुत्कायाः ; and प्रतिभासस्य, प्रतिविम्बस्य, गन्धर्वनगरस्य, निर्मितस्य[6] ॥

---

1 $C_2$ ०च्छेदायाव भवितव्या

2 A मित्रं द्वितीयः

3 $C_2$ निर्बोध्यङ्ग

4 $C_2$ महासत्त्व

5 वि० = विद्यते नोपलभ्यते

6 $C_2$ निर्मितपदं

इत्युष्मगताधारः[1] ॥ त०[2] भूतकोट्याः पदं etc.[3] । त० तथतायाः पदं etc. । एवमवितथताया अनन्यतथताया धर्मताया[4] धर्मधातो[5]र्धर्मस्थितिताया धर्मनियामतायाः सत्यतायाः पदं etc. ॥ इतिमूर्धगताधारः[6] ॥

त० मायापुरुषस्य रूपस्य पदं न वि०[7] । एवमेव सुभूते बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न वि० । एवं वेदना संज्ञा संस्काराः । त० मायापुरुषस्य विज्ञानस्य पदं न वि० । एवमेव etc.[8] And so on with इन्द्रियs; आयतनs and विज्ञानs up to नोपलभ्यते ॥ इति क्षान्तिगताधारः ॥

त० मायापुरुषस्य अध्यात्मशून्यतायां चरतो बोधिसत्त्वपदार्थो न वि० । एवमेव etc. And so on with बहिर्धाशून्यता । अध्यात्मबहिर्धाशून्यतायां चरतो बोधिसत्त्वपदार्थो न वि० । एवमेव etc. । यावद् विस्तरेण । त० मायापुरुषस्य अभावस्वभावशून्यतायां चरतो etc. as before. त० मायापुरुषस्य पारमितासु स्मृत्युपस्थान yāvat बुद्धधर्मेषु स्कन्धेषु धातुषु आयतनेषु प्रतीत्यसमुत्पादेषु ध्यानारूप्यसमापत्त्यभिज्ञासु चरतो बोधिसत्त्वपदार्थो न वि० । एवमेव etc. ॥ [9]इत्यग्रधर्मगताधारः ॥

त० तथागतस्यार्हतः सम्यक्संबुद्धस्य रूपपदार्थो न वि० । एवमेव etc. The previous lines are repeated, replacing रूप by one of the

---

1 Mss. ध्यान

2 त० = तद् यथापि नाम सुभूते

3 पदं etc. = पदं न विद्यते नोपलभ्यते । एवमेव बोधिसत्त्वस्य पदार्थो न विद्यते नोपलभ्यते ।

4 A & $C_2$ drop it.

5 $C_1$ ०धातुःधर्म०

6 A ०धान:

7 वि० = विद्यते नोपलभ्यते ।

8 एवमेव etc. = एवमेव सुभूते बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो बोधिसत्त्वपदार्थो न विद्यते नोपलभ्यते ।

9 $C_2$ इत्यंग

remaining स्कन्धs and धातुs। त० तथागतस्यार्हतः सम्यक्संबुद्धस्य अध्यात्मशून्यतायां यावदभावस्वभावशून्यतायां चरतो बोधिसत्त्वपदार्थो न वि०। एवमेव etc.। त० तथागतस्यार्हतः सम्यक्संबुद्धस्य सर्वबोधिपक्षधर्मबलवैशारद्यावेणिकबुद्धधर्मे चरतो बोधिसत्त्वपदार्थो न वि०। एवमेव etc.। त०[1] असंस्कृतधातौ संस्कृतधातुपदं न वि०। संस्कृतधातौ असंस्कृतधातुपदं न वि०। एवमेव etc.॥ इति दर्शनमार्गाधारः॥

त० अनुत्पादपदार्थो न वि०। एवमेव etc.। त० अनिरोधानभिसंस्काराप्रादुर्भावानुपलम्भासंक्लेशपदार्थो न वि०। एवमेव etc.। त० अव्यवदानपदार्थो[2] न वि०। एवमेव etc.। तत् कस्य हेतोः। रूपस्य सुभूते उत्पादपदार्थो न वि० and so also of the other स्कन्धs। तत् कस्य हेतोः। रूपस्य सुभूते निरोधाभिसंस्कारप्रादुर्भावोपलम्भसंक्लेशप०[3] । and so also of the other स्कन्धs। [ तत् कस्य हेतोः। रूपस्य सुभूते अव्यवदानप० ][4]। and so also of the other स्कन्धs। त० व्यस्तसमस्तानां स्कन्धानां धातूनामायतनानां प्रतीत्यसमुत्पादस्य उत्पादप०। यावत् स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु व्यवदानप०। एवं सप्तत्रिंशद्बोधिपक्षधर्माप्रमाणध्यानारूप्यसमापत्त्यभिज्ञाप्रतिसंविद्दशबलवैशारद्यावेणिकबुद्धधर्माणामुत्पादप०। एवं यावद् व्यवदानप०। एवमेव etc.। त० आवेणिकानां बुद्धधर्माणां यावत् संक्लेशव्यवदानप०। एवमेव etc.।

त० रूपस्यात्यन्तविविक्तत्वान्निमित्तपदं न वि०[5]। एवमेव etc. and

---

1 $C_2$ adds here असंस्कृतधातुपदं न विद्यते नोपलभ्यते। असंस्कृतधातौ असंस्कृतपदं न विद्यते नोपलभ्यते एवमेव।

2 $C_1$ drops a line here.

3 प० = पदार्थो न विद्यते नोपलभ्यते।

4 The portion within brackets [ ] is dropped in all the mss. A & $C_1$ omit some of the repetitions.

5 वि० = विद्यते नोपलभ्यते।

so also of the other स्कन्धः। त० व्यस्तसमस्तानां[1] स्कन्धधात्वायतनप्रतीत्यसमुत्पादानामत्यन्तविविक्तत्वान्निमित्तपदं न वि०। एवमेव etc.।

त० स्मृत्युपस्थानानामत्यन्तविशुद्धत्वान्निमित्तपदं न वि०। एवमेव etc.। एवं सम्यक्प्रहाण yāvat बुद्धधर्माणामत्यन्तविशुद्धत्वान्निमित्तपदं न वि०। एवमेव etc.। त० आत्मसत्त्वजीव yāvat पश्यकानां विशुद्धौ पदं न वि० आत्मसत्त्वजीव yāvat पश्यकासत्तामुपादाय[3]। एवमेव etc. ॥ इति भावनामार्गाधारः ॥

त० आदित्यस्योदागच्छतः प्रभायाः[4] पदं न वि०। एवमेव etc. ॥ इति प्रतिपक्षाधारः ॥

त० कल्पोद्दाहे वर्तमाने सर्वसंस्कारे पदं न वि०। एवमेव etc. ॥ इति विपक्षप्रहाणाधारः ॥[5]

त० तथागतस्यार्हतः सम्यक्संबुद्धस्य शीले दौःशील्यपदं न वि०। एवमेव etc.। त० तथागतस्यार्हतः सम्यक्संबुद्धस्य समाधौ विक्षेपपदं न वि०। तथागतप्रज्ञायां दौष्प्रज्ञपदं[6] न वि०। तथागतविमुक्तावविमुक्तिपदं न वि०। एवमेव etc.। त० तथागतस्यार्हतः सम्यक्संबुद्धस्य विमुक्तिज्ञानदर्शनपदं न वि०। एवमेव etc. ॥ इति प्रतिपक्षविपक्षविकल्पप्रहाणाधारः[7] ॥

त० सूर्याचन्द्रमसोः प्रभायाः पदं न वि०। एवमेव etc. ॥ इति प्रज्ञाकल्पाधारः ॥[8]

---

1 A & $C_2$ समस्तेषु......०पादेषु। A however repeats it thus : व्यस्तसमस्तानामत्यन्त०।

2 A drops line 3.

3 $C_2$ omits सत्ता

4 $C_2$ drops l. 8.

5 A & $C_2$ ०प्रभाणाधारः

6 $C_2$ प्रज्ञादौःप्रज्ञ

7 A & $C_2$ ०प्रभाणाधारः।

8 $C_1$ drops few lines here.

त० श्रावकप्रत्येकबुद्धग्रहनक्षत्रमणिरत्नज्योतिषां प्रभायाः पदं न वि०। एवमेव etc. ॥ इत्यसाधारणगुणाधारः[1] ॥

त० चातुर्महाराजकायिकानां देवानां yāvat (for full list see p. 55) महाब्रह्मणां देवानां यावदकनिष्ठानां देवानां प्रभायाः पदं न वि०। एवमेव etc. ॥ इति परार्थानुक्रमाधारः[2] ।

त० तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रभायाः पदं न वि०। एवमेव etc.। तत् कस्य हेतोः। तथाहि सुभूते यया बोध्या बोधिसत्त्वपदार्थः[3] यश्च बोधिसत्त्वपदार्थः सर्व एते[4] धर्मा न संयुक्ता न विसंयुक्ता अरूपिणोऽनिदर्शना अप्रतिघा[5] एकलक्षणा यदुतालक्षणाः। सर्वधर्माणां हि सुभूते बो० महासत्त्वेन[6] असक्ततायामसक्ततायां शिक्षितव्यम्[7]। अकल्पनतामकल्पनतां चोपादाय सर्वधर्माश्च सुभूते बो० महासत्त्वेनावबोद्धव्याः ॥ इत्यनाभासे[8] प्रवृत्तज्ञानाधारः ॥ इत्युक्तः प्रतिपत्त्याधारः ॥

सुभूतिराह। कतमे भगवन् सर्वधर्माः। कथं भगवन् बो० महासत्त्वेन सर्वधर्माणामसक्ततायां[9] शिक्षितव्यम्। कथं भगवन् बो० महासत्त्वेन सर्वधर्मा अवबोद्धव्याः। भगवानाह। सर्वधर्मा उच्यन्ते कुशलाश्चाकुशलाश्च व्याकृताश्चाव्याकृताश्च लौकिकाश्च लोकोत्तराश्च सास्रवाश्चानास्रवाश्च[10] संस्कृताश्चासंस्कृताश्च साधारणाश्चासाधारणाश्च। इम उच्यन्ते सुभूते सर्वधर्मा यत्र बो० महासत्त्वेना-

---

1 $C_2$ इत्युशाह्रारण०। 2 $C_1$ क्रमोधार: ; $C_2$ ०नुकमंधार:

3 A बोध्या बोधिसत्त्वो यश्च बोधिसत्त्वपदार्थ: cf. Ś. 1257 : या च बोधिर्यश्च बोधिसत्त्वो यश्च बोधिसत्वपदार्थ: सर्वैव ते धर्म्मा:।

4 A एव 5 ०तिमा ; $C_2$ ०घात ; Ś. 1257 : ०घात्वलक्षण:

6 $C_2$ सत्त्वे नायकग्रक्तताया 7 A शिक्षितव्यं

8 A ०भाशे ; $C_1$ ०भाप्रवृत्त ; $C_2$ ०भोगे 9 $C_2$ सभूतायां

10 $C_1$ & $C_2$ drop it.

सन्नततायां शिक्षितव्यम् । इमे सुभूते बो० महासत्त्वेन सर्वधर्मा अवबोद्धव्याः ॥ इत्यालम्बनस्वरूपम् ॥

सुभूतिराह । कतमे भगवन् कुशला लौकिका धर्माः । भगवानाह । कुशला लौकिका धर्मा उच्यन्ते, मात्रेयता पित्रेयता श्रामण्यता ब्राह्मण्यता कुले ज्येष्ठापचायिता । दानमयं पुण्यक्रियावस्तु शीलमयं पु०[1] । भावनामयं पु० । वैयावृत्यसहगतमुपायकौशलम् । दशकुशलाः कर्मपथाः[2] । लौकिका[3] नवसंज्ञा । आध्मातकसंज्ञा[4] विपदुमकसंज्ञा[5] yāvat (as in p. 19-20) विदग्धकसंज्ञा[6] । लौकिकानि चत्वारि ध्यानानि[7] चत्वार्यप्रमाणानि[8] चतस्र आरूप्यसमापत्तयः । लौकिक्यः[9] पञ्चाभिज्ञाः लौकिक्यो[10] दशानुस्मृतयः । यदुत बुद्धानुस्मृतिः धर्मानुस्मृतिः yāvat (as in p. 20) उद्वेगानुस्मृतिः कायगतानुस्मृतिः[11] ॥ इम[12] उच्यन्ते कुशला लौकिका धर्माः ॥

सुभूतिराह । कतमे भगवन् लौकिका अकुशला धर्माः । भगवानाह । प्राणातिपातोऽदत्तादानं काममिथ्याचारो मृषावादः पैशुन्यं पारुष्यं सम्भिन्नप्रलापोऽभिध्या व्यापादो[13] मिथ्यादर्शनं दश अकुशलकर्मपथाः [14]क्रोधोपनाहौ म्रक्षः[15] प्रदाशो[16] विहिंसा ईर्ष्या मात्सर्यं मानो मिथ्यामानः ॥ इम उच्यन्ते लौकिका अकुशला धर्माः ॥

---

1 पु=पुण्यक्रियावस्तु

2 $C_2$ ०पथान्

3 $C_1$ लौकिक्यो ; $C_2$ लौकिष्ठा

4 Mss. भ्मातक

5 $C_2$ विपदुमक ; A बिपट्मक see supra p. 19 fn.

6 भस्थिसंज्ञा precedes it cf. p. 20.

7 $C_1$ drops it.

8 $C_2$ drops it.

9 A लौकिक्या:

10 $C_2$ लौकिका:

11 Not to be found in the list at p. 20.

12 $C_2$ इमं

13 A व्यापादा

14 $C_2$ कोधो

15 $C_1$ मच:

16 $C_2$ प्रदाषे

सुभूतिराह। कतमे भगवन् अव्याकृता धर्माः। भगवानाह। अव्याकृतं कायकर्म। अ०[1] वाक्कर्म। अ० मनःकर्म। अ० चत्वारि महाभूतानि। अ० पञ्चेन्द्रियानि। अ० षडायतनानि। अ० अरूप्याणि स्कन्धधात्वायतनानि। अ० विपाकाः॥ सर्व इम उच्यन्ते अव्याकृता धर्माः।

सुभूतिराह। कतमे भगवन् लौकिकाः कुशला धर्माः। भगवानाह। पञ्च स्कन्धा द्वादशायतनानि अष्टादश धातवो दश कुशलाः कर्मपथाश्चत्वारि ध्यानानि चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तयः पञ्चाभिज्ञाः ये चान्ये लौकिका धर्माः॥ इम उच्यन्ते लौकिकाः कुशलधर्माः॥

सुभूतिराह। कतमे भगवन् लोकोत्तराः कुशला धर्माः। भगवानाह। चत्वारि स्मृत्युपस्थानानि चत्वारि सम्यक्प्रहाणानि चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि पञ्चबलानि सप्तबोध्यङ्गानि आर्याष्टाङ्गो मार्गः। शून्यताविमोक्षमुखमनिमित्तविमोक्षमुखमप्रणिहितविमोक्षमुखं अनाज्ञातमाज्ञास्यामीन्द्रियमाज्ञेन्द्रियमाज्ञातावीन्द्रियम्। सवितर्कः सविचारः समाधिः। अवितर्कोऽविचारः समाधिः। विद्या विमुक्तिः स्मृतिः सम्प्रजन्यं[2] योनिशो मनस्कारः। अष्टौ विमोक्षाः—कतमे अष्टौ—रूपी रूपाणि पश्यति। अयं प्रथमो विमोक्षः। अध्यात्ममरूपसंज्ञी[3] बहिर्धारूपाणि पश्यति। अयं द्वितीयो विमोक्षः। शून्यतायामधिमुक्तो भवति[4]। अयं तृतीयो विमोक्षः। सर्वशो रूपसंज्ञानां समतिक्रमात्[5] प्रतिघसंज्ञानामस्तङ्गमात् नानात्वसंज्ञानाममनसिकारादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसंपद्य विहरति। अयं चतुर्थो विमोक्षः। सर्वश आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसंपद्य विहरति। अयं पञ्चमो विमोक्षः। सर्वशो विज्ञानानन्त्यायतनसमतिक्रमात् नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसंपद्य विहरति। अयं षष्ठो विमोक्षः। सर्वश आकिञ्चन्यायतनसमतिक्रमात् नैव

---

1 अ० = अव्याकृतं or अव्याकृतानि

2 $C_1$ ०जन्ो

3 A ०रूपं

4 Cf. Mvyut 70. शुभं विमोक्षकायेन साक्षात्कृत्वोपसंपद्य विहरत्ययं तृतीयो विमोक्षः।

5 $C_1$ समतिक मात्मतिक०।

संज्ञानासंज्ञायतनमुपसंपद्य विहरति। अयं सप्तमो विमोक्षः। सर्वशो नैव संज्ञानासंज्ञायतनसमतिक्रमात् संज्ञावेदयितनिरोधमुपसंपद्य विहरति। अयम् अष्टमो विमोक्षः। इम अष्टौ विमोक्षाः[1]। नवानुपूर्वविहारसमापत्तयः। चत्वारि ध्यानानि—विविक्तं[2] कामैर्विविक्तं[3] पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमु[4]। वितर्कविचाराणां व्युपशमादध्यात्मं सम्प्रसादाच्चेतस[5] [6]एकोतीभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमु०। प्रीतेर्विरागादुपेक्षकश्च विहरति स्मृतिमान् संप्रजानन्[7] सुखञ्च कायेन प्रतिसंवेदयति[8] यत्तदार्या आचक्षते उपेक्षकः स्मृतिमांश्च सुखविहारीति तृतीयं ध्यानमु०। सुखस्य च प्रहाणाद् दुःखस्य च प्रहाणात्[9] पूर्वमेव सौमनस्यदौर्मनस्ययोरस्तङ्गमाददुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमु०। स सर्वशो रूपसंज्ञानां[10] समतिक्रमात् [11]प्रतिघसंज्ञानामस्तङ्गमात् नानात्वसंज्ञानाममनसिकारादनन्तमाकाशमिति[12] आकाशानन्त्यायतनमु०। स सर्वश आकाशानन्त्यायतनसमतिक्रमादनन्तं विज्ञानमिति विज्ञानानन्त्यायतनमु०। स सर्वशो विज्ञानानन्त्यायतनसमतिक्रमान्नास्ति किञ्चिदित्याकिञ्चन्यायतनमु०। स सर्वश आकिञ्चन्यायतनसमतिक्रमान्नैव[12]संज्ञानासंज्ञायतनमु०। स सर्वशो नैवसंज्ञानासंज्ञायतनसमतिक्रमात्[13] सज्ञावेदयित निरोधमु०। एता नवानुपूर्वविहारसमापत्तयः। अध्यात्मशून्यता बहिर्धाशून्यता अध्यात्मबहिर्धाशून्यता यावदभावस्वभावशून्यता। दशबलानि चत्वारि

---

1 The list of Mvyut. 70 differs from this. Some of the विमोक्षs are included in the list of समापत्तिs.

2 A & $C_2$ omit.

3 Mss. विविक्त'

4 मु० = मुपसंपद्य विहरति

5 $C_1$ ०सादाचेतस

6 $C_2$ एकोदि ; pāli एकोतीभाव

7 $C_1$ ०ज्ञामसुखञ्च ; A ज्ञामं

8 A वेदयते ; $C_2$ वेदयेत्

9 $C_1$ प्रहाणा

10 $C_1$ संज्ञामी

11 $C_1$ प्रतीघ

12 A omits ०मिति

वैशारद्यानि चतस्रः प्रतिसंविदः। अष्टादशावेणिका बुद्धधर्माः॥ इम उच्यन्ते लोकोत्तराः कुशलधर्माः॥

सुभूतिराह। कतमे भगवन् सास्रवा धर्माः। भगवानाह। पञ्चस्कन्धा द्वादशायतनानि अष्टादश धातवश्चत्वारि ध्यानानि चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तयः। इम उच्यन्ते सास्रवा धर्माः॥

सुभूतिराह। कतमे भगवन् अनास्रवा धर्माः। भगवानाह। चत्वारि स्मृत्युपस्थानानि चत्वारि सम्यक्प्रहाणानि चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि पञ्चबलानि सप्त बोध्यङ्गानि आर्याष्टाङ्गमार्गः दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदो यावदष्टादशावेणिका बुद्धधर्माः। इम उच्यन्ते अनास्रवा धर्माः॥

सुभूतिराह। कतमे भगवन् संस्कृता धर्माः। भगवानाह। कामधातू रूपधातुरारूप्यधातुर्येऽप्यन्ये केचित् त्रैधातुकपर्यापन्ना धर्माः। सप्तत्रिंशद् बोधिपक्षादयो धर्माः। इम उच्यन्ते संस्कृता धर्माः॥

सुभूतिराह। कतमे भगवन्नसंस्कृता धर्माः। भगवानाह। येषां धर्माणामनोत्पादो न निरोधो नान्यथात्वं प्रज्ञायते रागक्षयो[1] दोषक्षयो मोहक्षयश्च[2]। तथता अवितथता अनन्यतथता धर्मता धर्मधातुर्धर्मस्थितिता धर्मनियामता भूतकोटिः। इम उच्यन्ते असंस्कृता धर्माः॥

सुभूतिराह। कतमे भगवन् साधारणा धर्माः। भगवानाह। चत्वारि ध्यानानि चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तयः पञ्चाभिज्ञाः॥ इम उच्यन्ते साधारणा धर्माः॥

सुभूतिराह। कतमे भगवन्नसाधारणा धर्माः। भगवानाह। सप्तत्रिंशद् बोधिपक्षधर्मा दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदः त्रीणि विमोक्षमुखानि अष्टादशावेणिका बुद्धधर्माः॥ इम उच्यन्ते असाधारणा धर्माः॥

---

1 $C_1$ रागदोषक्षयो ; $C_2$ omits दोषक्षयो    2 Mss. omit च

तत्र[1] बो० महासत्त्वेन स्वलक्षणशून्येषु धर्मेषु न सक्तिः[2] कार्या अद्वययोगेन च सर्वधर्मा अवबोद्धव्याः। अवकल्पनतामनवकल्पनतां चोपादाय। इत्युक्तं प्रतिपत्त्यालम्बनम्।

सुभूतिराह। यदुच्यते भगवन् बोधिसत्त्वो महासत्त्व इति। केन कारणेन भगवन् बो० महासत्त्व इत्युच्यते। भगवानाह। इह सुभूते महतः सत्त्वराशेर्महतः सत्त्वनिकायस्याग्रतां कारयिष्यति। तेन[3] कारणेन सुभूते बो० महासत्त्व इत्युच्यते।

सुभूतिराह। कतमो भगवन् महासत्त्वराशिर्महासत्त्वनिकायः यस्य[4] बो० महासत्त्वोऽग्रतां कारयिष्यति। भगवानाह। महासत्त्वराशि-र्महासत्त्वनिकाय इति सुभूते उच्यते यदुत गोत्रभूमिरष्टमकभूमिः[5] स्रोतआपन्नः सकृदागामी अनागामी अर्हत् प्रत्येकबुद्धः प्रथमचित्तोत्पादमुपादाय यावदविनिवर्तनीय इति। अयं महान् सत्त्वराशिः[6] महासत्त्वनिकायः। अस्य बो० महासत्त्वोऽग्रतां कारयिष्यति। अत्र सुभूते बो० महासत्त्वेन वज्रोपमं[7] चित्तमुत्पाद्य महतः सत्त्वराशेर्महतः सत्त्वनिकायस्याग्रताः कारयितव्याः।

सुभूतिराह। कतमो भगवन् वज्रोपमश्चित्तोत्पादः। भगवानाह इह सुभूते बो० महासत्त्व एवं चित्तमुत्पादयति। अपरिमिते मया संसारे सन्नाहं सन्नह्य[8] [9]सर्वसत्त्वापरित्यागिना[10] भवितव्यम्। सर्वसत्त्वानामन्तिके मया समचित्तता[11] उत्पादयितव्या। सर्वसत्त्वा मया त्रिभिर्यानैः परिनिर्वापयितव्याः।

---

1 For the correlative of तत्र, see p. 164; i. e. this is to go after इत्यालम्बनस्वरूपम् in p. 164.

2 $C_2$ शक्तिः  3 A केन

4 $C_1$ यस्य  5 $C_2$ drops रष्टमकभूमिः

6 $C_1$ drops it.  7 Mss. वज्रोपमं

8 $C_1$ सन्नज्ञ

9 A सर्वस्व ; $C_2$ सर्वशो ; $C_1$ सर्वसत्त्

10 $C_1$ त्यागमा ; $C_2$ त्यागिमा  11 $C_1$ समचित्ता

सर्वसत्त्वानपि मया परिनिर्वाप्य न कश्चित् सत्त्वः परिनिर्वापितो भवति। तत् कस्य हेतोः। अनुत्पादो मया सर्वधर्माणामवबोद्धव्यः। अव्यवकीर्णेन मया सर्वाकारज्ञताचित्तेन षट्सु पारमितासु चरितव्यम्। सर्वत्रानुगतायां सर्वधर्मप्रतिवेधपरिनिष्पत्त्यां[1] मया शिक्षितव्यम्। एकतयाभिनिर्हारो मया सवधर्माणां प्रतिबोद्धव्यः यावत् पारमिताभिनिर्हारप्र०[2] सप्तत्रिंशद् बोधिपक्षधर्माभिनिर्हारप्र०। अप्रमाणध्यानारूप्याभिज्ञाज्ञानाभिनिर्हारप्र०। दशबलवैशारद्यावेणिकबुद्धधर्माभिनिर्हारप्र०। अयं सुभूते बो० महासत्त्वस्य वज्रोपमश्चित्तोत्पादः। यत्र प्रतिष्ठितो बो० महासत्त्वो महतः सत्त्वराशेर्महतः सत्त्वनिकायस्याग्रतां कारयिष्यति। तच्चानुपलम्भयोगेन।

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्व एवं चित्तमुत्पादयति। यावन्तः सत्त्वा नैरयिका वा तैर्यग्योनिका वा यमलौकिका वा दुःखां वेदनां वेदयन्ति तां दुःखां[3] वेदनां वेदयेयं[4]। तत्र बो० महासत्त्वेन एवं चित्तमुत्पादयितव्यम्। एकैकस्याप्यहं सत्त्वस्यार्थाय कल्पकोटीनियुतशतसहस्राणि नैरयिकं वा तैर्यग्योनिकं वा यमलौकिकं वा दुःखमनुभवेयं यावन्न ते सत्त्वा निरुपधिशेषनिर्वाणधातौ परिनिर्वृता भवेयुरिति। एतेनोपायेन सर्वसत्त्वानां कृतशस्तन्नैरयिकादिकं दुःखमनुभवेयं यावन्न ते सत्त्वा as before l. 15 up to ०रिति। पश्चादहमात्मनः [5]कृतकुशलमवरोप्य कल्पकोटीनियुतशतसहस्रैरनुत्तरां सम्यक्संबोधिमभिसंबुद्धेयं[6]। अयं सुभूते बो० महासत्त्वस्य वज्रोपमश्चित्तोत्पादः as before ll. 8-9 up to ०रिति।

पुनरपरं सुभूते बो० महासत्त्वेन उदारचित्तेन भवितव्यं येन चित्तेन सर्वसत्त्वानामग्रता कारयितव्या। तत्रेयं बो० महासत्त्वस्योदारचित्तता यत् प्रथमचित्तोत्पादमुपादाय न रागचित्तमुत्पादयति। न दोषचि०[7]। न मोहचि०। न विहिंसाचि०। न श्रावकचि०। न प्रत्येकबुद्धचि०। इयं सुभूते बो०

---

1 $C_1$ drops अनुस्वार

2 प्र० = प्रतिवेधाय मया सर्वधर्माणां शिक्षितव्यम्।

3 $C_1$ drops it. 4 $C_2$ वेदयत 5 Mss. कृते

6 A बुद्धयं ; $C_2$ बुद्धायं 7 चि० = चित्तमुत्पादयति।

महासत्त्वस्योदारचित्तता यया सर्वसत्त्वानामग्रतां कारयिस्यति। तेन च चित्तेन न मन्यते।

पु० सु०[1] बो० महासत्त्वेन अकम्प्यचित्तेन भवितव्यम्। तत्रेयं बो० महासत्त्वस्याकम्प्यचित्तता यत् सर्वाकारज्ञताप्रतिसंयुक्तमपि मनसिकारन्न मन्यते। इयं सुभूते बो० महासत्त्वस्याकम्प्यचित्तता।

पु० सु० बो० महासत्त्वेन सर्वसत्त्वानामन्तिके[2] हितसुखचित्तेन भवितव्यम्। तत्रेयं बो० महासत्त्वस्य हितसुखचित्तता या[3] सर्वसत्त्वानां परित्राणना यः सर्वसत्त्वानामपरित्यागः तेन च न मन्यते। इयं सुभूते बो० महासत्त्वस्य हितसुखचित्तता। एवं हि सुभूते बो० महासत्त्वः प्रज्ञापारमितायां चरन् सर्वसत्त्वानामग्रतां कारयिष्यति।

पु० सु० बो० महासत्त्वेन धर्मरागेण भवितव्यम्। धर्मरतेन धर्मारामता-[4]योगमनुयुक्तेन भवितव्यम्। तत्र कतमो धर्मो[5] यदुत सर्वधर्माणामसम्भेदः[6] अयमुच्यते धर्मः। तत्र कतमो धर्मरतिर्या धर्मेऽभिरति[7]रियमुच्यते धर्मरतिः। तत्र कतमा धर्मारामता या तस्य धर्मस्य भावना बहुलीकरणता इयमुच्यते धर्मारामता। एवं हि सुभूते बो० महासत्त्वेन प्रज्ञापारमितायां चरता महतः as before p. 170, l. 8 up to कारयितव्या अनुपलम्भयोगेन। पुनरपरं सुभूते बो० महासत्त्वेन प्र०[8] अध्यात्मशून्यतायां स्थित्वा बहिर्धाशून्यतायां स्थित्वा अध्यात्मबहिर्धाशून्यतायां स्थित्वा यावदभावस्वभावशून्यतायां स्थित्वा महतः as before l. 16 up to ०योगेन। पु० सु० बो० महासत्त्वेन प्र० सप्तत्रिंशद्-बोधिपक्षेषु धर्मेषु स्थित्वा बलेषु वैशारद्येषु प्रतिसंवित्स्वष्टादशावेणिकेषु बुद्धधर्मेषु स्थित्वा महतः as before l. 16 up to ०योगेन। पु० सु० बो०

---

1 पु० सु० = पुनरपरं सुभूते

2 A ०न्तिक

3 A drops it.

4 $C_2$ योगे०

5 $C_1$ धर्मा

6 $C_2$ ०मयं भेदः

7 $C_2$ धर्माभिरति

8 प्र० = प्रज्ञापारमितायां चरता

महासत्त्वेन प्र० वज्रोपमसमाधौ स्थित्वा यावदाकाशासङ्गविमुक्तिनिरुपलेपसमाधौ स्थित्वा महतः as in p. 171, l. 16 up to °योगेन। एतेषु सुभूते धर्मेषु स्थित्वा बो० महासत्त्वेन प्र० महतः सत्त्वराशेर्महतः सत्त्वनिकायस्याग्रता कारयितव्या। तेनोच्यते बोधिसत्त्वो महासत्त्वः॥ इति सर्वसत्त्वाग्रताचित्तमहत्त्वम्[1]॥

अथ खल्वायुष्मान् शारिपुत्रो भगवन्तमेतदवोचत्। ममापि भगवन् प्रतिभाति येनार्थेन बो० महासत्त्व इत्युच्यते। भगवानाह। प्रतिभातु ते शारिपुत्र येनार्थेन बो० महासत्त्वः। शारिपुत्र आह। आत्मदृष्टेर्भगवन् सत्त्वदृष्टेर्जन्तुजीवपोष yāvat पश्यकदृष्टेरुच्छेददृष्टेः शाश्वतदृष्टेरस्तिदृष्टेर्नास्तिदृष्टेः स्कन्धदृष्टेर्धातुदृष्टेरायतनदृष्टेः प्रतीत्यसमुत्पाददृष्टेर्बोधिपक्षधर्मदृष्टेर्बलवैशारद्यदृष्टेरावेणिकबुद्धधर्मदृष्टेः सत्त्वपरिपाचनदृष्टेर्बुद्धक्षेत्रपरिशोधनदृष्टेर्बोधिसत्त्वदृष्टेर्बुद्धदृष्टेर्धर्मचक्रप्रवर्त्तनदृष्टेरिति। आसां सर्वासां दृष्टीनां प्रहाणाय धर्मं देशयति अनुपलम्भयोगेन। तेनार्थेन बो० महासत्त्व इत्युच्यते।

सुभूतिराह। केन कारणेनायुष्मन् शारिपुत्र बो० महासत्त्वस्य रूपदृष्टिर्भवति yāvat विज्ञानदृष्टिर्भवति। शारिपुत्र आह। इहायुष्मन् सुभूते बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् अनुपायकुशलो भवति। स रूपमुपलभ्य दृष्टिमुत्पादयति उपलम्भयोगेन। एवं विस्तरेण व्यस्तसमस्तस्कन्धधात्वायतनप्रतीत्यसमुत्पादं यावज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासामुपलभ्य दृष्टिमु०[2]। एवं स्मृत्युपस्थान yāvat अभिज्ञाऽनुत्तराप्रमाणध्यानारूप्यसमापत्तीरुपलभ्य दृष्टिमु०। एवं दशबलवैशारद्य yāv t बुद्धधर्मानुपलभ्य दृष्टिमु०॥ इति प्रहाणमहत्त्वम्॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। ममापि भगवन् प्रतिभाति येनार्थेन बो० महासत्त्व इत्युच्यते। भगवानाह। प्रतिभातु ते सुभूते। सुभूतिराह। यदपि भगवन् बोधिचित्तमसमसमचित्तमसाधारणचित्तं[3] सर्व-

1 $C_2$ चित्तसत्त्वं

2 मु० =मुत्पादयति उपलम्भयोगेन।

3 $C_1$ समरणचित्तं

श्रावकप्रत्येकबुद्धैः [1]तत्रापि चित्तेऽसक्तः। तत् कस्य हेतोः। तथाहि तत् सर्वज्ञताचित्तमनास्रवमपर्यापन्नं त्रैधातुके[2] तत्रापि चित्तेऽसक्तस्तेन बो० महासत्त्व इति संख्यां गच्छति।

शारिपुत्र आह। कतमदायुष्मन् सुभूते बो० महासत्त्वस्य असमसमचित्तमसाधारणचित्तं सर्वश्रावकप्रत्येकबुद्धैः।

सुभूतिराह। इहायुष्मन् शारिपुत्र बो० महासत्त्वः प्रथमचित्तोत्पादमुपादाय न कस्यचिद्धर्मस्य उत्पादं वा निरोधं वा समनुपश्यति। न हानिं न वृद्धिं नागतिं न गतिम्। न संक्लेशं न व्यवदानं यत्र चायुष्मन् शारिपुत्र न संक्लेशो न व्यवदानं न गतिर्नागतिर्न हानिर्न वृद्धिर्नोत्पादो न निरोधः। तच्च न श्रावकचित्तं न प्रत्येकबुद्धचित्तम्। इदं शारिपुत्र बो० महासत्त्वस्य असमसमचित्तमसाधारणचित्तं सर्वश्रावकप्रत्येकबुद्धैः॥

शा० आह। यदायुष्मन् सुभूतिरेवमाह तत्रापि श्रावकप्रत्येकबुद्धचित्तेऽसक्त इति। [4]नन्वायुष्मन् सुभूते रूपमप्यसक्तं प्रकृतिशून्यतामुपादाय yāvat विज्ञानमप्यसक्तम्।

सु० आह। एवमेतदायुष्मन् शारिपुत्र रूपमप्यसक्तं yāvat विज्ञानमप्यसक्तं यावद् व्यस्तसमस्ताः स्कन्धधात्वायतनप्रतीत्यसमुत्पादा यावज्जरामरणमप्यसक्तम्। एवमप्रमाणध्यानारूप्यसमापत्तयोऽप्यसक्ताः। यावत् सप्तत्रिंशद् बोधिपक्षा धर्मा बलानि yāvat बुद्धधर्मा अप्यसक्ताः।

शा० आह। यद्यप्यायुष्मान् सुभूतिरिदमाह। यदपि तत् सर्वज्ञताचित्तमनास्रवमपर्यापन्नमिति। [2]नन्वायुष्मन् सुभूते बालपृथग्जना-

---

1 A बुद्धः  2 ०पर्यापन्न् न त्रैधातुकः।

3 $C_1$ drops the portion within asterisks.

4 A ननु

नामपि चित्तमनास्रवमपर्यापन्नं प्रकृतिशून्यतामुपादाय। ननु सर्व-श्रावकप्रत्येकबुद्धसम्यक्संबुद्धानामपि चित्तमना०[1]।

सु० आह। एवमेतदायुष्मन् शारिपुत्र।

शा० आह। रूपमपि सुभूते अना० yāvat विज्ञानमप्यायुष्मन् सुभूते अना०। नन्वायुष्मन् सुभूते सप्तत्रिंशद् बोधिपक्षा धर्मा दश तथागतबलानि yāvat बुद्धधर्मा अना०।

सु० आह। एवमेतदायुष्मन् शारिपुत्र यथा वदसि बालपृथग्जनानामपि चित्तमना०। यावत् सर्वश्रावकप्रत्येकबुद्धसम्यक्संबुद्धानामपि चित्तमना०। यावत् सप्तत्रिंशद् बोधिपक्षा धर्मा दश तथागतबलानि yāvat बुद्धधर्मा अना०।

शा० आह। यदपि तदायुष्मान् सुभूतिरेवमाह। अचित्तत्वात् तत्रापि चित्ते असक्त[2] इति। [3]नन्वायुष्मन् सुभूते अरूपेऽपि[4] रूपमसक्तम् yāvat अविज्ञानेऽपि विज्ञानमसक्तम्।

सु० आह। एवमेतदायुष्मन् शा०।

शा० आह। नन्वायुष्मन् सुभूते अस्मृत्युपस्थानेष्वपि स्मृत्युपस्थानान्य-सक्तानि। एवं सम्यक् प्रहाणा अप्रमाणा yāvat धर्मेष्वपि आवेणिका बुद्धधर्मा असक्ताः।

सु० आह। एवमेतदायुष्मन् शारिपुत्र यथा वदसि रूपेऽप्यायुष्मन् रूपमसक्तं वेदनासंज्ञासंस्काराः विज्ञानेऽपि विज्ञानमसक्तम्। एवं व्यस्तसमस्ता अपि स्कन्धधातव आयतनानि सत्यानि प्रतीत्यसमुत्पादाऽप्रमाणध्यानारूप्य-समापत्तयः। पारमिता अभिज्ञा बोधिपक्षा धर्मा बलानि वैशारद्यानि प्रति-संविदः आवेणिकेषु बुद्धधर्मेषु आवेणिका बुद्धधर्मा असक्ताः। एवं ह्यायुष्मन् शा० बो० महासत्त्वः प्रज्ञापारमितायां चरंस्तेनापि बोधिचित्तेन असमसम-

---

1 अना० = अनास्रवमपर्यापन्नं प्रकृतिशून्यतामुपादाय।

2 $C_2$ अयक्त

3 $C_1$ & $C_2$ नला०

4 A drops here all negative prefixes अ

चित्ते[1]न सर्वश्रावकप्रत्येकबुद्धैरसाधारणचित्तेन न मन्यते नाभिनिविशते सर्वधर्मानुपलम्भयोगेन। [2]इत्यधिगममहत्त्वम्॥ इत्युक्तः प्रतिपत्त्युद्देशः॥

पूर्णो मैत्रायणीपुत्र आह। ममापि भगवन् प्रतिभाति[3] येनार्थेन बो॰ महासत्त्वः इत्युच्यते।

भगवानाह। प्रतिभातु ते पूर्ण।

पुर्ण आह। महासन्नाहसन्नद्धः स भगवन् सत्त्वो [4]महायानसंप्रस्थितः स सत्त्वो महायानसमारुढः स सत्त्वस्तेन भगवन् बो॰ महासत्त्व इत्युच्यते।

शा॰ आह। कियता आयुष्मन् पूर्ण बो॰ महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते।

पूर्ण आह। इहायुष्मन् शा॰ बो॰ महासत्त्वो न प्रादेशिकानां सत्त्वानां कृतेन बोधाय चरन् दानपारमितायां स्थित्वा दानं ददाति। अपि तु सर्वसत्त्वानां कृतेन दानपारमितायां स्थित्वा दानं ददाति। एवं शीलपा॰[5] क्षान्तिपा॰ वीर्यपा॰ ध्यानपा॰। न प्रादेशिकानां सत्त्वानां कृतेन[6] बोधाय चरन् प्रज्ञापा॰[7] स्थित्वा प्रज्ञापारमितां[8] भावयति। अपि तु सर्वसत्त्वानां कृतेन प्रज्ञापारमितां भावयति। न सत्त्वपरिच्छेदेन बो॰ महासत्त्वो महासन्नाहः सन्नह्यते[9]। इयतः सत्त्वान् परिनिर्वापयिष्यामि इयतः सत्त्वान् न परिनिर्वापयिष्यामीति इयतः सत्त्वान् बोधाय प्रतिष्ठापयिष्यामि इयतः सत्त्वान् बोधाय न प्रतिष्ठापयिष्यामीति। अपि तु खलु पुनः सर्वसत्त्वानां कृतेन सन्नाहः सन्नह्यते एवं चास्य भवति आत्मना[10] च दानपारमितां[11] परिपूरयिष्यामि सर्वसत्त्वांश्च दानपार-

---

1 $C_2$ ०नैव

2 $C_1$ इत्यभिगम०

3 $C_1$ drops it ; $C_2$ प्रतिभाषिते

4 $C_1$ ०यानं

5 पा० = पारमितायां

6 $C_2$ क्षात्येन

7 $C_1$ drops portions l. 14.

8 C ०मितायां

9 $C_1$ puts sometimes सन्नह्यते।

10 $C_1$ आत्मनो ; $C_2$ आत्मनां

11 A ०मितायां

मितायां नियोजयिष्यामीति and so on with other पारमिताs[1] । एवमप्रमाणध्यानारूप्यसमापत्तीः । आत्मना च भावयिष्यामि सर्वसत्त्वांश्च[2] तासु प्रतिष्ठापयिष्यामीति । यावत् सप्तत्रिंशद् बोधिपक्षेषु धर्मेषु दशबलवैशारद्याष्टादशावेणिकेषु बुद्धधर्मेष्वात्मना च स्थास्यामि सर्वसत्त्वांश्च तेषु प्रतिष्ठापयिष्यामीति । इयतायुष्मन् शारिपुत्र बो० महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते ॥ इति प्रतिपत्तिस्वरूपम् ॥

पुनरपरं शारिपुत्र बो० महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो दानं ददतः[3] सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः या दानस्य[4] सर्वसत्त्वसाधारणं कृत्वाऽनुत्तरायै सम्यक्संबोधये निर्यातना[5] । अयं बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो दानं ददतो दानपारमितासन्नाहः । पुनरपरं etc. as before ll. 7-8 up to ०कारैः या श्रावकप्रत्येकबुद्धमनसिकाराणां परिवर्जनता । अयं०[6] शीलपारमितासन्नाहः । पुनरपरं etc. as before ll. 7-8 up to ०कारैः या तेषां क्षमणा[7] रोचना व्युपपरीक्षणा । अयं० क्षान्तिपारमितासन्नाहः । पुनरपरं etc. as before ll. 7-8 up to ०कारैः या वीर्यस्रंसनता तत् कुशलमूलं स०[8] कृ० अ० स० परिणामयति । अयं० वीर्यपारमितासन्नाहः । पुनरपरं etc. as before ll. 7-8 up to ददतः यश्चित्तस्यैकाग्रता सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः श्रावकप्रत्येकबुद्धचित्तमनवकाशं दानता[9] तत् कुशलमूलं स० कृ० अ० स० परिणामयति । अयं दानं ददतः ध्यानपारमितासन्नाहः । पुनरपरं etc. as before ll. 7-8 up to

1 In such repetitions, the text repeats the whole sentence only with the last *i. e.* प्रज्ञापारमिता ।

2 A & $C_1$ तासु

3 $C_2$ दत्त:

4 A यावद्दानस्य $C_2$ यातदानस्य

5 $C_1$ संबोधियतियातना

6 अयं० = अयं बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो

7 A क्षेमणा

8 स० कृ० अ० स० = सर्वसत्त्वसाधारणं कृत्वा अनुत्तरायै सम्यक् संबोधये

9 A दानतो

०कारैः या मायाकृतसंज्ञोपस्थिता[1] च[2] नैव दायकमुपलभते[3] न प्रतिग्राहकं न देयम्। अयं० प्रज्ञापारमितासन्नाहः। यदायुष्मन् शा० बो० महासत्त्वः सर्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन ताः षट् पारमिता न निमित्तीकरोति नोपलभते। एवं ह्यायुष्मन् शा० बो० महासत्त्वः प्रज्ञापारमितायां चरन् महासन्नाहसन्नद्धो भवति॥ इति दानपारमितासन्नाहषट्कं[4] प्रथमम्॥

पुनरपरं शा० बो० महासत्त्वस्य शीलपारमितायां चरतो स०-कारैः[5] दानं ददाति स० कृ० अ० स०[6] परिणामयति अनुपलम्भयोगेन। इयं सुभूते बो० महासत्त्वस्य शीलपारमितायां चरतो दानपारमिता। पुनरपरं etc. as before up to कारैः या श्रावकप्रत्येकबुद्धभूम्यस्पृहणता प्रागेव पृथग्जनभूमेरियं बो० महासत्त्वस्य शीलपारमितायां चरतः शीलपारमिता. The rest are same as in p. 176, only the word दान is replaced by the word शील; the additions are अनवलीनता after वीर्यस्रंसनता (see p. 176, l. 14) and प्रत्येकबुद्धप्रतिसंयुक्तानां चित्तोत्पादानामनवकाशदानं तस्य कुतशः कुशलमूलस्य after यच्छ्रावक (see p. 176, l. 18) up to मायाकृतसंज्ञा प्रत्युपस्थिता भवति। तच्च शीलं न मन्यते नोपलभते। इयमायुष्मन् शा० बो० महासत्त्वस्य शीलपारमितायाञ्चरतः प्रज्ञापारमिता। एवं हि शा० बो० महासत्त्वः शीलपारमितायां चरन् षट् पारमिताः परिगृह्णाति। तेन महासन्नाहसन्नद्ध इति संख्यां गच्छति॥ इति शीलपारमितासन्नाहषट्कं द्वितीयम्॥

पुनरपरं शा० बो० महासत्त्वः क्षान्तिपारमितायां चरन् दानं ददाति स०-कारैर्न श्रावकप्रत्येकबुद्धप्रतिसंयुक्तैर्मनसिकारैस्तच्च कुशलमूलं स० कृ० अ० स०

1 A ०संयुक्तोपस्थिता०

2 $C_2$ & A drop it.

3 $C_1$ ०लभतो ; $C_2$ ०लभ्यते

4 $C_2$ सन्नाहकं ; $C_1$ drops a line here.

5 स०-कारैः = सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः

6 स० कृ० अ० स० = सर्वसत्त्वसाधारणं कृत्वा अनुत्तरायै सम्यक्संबोधये

परिणामयति। इयं बो० महासत्त्वस्य क्षान्तिपारमितायां चरतो दानपारमिता। एवं क्षान्तिपारमितायां चरतः शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा०। पुनरपरमायुष्मन् शारिपुत्र बो० महासत्त्वः क्षान्तिपारमितायां[1] चरन् सर्वबुद्धधर्मसमुदानयनतायै सर्वसत्त्वपरिपाकाय च प्रयुज्यते प्रज्ञया सर्वाकारज्ञता etc. as before p. 177, ll. 20 - p. 178, l. 1 up to चरतः प्रज्ञापारमिता। एवं हि शारिपुत्र बो० महासत्त्वः क्षान्तिपारमितायां चरन् षट् पारमिताः परिगृह्णाति। तेन महासन्नाहसन्नद्ध इति संख्यां गच्छति ॥ इति क्षान्तिपारमितासन्नाहषट्कं तृतीयम् ॥

पुनरपरमायुष्मन् शा० बो० महासत्त्वो वीर्यपारमितायां चरन् दानं ददाति सर्वाकारज्ञता etc. as before up to परिणामयति। इयं बो० महासत्त्वस्य वीर्यपारमितायां चरतो दानपारमिता। एवं वीर्यपारमितायां चरतः शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा०। पुनरपरं शा० बो० महासत्त्वो वीर्यपारमितायां चरन् प्रज्ञापारमितां भावयन् सर्वधर्मेषु मायाकृतसंज्ञामुपस्थापयति। सर्वाकारज्ञता etc. (see above ll. 3-6) up to संख्यां गच्छति, क्षान्ति being replaced by वीर्य ॥ इति वीर्यपारमितासन्नाहषट्कं चतुर्थम् ॥

पुनरपरमायुष्मन् शा० बो० महासत्त्वो ध्यानपारमितायां चरन् दानं ददाति सर्वाकारज्ञता etc. as before up to परिणामयति। इयं बो० महासत्त्वस्य ध्यानपारमितायां चरतो दानपारमिता। एवं ध्यानपारमितायां चरतः शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा०। पुनरपरं शा० बो० महासत्त्वो ध्यानपारमितायां चरन् प्रज्ञापारमितां भावयन्[2] सर्वधर्मेषु मायाकृतसंज्ञामुपस्थापयति। सर्वाकारज्ञता etc. as before (see above ll. 3 - 6) up to संख्यां गच्छति, क्षान्ति being replaced by ध्यान ॥ इति ध्यानपारमितासन्नाहषट्कं पञ्चमम् ॥

पुनरपरमायुष्मन् शा० बो० महासत्त्वः प्रज्ञापारमितायां चरंस्त्रिमण्डलपरिशुद्धं दानं ददाति सर्वाकारज्ञता etc. as before p. 177, l. 20 up to परिणामयति। इयं बो० महासत्त्वस्य प्रज्ञापारमितायां चरतो दानपा०। एवं प्रज्ञापारमितायां चरतः शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा०।

---

1 $C_1$ drops a line here.

2 $C_2$ भावयेत्

पुनरपरमायुष्मन् शा० बो० महासत्त्वः प्रज्ञापारमितायां चरन् प्रज्ञापारमितां भावयति। तस्य सर्वपारमितासु सर्वधर्मेषु च मायास्वप्नप्रतिभासप्रतिश्रुत्क-प्रतिबिम्बनिर्माणसंज्ञा[1] प्रत्युपस्थिता भवति सर्वाकारज्ञता etc. as before p. 177, l. 20 up to परिणामयति। एवं हि शा० बो० महासत्त्वः प्रज्ञापारमितायां चरन् प्रज्ञापारमितां परिपूरयति। यदायुष्मन् शा० बो० as before p. 177, l. 4 up to सन्नद्धो भवति। एवं च पुनरायुष्मन् शा० बो० महासत्त्वः एकैकस्यां पारमितायां स्थित्वा षट्-पारमिताः परिपूरयति॥ इति प्रज्ञापारमितासन्नाहषट्कं षष्ठम्॥

पुनरपरं शा० बो० महासत्त्वो ध्यानानि च समापद्यते नैव ध्यानान्या-स्वादयति न च तैः संह्रियते[2] न च तेषां वशेनोपपद्यते[3]। एवमप्रमाणानि चारूप्यसमापत्तीश्च समापद्यते न च ता आस्वादयति न च ताभिः संह्रियते[4] न च तासां वशेनोपपद्यते। इयं बो० महासत्त्वस्योपायकौशल्यगता प्रज्ञापारमिता वेदितव्या॥

पुनरपरं शा० बो० महासत्त्वो ध्यानारूप्यसमापत्तिषु विवेकदर्शनेन च विहरति शून्यतानिमित्ताप्रणिहितदर्शनेन च विहरति न च भूतकोटिं साक्षात्-करोति॥ अयं बो० महासत्त्वस्य प्रज्ञापारमितायां चरत उपायकौशल्यसन्नाहः॥

एवमायुष्मन् शा० बो० महासत्त्वो महासन्नाहसन्नद्धस्तेनोच्यते बो० महासत्त्व इति। एवं महासन्नाहसन्नद्धस्यायुष्मन् शारिपुत्र बो० महा-सत्त्वस्य दशसु दिक्षु बुद्धा भगवन्त उदानमुदानयन्ति वर्णमुदीरयन्ति नामधेयं परिकीर्त्यमानास्तस्य बो० महासत्त्वस्य शब्दमनुश्रावयन्ति घोष-मुदीरयन्ति। अमुष्मिन् लोकधातुप्रसरे[5] बो० महासत्त्वो महासन्नाहसन्नद्ध इति सत्त्वांश्च परिपाचयति बुद्धक्षेत्रं च परिशोधयति॥ इति सन्नाहषट्कोपसंहारः॥ इत्युक्ता सन्नाहप्रतिपत्तिः॥

---

1 $C_2$ adds प्रज्ञा

2 $C_1$ सङ्गीयते ; A संक्रियते

3 $C_1$ वशेनापपद्यते

4 $C_1$ तानि संह्रियते।

5 $C_2$ ये त्रिलोकधातुप्रसरे ; $C_1$ ०प्रसरे।

शा० आह। कियतायुष्मन् पूर्ण बो० महासत्त्वो महायानसंप्रस्थितो महायानसमारूढो भवति। पूर्ण आह। इहायुष्मन् शा० बो० महासत्त्वो दानपारमितायां चरन् विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कसविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरति। एवं द्वितीयं तृतीयं चतुर्थं ध्यानम्। एवमाकाशानन्त्यायतनं विज्ञानानन्त्यायतनमाकिञ्चन्यायतनं नैवसंज्ञानासंज्ञायतनमुपसम्पद्य विहरति। इमानि बो० महासत्त्वस्य ध्यानारूप्याणि यदा बो० महासत्त्व एतैश्च ध्यानै[1]रेतैश्चारूप्यैर्दानपारमितायां चरन् आकाशाकारलिङ्गनिमित्तैः समापद्यमानो व्युत्तिष्ठमानश्च तानि च कुशलमूलानि स०[2] कृ० अ० स० परिणामयति। इयं बो० महासत्त्वस्य दानपारमिता। एवं शीलपा०[3] क्षान्तिपा० वीर्यपा० ध्यानपा० वाच्यते[4]। पुनरपरं शा० बो० महासत्त्वः प्रज्ञापारमितायां चरंश्चत्वारि ध्यानानि समापद्यते चतस्र आरूप्यसमापत्तीः समापद्यते। यदा बो० महासत्त्व एतैश्च ध्यानैरेताभिश्चारूप्यसमापत्तिभिर्विहरति। स एता ध्यानारूप्यसमापत्तीः समापद्यमानो व्युत्तिष्ठमानश्चाकाशाकारलिङ्गनिमित्तानि मनसिकरोति। प्रज्ञापारमितायां चरंस्तानि च कुशलमूलानि अन्यानि च सर्वाकारज्ञताप्रतिसंयुक्तमनसिकारैः स० कृ० अ० स० परिणामयति। इयं बो० महासत्त्वस्य प्रज्ञापारमिता। एवं ह्यायुष्मन् शा० बो० महासत्त्वः षटपारमितासु चरन् महासन्नाहसन्नद्धः सत्त्वांश्च परिपाचयति बुद्धक्षेत्रं परिशोधयति। इति ध्यानारूप्यसमापत्तिव्युत्थानप्रस्थानम्।

पुनरपरं शा० बो० महासत्त्वो यत् [6]स०-कारमुत्पाद्य क्लेशानां ध्वंसनाय[5] सर्वसत्त्वानां धर्मं देशयिष्यामीति चित्तमुत्पादयति। इयं बो० महासत्त्वस्य दानपारमिता। यद् बो० महासत्त्वस्तैरेव स०-कारैः[6] प्रथमं ध्यानमाक्रामति देशयति तत्र च प्रथमध्याने प्रतिष्ठते न चान्येषां [7]चित्तोतुपादानामवकाशं ददाति

1 A drops it.

2 स० कृ० अ० स० = सर्वसत्त्वसाधारणानि कृत्वा अनुत्तरायै सम्यक्संबोधये

3 पा० = पारमितायां 4 A वाच्यम्

5 A क्लेशमानाय 6 स०...कारैः-सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः

7 $C_2$ चित्तोत्पादैत् ; $C_1$ चित्तोत्पादनो०

श्रावकप्रत्येकबुद्धप्रतिसंयुक्तानामियं बो० महासत्त्वस्य अपरामृष्टा शीलपारमिता। यद् बो० महासत्त्वस्य स०-कारैः ध्यानारूप्यैर्विहरत एवं भवति सर्वसत्त्वानां क्लेशक्षयाय धर्मं देशयिष्यामीति यावत् तेषां मनसिकाराणां क्षमणा रोचना व्युपपरीक्षणा अवबोध उपनिध्यापनम्[1]। इयं बो० महासत्त्वस्य क्षान्तिपा०। पुनरपरं शा० बो० महासत्त्वः स०-कारैः सर्वकुशलमूलानि स० कृ० अ० स० परिणामयति वीर्यं च न स्रंसयति[2]। इयं बो० महासत्त्वस्य वीर्यपा०। यद् बो० महासत्त्वः स०-कारैः ध्यानारूप्यसमापत्तीश्च समापद्यते न चोपलभते। इयं बो० महासत्त्वस्य ध्यानपा०। यद् बो० महासत्त्वः स०-कारैः प्रथमध्यानाङ्गानि द्वितीयानि तृतीयानि चतुर्थानि ध्यानाङ्गानि अनित्याकारेण दुःखाकारेण अनात्माकारेण शान्ताकारेण शून्याकारेण अनिमित्ताकारेण अप्रणिहिताकारेण प्रत्यवेक्षते न चोपलभते। इयं बो० महासत्त्वस्य प्रज्ञापा०। इदमायुष्मन् शारिपुत्र बो० महासत्त्वस्य महायानम्। इति षट्पारमिताप्रस्थानम्[3]।

पुनरपरमायुष्मन् शा० बो० महासत्त्वस्य महायानम्। यत् सर्वाकारं सप्तत्रिंशद् बोधिपक्षान्[4] धर्मान् भावयति। सर्वाकारं शून्यतानिमित्ताप्रणिहितविमोक्षमुखसमाधिं भावयति। सर्वाकारं बलानि वैशारद्यानि अष्टादशावेणिकान् बुद्धधर्मान् भावयति। इदमायुष्मन् शा० बो० महासत्त्वस्य महायानम्॥ इत्यार्यमार्गप्रस्थानम्॥

पुनरपरं शा० बो० महासत्त्वो मैत्रीसहगतेन चित्तेन विपुलेन [5]महोद्गतेनाद्वयेनाप्रमाणेनावैरेणासपत्नेना[6]नावरणेनाव्याबाधेन[7] सर्वत्रानुगतेन सुभाषितेन धर्मधातुपरमे लोके आकाशधातुपर्यवसाने सर्वावन्तं लोकम्[8] एकां दिशं [9]स्फुरित्वोपसम्पद्य विहरति यावद्दश दिशः स्फुरित्वोपसम्पद्य विहरति। एवं करुणा-

1 $C_2$ ०ध्यापयं न

2 A & $C_2$ संसयति

3 A & $C_2$ प्रस्थापनं

4 A ०पक्षां धर्मां

5 A & $C_2$ महङ्गतेन

6 $C_1$ ०संपन्नेना०

7 $C_1$ ०व्याबधेन

8 $C_1$ लोके

9 A & $C_2$ स्फारित्वो

सहगतेन मुदितासहगतेन उपेक्षासहगतेन चित्तेन विपुलेन etc. as before p. 181, ll. 18-21 up to विहरति। इमान्युच्यन्ते बो० महासत्त्वस्याप्रमाणानि। पुनरपरं शा० बो० महासत्त्वो मैत्रीसमाधिं समापद्यते मया [1]सर्वसत्त्वास्त्रातव्या इति निर्नामयति। करुणां च स०[2] [3]क्लीवकारुण्यताञ्च सत्त्वेषु[4] नि०[5]। मुदितां च स० अहमेव मोदयिष्यामीति सत्त्वेषु नि०। उपेक्षां च स० आस्रवक्षयं च सत्त्वेषु नि०। इयं बो० महासत्त्वस्याप्रमाणेषु चरतो दानपारमिता। यदा बो० महासत्त्वो ध्यानाप्रमाणाकारलिङ्गनिमित्तानि समापद्यते व्युत्तिष्ठते च न च श्रावकप्रत्येकबुद्धभूमौ परिणामयत्यन्यत्र सर्वाकारज्ञतायाः। इयं बो० महासत्त्वस्याप्रमाणेषु चरतोऽपरामृष्टा शीलपारमिता। यदा बो० महासत्त्वस्ताभिर्ध्यानाप्रमाणारूप्यसमापत्तिभिरव्यवकीर्णो विहरति। आभ्यां द्वाभ्यां श्रावकभूमये वा प्रत्येकबुद्धभूमये वा न स्पृहयते सर्वाकारज्ञतैवास्य क्षमते रोचते चेयं[6] etc. क्षान्तिपा०। यदा बो०[7] चित्तोत्पादैरनिक्षिप्तधुरो[8] विहरति अकुशलधर्मप्रहाणाय कुशलधर्मोपसम्पदे। इयं etc. वीर्यपा०। यदा बोधिसत्त्वो महासत्त्व एतानि च ध्यानान्येताश्चाप्रमाणारूप्यसमापत्तीश्च समापद्यते। न च ध्यानाप्रमाणारूप्यसमापत्तिवशेनोपपद्यते। न च ता आस्वादायति न च ताभिः संह्रियते। इयं etc. ध्यानपा०। यदा बो० मनसिकारैस्ता ध्यानाप्रमाणारूप्यसमापत्तीः समापद्यते च व्युत्तिष्ठते च ताश्चानित्याकारेण दुःखाकारेण अनात्माकारेण शान्ताकारेण शून्याकारेण अनिमित्ताकारेण अप्रणिहिताकारेण प्रत्यवेक्षते न च श्रावकन्यामं वा प्रत्येकबुद्धन्यामं वाभिक्रामति। इयं etc. प्रज्ञापा०। इदमायुष्मन् बो० महासत्त्वस्य महायानम्॥ इत्यप्रमाणप्रस्थानम्॥[9]

---

1 A drops सर्वं

2 स० = समाधिं समापद्यते

3 $C_2$ क्लीव

4 $C_2$ सर्वेषु

5 नि० = निर्णामयति

6 इयं etc. = इयं बो० महासत्त्वस्याप्रमाणेषु चरतः......पारमिता

7 बो० = बोधिसत्त्वो महासत्त्वो सर्वाकारज्ञताप्रतिसंयुक्तैः

8 A क्षिप्तवैरो

9 $C_1$ drops a few lines here.

पुनरपरमायुष्मन् शा० बो० महासत्त्वस्य महायानम्। यदध्यात्मशून्यतायां ज्ञानं न चोपलम्भयोगेन। यद्बहिर्धाशू०[1]। यदध्यात्मबहिर्धाशू०। यद्[2] शू०। इदं बो० महासत्त्वस्य महायानम्।

पु० शा० बो० महासत्त्वस्य महायानम्। यत् सर्वधर्मेषु न[3] विक्षिप्यते चित्तं समाहितं तज्ज्ञानम्। इदमपि बोधि०[4]। पुनरपरं शा० बोधि०। यदस्य न नित्यमिति ज्ञानं प्रवर्तते नानित्यमिति। न दुःखमिति नादुःखमिति so on positively and negatively with सुख, आत्मा, शान्त, शून्य, निमित्त, प्रणिहित up to नाप्रणिहितमिति ज्ञानं प्रवर्तते। इदमपि सुभूते बोधि०।

पु० शा० बोधि०। यदतीतेऽध्वनि ज्ञानं न प्रवर्तते। अनागतेऽध्वनि ज्ञा०[5]। प्रत्युत्पन्नेऽध्वनि ज्ञा०। न चास्य त्रिष्वध्वसु ज्ञानं प्रवर्तते। तच्चानुपलम्भयोगेन। इदमपि शा० बोधि०।

पु० शा० बोधि०। यच्च कामधातौ ज्ञानं प्रवर्तते न रूपधा०[6] नारूप्यधा०। न चास्य कामरूपारूप्यधा० तच्चानुपलम्भयोगेन। इदमपि शा० बोधि०।

पुनरपरं शा० बोधि०। यन्न लौकिकेषु लोकोत्तरेषु धर्मेषु ज्ञानं प्रवर्तते। न सास्रवेषु धर्मेषु नानास्रवेषु धर्मेषु न संस्कृतेषु नासंस्कृतेषु न चास्य लौकिकलोकोत्तरसास्रवानास्रवसंस्कृतासंस्कृतेषु धर्मेषु ज्ञानं प्रवर्तते। तच्चानुपलम्भयोगेन। इदमायुष्मन् शा० बोधि०॥ इति अनुपलम्भयोगेन प्रस्थानम्॥

शा० आह। कियतायुष्मन् पूर्ण बो० महासत्त्वो महायानसमारूढ इत्युच्यते। पूर्ण आह। इहायुष्मन् शा० बो० महासत्त्वः प्रज्ञापारमितायां चरन् दानपारमितामारोहति। स नैव दानपारमितामुपलभते न दायकं न प्रतिग्राहकं न दानमुपलभते अनुपलम्भयोगेन। एवं ह्यायुष्मन् शा० बो० महासत्त्वो दानपारमितासमारूढ इत्युच्यते। एवं शीलपा०[7], क्षान्तिपा०,

1 शू० = शून्यतायां ज्ञानं न चोपलम्भयोगेन

2 A याच; the mss. should have अभावस्वभावशू०

3 $C_2$ च

4 बोधि० = बोधिसत्त्वस्य महासत्त्वस्य महायानम्

5 ज्ञा० = ज्ञानं न प्रवर्तते

6 धा० = धातौ ज्ञानं प्रवर्तते

7 पा० = पारमितासमारूढ:

वीर्यपा०,ध्यानपा० । प्रज्ञापारमितायां चरन् प्रज्ञापारमितामारोहति, स नैव प्रज्ञापारमितामुपलभते न बोधिसत्त्वं न मनसिकारमुपलभते अनुपलम्भयोगेन । एवं ह्यायुष्मन् शा० बो० महासत्त्वः प्रज्ञापारमितासमारूढ़ इत्युच्यते ॥ इति त्रिमण्डलपरिशुद्धिप्रस्थानम् ॥

पुनरपरं शा० बो० महासत्त्वोऽव्यवकीर्णेन सर्वाकारज्ञताचित्तोत्पादेन सप्तत्रिंशद् बोधिपक्षान् धर्मान् भावयति भावनाविभावनार्थेन तच्चानुपलम्भयोगेन । एवं ह्यायुष्मन् शा० बो० महासत्त्वो महायानसमारूढ़ इत्युच्यते । पु०[1] शून्यतानिमित्ताप्रणिहितसमाधीन् भा०[2] । पु० दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदोऽष्टादशावेणिकान् बुद्धधर्मान् भा० । पुनरपरं शा० बो० महासत्त्व एवं सञ्जानाति व्यवहारमात्रमिदं यदुत बोधिसत्त्व इति सत्त्वानुपलब्धितामुपादाय । इदमपि नाममात्रं यदुत रूपं रूपानुपलब्धितामुपादाय वेदना संज्ञा संस्काराः । नाम०[3] विज्ञानं विज्ञानानु०[4] । नाम० चक्षुश्चक्षुषानु० । एवं श्रोत्रं घ्राणं जिह्वा कायः । नाम० मनो [5]मनसानु० । एवं व्यस्तसमस्ताः स्कन्धा धातवः yāvat बुद्धधर्माः । नाम० बुद्धधर्मा बुद्धधर्मानु०[6] । अध्यात्मशून्यता बहिर्धाशून्यता अध्यात्मबहिर्धाशून्यता यावदभावस्वभावशून्यता अभावस्वभावशून्यतानु० । तथता धर्मधातुश्च धर्मनियामता च भूतकोटिश्च[7] भूतकोट्यनु० । नाम० बोधिर्बुद्धश्च बुद्धानु० । एवं ह्यायुष्मन् शा० बो० महासत्त्वो महायानसमारूढ़ इत्युच्यते ॥ इत्युद्देशप्रस्थानम् ॥

पुनरपरं शा० बो० महासत्त्वः प्रथमचित्तोत्पादमुपादाय यावद्

1 पु० = पुनरपरं शारिपुत्र बोधिसत्त्वः महासत्त्वः अव्यवकीर्णेन सर्वाकारज्ञताचित्तोत्पादेन

2 भा० = भावयति भावनाविभावनार्थेन तच्चानुपलम्भयोगेन । एवं ह्यायुष्मन् शारिपुत्र बोधिसत्त्वो महासत्त्वो महायानसमारूढ इत्युच्यते ।

3 नाम० = नाममात्रं यदुत  4 नु० = नुपलब्धितामुपादाय ।

5 $C_1$ ०मनसो

6 Some confusion has been made here in the mss.

7 $C_1$ & $C_2$ drop it.

बोधिरन्तरे बो० महासत्त्वोऽभिज्ञापरिपूर्णत्वात् सत्त्वांश्च परिपाचयति बुद्धक्षेत्रेण[1] च बुद्धक्षेत्रं संक्रामति। बुद्धक्षेत्रे[2] बुद्धक्षेत्रे च बुद्धान् भगवतः सत्करोति गुरुकरोति मानयति पूजयति। यो यस्य बुद्धस्य औपयिकपूजा सत्कारविधिस्तेभ्यश्च[3] बुद्धेभ्यो भगवद्भ्यो[4] धर्मं शृणोति यदुत इदमेव महायानं। स तत्र बोधिसत्त्वयाने अभिरुह्य बुद्धक्षेत्रेण च बुद्धक्षेत्रं संक्रामति बुद्धक्षेत्रं च परिशोधयति सत्त्वांश्च परिपाचयति न चास्य बुद्धक्षेत्रसंज्ञा प्रवर्तते न सत्त्वसंज्ञा प्रवर्तते। सोऽद्वयभूमौ स्थित्वा यादृशेनात्मभावेन सत्त्वानां शक्नोत्यर्थकरणाय तादृशमात्मभावं संचिन्त्य परिगृह्णाति। स न जातु तेन महायानेन विरहितो भवति यावत् सर्वाकारज्ञतामनुप्राप्नोति॥ इति अभिज्ञाप्रस्थानम्[5]॥

सर्वाकारज्ञतामनुप्राप्य धर्मचक्रं प्रवर्तयति अप्रवर्तनीयं सर्वश्रावकप्रत्येकबुद्धैर्देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यासुरेण लोकेन[6]। तस्यानुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु बुद्धा भगवन्तो वर्णं भाषन्ते घोषमुदीरयन्ति यशः प्रकाशयन्ति। एषा अमुष्मिन् लोकधातुप्रसरेऽमुकेन बो० महासत्त्वेन महायानमभिरुह्य सर्वाकारज्ञताऽनुप्राप्ता सर्वाकारज्ञतामनुप्राप्य धर्मचक्रं प्रवर्तितम्[7]। एवं दक्षिणस्यां दिशि पश्चिमायां etc. in this way, all the दिशिs are mentioned up to ऊर्ध्वदिशि गङ्गानदी etc. as before ll. 12-15। एवं ह्यायुस्मन् शा० बो० महासत्त्वो महायानसमारूढ इत्युच्यते॥ इति सर्वाकारज्ञताप्रस्थानम्॥ इत्युच्यते प्रस्थानप्रतिपत्तिः॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। महासन्नाहसन्नद्धो महासन्नाहसन्नद्ध इति भगवन् बो० महासत्त्व इत्युच्यते। कियता भगवन् बो० महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते। भगवानाह। इह सुभूते बो० महासत्त्वो महायानं सन्नह्य यदुत दानपारमितासन्नाहं yāvat प्रज्ञापारमितासन्नाहं सन्नह्यते। स्मृत्युपस्थानसन्नाहं सन्नह्य सम्यक्प्रहाणर्द्धि-

1 $C_2$ ०क्षेत्रं न च   2 $C_2$ ०क्षेत्रेश्च
3 A & $C_2$ ०स्तस्याश्च   4 $C_1$ drop it.   5 $C_1$ अभिप्रस्थानम्
6 $C_1$ लोके   7 $C_2$ प्रवर्तते

पादेन्द्रियबलबोध्यङ्गमार्गसन्नाहं सन्नह्य and so on with the समापत्तिs, शून्यताs, वैशारद्यs, प्रतिसंवित्s, अष्टादशावेणिकबुद्धधर्मs, सर्वाकारज्ञता and बुद्धविग्रहं[1] सन्नह्य त्रिसाहस्रमहासाहस्रं लोकधातुमवभासेन स्फुरति च[2] षड्विकारं कम्पयति च सर्वस्मिन् नैरयिकभवने च तमग्निस्कन्धं निर्वाप्य नैरयिकानां सत्त्वानां दुःखानि प्रशाम्य तान् सर्वान् निर्वाणाभिमुखान् विज्ञाय बो० महासत्त्वः एवं शब्दमुदीरयति घोषमनुश्रावयति—नमस्तथागतायार्हते सम्यक् सम्बुद्धायेति। ततस्ते नैरयिकाः सत्त्वास्तं बुद्धघोषं श्रुत्वा सुखं प्रतिलभन्ते। ते तेनैव सुखसौमनस्येन तेभ्यो निरयेभ्यो व्युत्थाय तत्र लोकधातावुपपद्यन्ते यत्र बुद्धान् भगवतः पश्यन्ति आरागयन्ति देवमनुष्योपपत्तिञ्च परिगृह्णन्ति। एवं तिर्यग्योनितो यमलोकतो व्युत्थाय ते लोकधातावुपपद्यन्ते यत्र as before up to परिगृह्णन्ति। एवं पूर्वस्यां दिशि etc. (in all the ten directions) up to ऊर्ध्वदिशि गङ्गानदीवालुकोपमाँल्लोकधातूनवभासेन स्फुरति षड्विकारं etc. as before ll. 4-9 up to परिगृह्णन्ति। एवं हि सुभूते बो० महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते।

तद् यथापि नाम सुभूते दक्षो मायाकारो मायाकारान्तेवासी वा चतुर्महापथे महतो जनकायस्य पुरतो निरयांस्तिर्यग्योनियमलोकञ्च निर्मिमीते निर्माय तेषां सत्त्वानां बुद्धशब्दं धर्मशब्दं संघशब्दमनुश्रावयति। ततस्तेन बुद्धशब्देन धर्मशब्दन संघशब्देन तेभ्यो निरयतिर्यग्योनियमलोकेभ्यो व्युत्थाय देवमनुष्येषूपपद्येरन्। अपि तु सुभूते तेन मायाकारान्तेवासिना वा कश्चित् सत्त्वो निरयतिर्यग्योनियमलोकगतिभ्यो व्युत्थापितः। सुभूतिराह। नो भगवन्। भगवानाह। एवमेव सुभूते बो० महासत्त्वेन असंख्येयेष्वप्रमेयेष्वप्रमाणेषु लोकधातुषु सत्त्वांस्त्रिभ्योऽपायेभ्यः परिमोच्य न कश्चित् सत्त्वः परिमोचितो[3] भवति। तत् कस्य हेतोः। धर्मस्तेषां[4] सुभूते धर्माणां मायाधर्मतामुपादाय। एवं हि सुभूते बो० महासत्त्वो महायानसमारूढो [5]महासन्नाहसन्नद्ध इत्युच्यते॥

इति कल्याणसम्भारः॥

---

1 $C_2$ विग्रहे सन्नाहं सन्नह्य

2 $C_1$ स्फारति

3 A परिभावितो

4 $C_1$ धर्ममेषा ; A धर्मस्तेषां

5 $C_1$ & A drop महा

पुनरपरं सुभूते बो० महासत्त्वो दानपारमितायां स्थित्वा महासन्नाहसन्नद्ध-त्रिसाहस्रं महासाहस्रं लोकधातुं वैदूर्यमयं निर्मिमीते वैदूर्यमयं निर्माय चक्रवर्तिव्यूहं निर्मिमीते चक्रवर्तिव्यूहं निर्माय अन्नार्थिकेभ्योऽन्नं ददाति। एवं यावद् वस्त्रयानगन्धमाल्यपुष्पधूपविलेपनचूर्णपरिष्कारं वासशयनासन-प्रावरण-जीवितोपकरणभैषज्य-सुवर्णरूप्यमणिरत्नप्रवालशङ्खशिलामुक्ताभरणानि यावदन्यतरान्यतरं परिष्कारं ददाति। सोऽन्नमन्नार्थिकेभ्यो दत्वा यावदन्यतरान्यतरं परिष्कारं दत्वा तेषां सत्त्वानां धर्मं देशयति यदुत इममेव षट्पारमिताप्रतिसंयुक्तम्। ते खलु पुनः सत्त्वास्तां धर्मदेशनां श्रुत्वा न जातु ताभिः[1] पारमिताभिर्विरहिता भवन्ति यावदनुत्तरां सम्यक् संबोधिमभिसंबुध्यन्ते। एवं हि सुभूते बो० महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते। तद् यथापि नाम सुभूते दक्षो मायाकारो मायाकारान्तेवासी वा चतुर्महापथे स्थित्वा महतो जनकायस्य पुरतो महान्तं जनकायमभिनिर्मिमीते निर्माय अन्नमन्नार्थिकेभ्यो दद्यादन्यतरान्यतरं परिष्कारस्तदर्थिकेभ्यो दद्यात्। तत् किं मन्यसे सुभूते अपि एतेन[2] मायाकारेण मायाकारान्तेवासिना वा कस्मैचित् किञ्चिद् दत्तं भवेत्। सुभूतिराह। नो भगवन्। भगवानाह। एवमेव सुभूते बो० महासत्त्वेन यावच्चक्रवर्तिव्यूहमभिनिर्माय अन्नमन्नार्थिकेभ्यो ददता[3] यावदन्यतरान्यतरान् मानुष्यकान् परिष्कारान् ददता कस्मैचित् सत्त्वाय यावदन्यतरान्यतरा मानुष्यकाः परिष्कारा दत्त्वा भवन्ति। तत् कस्य हेतोः। धर्मतैषा सुभूते धर्माणां मायाधर्मतामुपादाय। एवं हि सुभूते बो० महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते॥ इति दानसम्भारः॥

पु० सु० बो० म० शीलपारमितायां [4]सञ्चिन्त्योपपत्तिपरिग्रहेण चक्रवर्तिकुले प्रत्याजायते[5]। स तत्र स्थित्वा सत्त्वान् दशकुशलेषु कर्मपथेषु प्रतिष्ठापयति। चतुर्षु ध्यानेषु yāvat बोधिपक्षेषु धर्मेषु प्रतिष्ठापयति। यावदष्टादशस्वावेणिकेषु बुद्धधर्मेषु प्रतिष्ठापयति। ते च सत्त्वा न जातु विरहिता भवन्ति तया

---

1 $C_1$ & A जातुनाभिः ; A जानाभिः।

2 $C_2$ नु तेन

3 $C_2$ ददतो

4 A स्थित्वोप० ; $C_1$ स्थितासञ्चित्योप० $C_2$ स्थित्वासञ्चितोप०

5 $C_2$ प्रजायते ; A प्रत्यजायत

धर्मदेशनया यावदनुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते। तद् यथापि नाम सुभूते दक्षो माया०[1] दशकुशलेषु कर्मपथेषु प्रतिष्ठापयेत्। यावदष्टादशावेणिकेषु बुद्धधर्मेषु प्रतिष्ठापयेत् तेन तावतः सत्त्वान् यावद् बुद्धधर्मेषु प्रतिष्ठाप्य न कश्चित्[2] सत्त्वो यावद्बुद्धधर्मेषु प्रतिष्ठापितो भवति। एवमेव सुभूते बो० महासत्त्वेन तांस्तावतः[3] सत्त्वान्[4] दशकुशलेषु कर्मपथेषु प्रतिष्ठाप्य यावदष्टादशस्वावेणिकेषु बुद्धधर्मेषु प्रतिष्ठाप्य न कश्चित् सत्त्वो यावद् बुद्धधर्मेषु प्रतिष्ठापितो भवति। तत् कस्य हेतोः। धर्मतैषा etc.। इति शीलसम्भारः।

पु० सु० बो० म० क्षान्तिपारमितायां स्थित्वा सत्त्वान् क्षान्तौ समादापयति निवेशयति प्रतिष्ठापयति। कथं च सुभूते बो० महासत्त्वः क्षान्तिपारमितायां स्थित्वा क्षान्तौ समा०[5]। इह सुभूते बो० महासत्त्वः प्रथमचित्तोत्पादमुपादाय एवं सन्नाहं सन्नह्यते सचेत् मम सर्वसत्त्वा दण्डलोष्टमुष्टिशस्त्रप्रहारान्[8] दद्युस्तत्र मया एकमपि क्षोभचित्तं नोत्पादयितव्यं सर्वसत्त्वाश्चैवंरूपायां क्षान्तौ प्रतिष्ठापयितव्या इति। तद् यथापि नाम सुभूते दक्षो माया० निर्मिमीते तेऽपि सर्वे तस्य मायाकारस्य दण्डैर्लोष्टैर्मुष्टिभिः शस्त्रैर्वा प्रहारं दद्युः। स च तेषु एकमपि क्षोभचित्तंनोत्पादयेत् तांश्च सत्त्वान् निर्मितानेवंरूपायां क्षान्तौ प्रतिष्ठापयेत्। तेन तावतः सत्त्वान्[9] क्षान्तौ प्रतिष्ठाप्य न कश्चित् सत्त्वः प्रतिष्ठापितो भवति। एवमेव सुभूते बो० महासत्त्वेन तांस्तावतः सत्त्वान् क्षान्तौ प्रतिष्ठाप्य न कश्चित् सत्त्वः क्षान्तौ प्रतिष्ठापितो भवति। तत् कस्य हेतोः। धर्मतैषा etc.॥ इति क्षान्तिसम्भारः॥

---

1 माया० = मायाकारो मायाकारान्तेवासी वा चतुर्महापथे महान्तं जनकायं निर्माय

2 $C_1$ कश्चि 3 $C_1$ तां यावत 4 $C_1$ सत्वा

5 समा० = समादापयति निवेशयति प्रतिष्ठापयति 6 $C_1$ सन्नह्य

7 धर्मतैषा etc. = धर्मतैषा सुभूते धर्माणां मायाधर्मतामुपादाय। एवं हि सुभूते बो महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते।

8 $C_1$ प्रा[illegible]रादुद्य 9 $C_1$ सत्वा throughout

पु० सु० बो० म० वीर्यपारमितायां स्थित्वा सर्वसत्त्वान् वीर्यपारमितायां समा[1]०। कथञ्च सु० बो० महासत्त्वो वीर्यपारमितायां स्थित्वा सर्वसत्त्वान् वीर्यपारमितायां समा०। इह सु० बो० महासत्त्वः सर्वाकारज्ञताप्रतिसंयुक्तै र्मनसिकारैः कायिकचेतसिकवीर्यप्रतिष्ठितः[2] सर्वसत्त्वान् का०[3] समा०। तद् यथापि नाम सुभूते दक्षो माया[4]० निर्माय सर्वाकारज्ञताप्रतिसंयुक्तै र्मनसिकारैः का० प्रतिष्ठापयेत्। तेन तांस्तावतः सत्त्वान् का० प्रतिष्ठाप्य न कश्चित् सत्त्वः का० प्रतिष्ठापितो भवति। एवमेव सु० बो० महासत्त्वेन तांस्तावतः सत्त्वान् का० प्रविष्ठाप्य न कश्चित् सत्त्वः का० प्रतिष्ठापितो भवति। तत् कस्य हेतोः। धर्मतैषा etc.[5] ॥ इति वीर्यसम्भारः ॥

पु० सु० बो० म० ध्यानपारमितायां स्थित्वा सर्वसत्त्वान् ध्यानपारमितायां समा०। कथं च सु० बो० महासत्त्वो ध्यानपारमितायां स्थित्वा सर्वसत्त्वान् ध्यानपारमितायां समा०। इह सु० बो० महासत्त्वः सर्वधर्माणां समतायां स्थित्वा न कस्यचिद्धर्मस्य विक्षेपं वा अविक्षेपं वा समनुपश्यति। एवं हि सु० बो० महासत्त्वो ध्यानपारमितायां स्थितो भवति। स तथैव सर्वसत्त्वान् ध्यानपारमितायां समा०। ते च समादापिता निवेशिताः प्रतिष्ठापिता भवन्ति। न जातु विरहिता भवन्ति ध्यानपारमितया यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्धा इति। तद् यथापि नाम सुभूते दक्षो माया० निर्माय जनकायं ध्यानपारमितायां प्रतिष्ठापयेत् तेन तांस्तावतः सत्त्वान् ध्यानपारमितायां प्रतिष्ठाप्य न कश्चिदेकः सत्त्वोऽपि ध्यानपारमितायां प्रतिष्ठापितो भवति। एवमेव सु० बो० महासत्त्वेन सर्वसत्त्वान् ध्यानपारमितायां प्रतिष्ठाप्य न कश्चित् सत्त्वो ध्यानपारमितायां प्रतिष्ठापितो भवति। तत् कस्य हेतोः। धर्मतैषा etc. ॥ इति ध्यानसम्भारः ॥

पु० सु० बो० म० प्रज्ञापारमितायां स्थित्वा सर्वसत्त्वान् प्रज्ञापारमितायां समा०। कथञ्च सु० बो० महासत्त्वः प्रज्ञापारमितायां स्थित्वा सर्वसत्त्वान् प्रज्ञापारमितायां समा०। यतः सु० बो० महासत्त्वः प्रज्ञापारमितायां चरन्

1 See p. 188, fn. 5.
2 $C_2$ ०चैतकसिक
3 का = कायिकचेतसिकवीर्य
4 See p. 188, fn. 1
5 See p. 188, fn. 7

न कस्यचिद्धर्मस्यापारं वा पारं वा उपलभते। एवं बो० महासत्त्वः प्रज्ञापारमितायां स्थितो भवति। स तथैव सर्वसत्त्वानपि तत्र समा०। तद् यथापि नाम सुभूते दक्षो माया० etc. as before p. 189, ll. p. 19-23 putting प्रज्ञा for ध्यान ॥ इति प्रज्ञासम्भारः ॥

---

पु० सु० बो० म० महासन्नाहसन्नद्धः पूर्वस्यां दिशि गङ्गानदीवालुकोपमेषु लोकधातुषु यावन्तः सत्त्वांस्तान् सर्वान् यथैवात्मना दानपारमितायां स्थितस्तथा दानपारमितायां समादापयति निवेशयति प्रतिष्ठापयति। एवं शीलपारमितायां yāvat प्रज्ञापारमितायां समा० धर्मञ्च देशयति। यदुत इममेव षट्पारमिताप्रतिसंयुक्तम्। ते च तं श्रुत्वा न जातु भूयो विरहिता भवन्ति षड्भिः पारमिताभिर्यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्धा इति। एवं दक्षिणस्यां पश्चिमायां and so on with the other दिशिs up to ऊर्ध्वदिशि गङ्गा etc. as before, ll. 5-10 up to संबुद्धा इति।

तद् यथापि नाम सुभूते दक्षो माया० निर्माय षट्पारमितासु समा०। तत् किं मन्यसे सुभूते अपि नु तेन मायाकारेण मायाकारान्तेवासिना वा कश्चित् सत्त्वः षट्पारमितासु समादापितो भवति निवेशितो वा प्रतिष्ठापितो वा भवति। सुभूतिराह। नो भगवन्। भगवानाह। एवमेव सुभूते बो० महासत्त्वेन तांस्तावतः सत्त्वान् षट्सु पारमितासु प्रतिष्ठाप्य न कश्चित् सत्त्वः षट्सु पारमितासु प्रतिष्ठापितो भवति। तत् कस्य हेतोः। धर्मतैषा etc.

पु० सु० बो० महासत्त्वो महासन्नाहं सन्नह्य सर्वाकारज्ञताप्रतिसंयुक्तेन चित्तेन विहरन्नान्येषां चित्तोत्पादानामवकाशं ददाति। इयन्तो मया सत्त्वा दानपारमितायां प्रतिष्ठापयितव्या इति। and so on with the other पारमिताs, बोधिपक्षधर्मs, आवेणिकबुद्धधर्मs, फलs, प्रत्येकबुद्धत्व and सर्वज्ञत्व। अपि तु खलु पुनरसंख्येयाः सत्त्वा अप्रमेयाः सत्त्वा षट्सु पारमितासु प्रतिष्ठापयितव्याः। एवं सप्तत्रिंशद् बोधिपक्षेषु धर्मेषु दशसु तथागतबलेषु चतसृषु प्रतिसंवित्सु अष्टादशस्वावेणिकेषु बुद्धधर्मेषु प्रतिष्ठापयितव्याः स्रोतआपत्तिफले सकृदागामिफले अनागामिफले अर्हत्त्वे असंख्येया अप्रमेयाः सत्त्वा बुद्धत्वे प्रतिष्ठापयितव्याः ॥ इति [2]शमथसम्भारः ॥

---

1 Mss. भवेत्

2 $C_1$ समर्थ ; $C_2$ समर्थं

तद् यथापि नाम सुभूते दक्षो माया० निर्माय तं षट्सु पारमितासु प्रतिष्ठापयेत्। यावत् सर्वाकारवरोपेते सर्वज्ञज्ञाने प्रतिष्ठापयेदेवमेव सुभूते बो० महामहासत्त्वेन तांस्तावतः सत्त्वानसंख्येयानप्रमेयान् षट्सु पारमितासु प्रतिष्ठाप्य यावत् सर्वाकारवरोपेते सर्वज्ञज्ञाने प्रतिष्ठाप्य न कश्चित् सत्त्वः षट्सु पारमितासु प्रतिष्ठापितो भवति। तत् कस्य हेतोः। धर्मतैषा सुभूते धर्माणां यदिमां मायाधर्मतामुपादाय।

सुभूतिराह। यथाहं भगवन् भगवतो भाषितस्यार्थमाजानामि तथा असन्नाहसन्नद्धो वतायं बो० महासत्त्वो वेदितव्यः स्वलक्षणशून्यतामुपादाय। तत् कस्य हेतोः। तथाहि भगवन् रूपं रूपेण शून्यं yāvat विज्ञानं विज्ञानेन शून्यं, चक्षुश्चक्षुषा शून्यम्। And so on with the other इन्द्रियs, आयतनs, विज्ञानs, संस्पर्शप्रत्ययवेदयितs, पारमिताs, शून्यताs, सप्तत्रिंशद् बोधिपक्षधर्मs, दशतथागतबलs, अष्टादशावेणिकबुद्धधर्मs and बोधिसत्त्व। महायानसन्नाहोऽपि भगवन् महायानसन्नाहेन शून्यः। अनेन भगवन् पर्यायेण असन्नाहसन्नद्धो बोधिसत्त्वो वेदितव्यः। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्। एममेतत् सुभूते यथा वदसि। तत् कस्य हेतोः। अकृताहि[1] सुभूते सर्वाकारज्ञता अविकृता[2] अनभिसंस्कृता। तेऽपि सत्त्वा अकृ०[3] येषां कृतशो बो० महासत्त्वेन महासन्नाहः सन्नद्धः।

सुभूतिराह। केन कारणेन भगवन् सर्वाकारज्ञता अकृ०।

तेऽपि सत्त्वा अकृ० येषां[4] कृतशो बो० महासत्त्वेन महासन्नाहसन्नद्धः। भगवानाह। कारकानुपलब्धितामुपादाय सुभूते सर्वाकारज्ञता अकृ०। तेऽपि सत्त्वा अकृ०। तत् कस्य हेतोः। नहि सुभूते रूपं करोति न विकरोति नाभिसंस्करोति। And so on with the इन्द्रियs, आयतनs, विज्ञानs, संस्पर्शs up to न मनःसंस्पर्शप्रत्ययवेदयितं करोति न विकरोति नाभिसंस्करोति। तत् कस्य हेतोः। तथा ह्यत्यन्ततया सर्व एते

---

1 $C_1$ अकृताभि ; $C_2$ अस्कृतादि

2 $C_2$ अकृता 3 अकृ० = कृता अविकृता अनभिसंस्कृता

4 $C_1$ एषां

न विद्यन्ते नोपलभ्यन्ते। आत्मा सुभूते न क०[1]। एवं न सत्त्वो न जीवो yāvat न पश्यकः करोति etc. as before ll. 7-8 up to नोपलभ्यन्ते। स्वप्नः सुभूते न क०। प्रतिश्रुत्कः प्रतिभासः प्रतिबिम्बं मरीचिर्न निर्माणं करोति etc. as before up to नोपलभ्यन्ते and so on with the शून्यताs[2]। सप्तत्रिंशद् बोधिपक्षा धर्मा दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदोऽष्टादशावेणिका बुद्धधर्मा। तथता yāvat सर्वाकारज्ञता सुभूते न करोति न विकरोति नाभिसंस्करोति। तत् कस्य हेतोः। तथाहि अत्यन्ततया न विद्यन्ते नोपलभ्यते[3]। अनेन सुभूते पर्यायेण सर्वाकारज्ञता अकृ०[4]। येषां कृतशो बो० महासत्त्वेन महासन्नाहसन्नद्धः। एवं हि सुभूते बो० महासत्त्वो महासन्नाहसन्नद्ध इत्युच्यते॥ इति विदर्शनासम्भारः॥

सुभूतिराह। यथाहं भगवतो भाषितस्यार्थमाजानामि। रूपं भगवन्नबद्धमुक्तं वेदनासंज्ञासंस्कारा विज्ञानं भगवन्न ब०[5]।

पूर्णो मैत्रायणीपुत्र आह। रूपमायुष्मन् सुभूते अबद्धममुक्तमिति वदसि। and so on with the other स्कन्धs।

सुभूतिराह। एवमेतदायुष्मन् पूर्ण।

पूर्ण आह। कतमत्तदायुष्मन् सुभूते रूपं यद्ब०। And so on with the other स्कन्धs।

सुभूतिराह। यदेतदायुष्मन् पूर्ण स्वप्नोपमं रूपं तद्ब०। य एते स्वप्नोपमा वेदना etc.। एवं प्रतिश्रुत्कोपमा मायोपमा मरीच्युपमा प्रतिभासोपमा यदेतदायुष्मन् पूर्ण निर्मितोपमं रूपं तद्ब०। य एते निर्मितोपमा

---

1 क=करोति न विकरोति नाभिसंस्करोति or कुर्वन्ति न विकुर्वन्ति नाभिसंस्कुर्वन्ति।

2 शून्यताs are abridged in this list thus अध्यात्मशू०, बहिर्धाशू० अध्यात्मबहिर्धाशू०

3 A drops many lines here.

4 See p. 191 f.n. 3

5 ब०=बद्धमुक्तम् or बद्धा अमुक्ताः

वेदना etc.। एवमनागतं प्रत्युत्पन्नमायुष्मन् पूर्ण रूपमब०[1]। प्रत्युत्पन्ना वेदना etc.। तत् कस्य हेतोः। असत्त्वादायुष्मन् पूर्ण रूपस्य। एवं तद्रूपमब०। असत्त्वादायुष्मन् पूर्ण वेदनायाः संज्ञायाः संस्काराणाम्। असत्त्वादायुष्मन् पूर्ण विज्ञानस्यैवं तद्विज्ञानमब०। एवं विविक्तत्वाच्छान्तत्वाच्छून्यत्वादनिमित्तत्वादप्रणिहितत्वादसंस्कृतत्वादनुत्पन्नत्वात् कुशलमकुशलं संक्लेशन्निष्क्लेशं सावद्यमनवद्यं सास्रवमनास्रवं लौकिकं लोकोत्तरं संक्लिष्टं व्यवदानमायुष्मन् पूर्ण रूपमब०। तत् कस्य हेतोः। असत्त्वाद्रूपस्यैवं तद्रूपमब०। वेदना संज्ञा संस्काराः। संक्लिष्टं व्यवदानमायुष्मन् पूर्ण विज्ञानमबं। तत् कस्य हेतोः। असत्त्वाद्विज्ञानस्य[2] एवं तद्विज्ञानमब०। सर्वधर्मा अप्यायुष्मन् पूर्ण अब०। तत् कस्य हेतोः। असत्त्वादबद्धा अमुक्ताः[3]। एवं विविक्तत्वाद् यावदनुत्पन्नत्वादबद्धा अमुक्ता। And so on सर्वधर्माः to be replaced by शून्यताs and सप्तत्रिंशद् बोधिपक्षा धर्माः। एवं दशबलानि चत्वारि वैशारद्यानि यावदष्टादशावेणिकबुद्धधर्माः, सर्वाकारज्ञता, तथता yāvat भूतकोटिः। एवं ह्यायुष्मन् पूर्ण बो० महासत्त्वोऽबद्धोऽमुक्तः। एवं षडपि पारमिता अबद्धा अमुक्ताः। यावत् सर्वाकारज्ञताप्यब०। सत्त्वानपि यान् परिनिर्वापयिष्यति ते अपि अब०। बुद्धक्षेत्राण्यपि यानि परिशोधयिष्यति तान्यप्यब०। यानपि बुद्धान् भगवतः पर्युपासिष्यते तेऽप्यब०। यमपि धर्मं[4] श्रोष्यति सोऽप्यबद्धोऽमुक्तः। बुद्धैर्भगवद्भिर्न जातु विरहितो भविष्यति अबद्धोऽमुक्तः। नाभिज्ञाभिर्विर०[5] न पञ्चभिश्चक्षुर्भिर्विर०। तथा नान्यैः समाधिभिर्विर०। अबद्धाममुक्तां मार्गाकारज्ञतामुत्पादयिष्यति। अबद्धाममुक्तां सर्वाकारज्ञतामवभोत्स्यते। अबद्धममुक्तं धर्मचक्रं प्रवर्तयिष्यति। अबद्धानमुक्तान् सत्त्वांस्त्रिभिर्यानैः परिनिर्वापयिष्यत्यबद्धोऽमुक्तः। एवं ह्यायुष्मन् पूर्ण बो० महासत्त्वः षड्भिः पारमिताभिरबद्धोऽमुक्तः सर्वधर्माननभिसंभोत्स्यते असत्त्वामुपादाय। एवं विविक्तता याव-

---

1 ब० = बद्धममुक्तं    2 $C_2$ ०रलुद्दिज्ञा०

3 A &:$C_2$ add here दानपारमितापि आयुष्मन् पूर्ण अबद्धा अमुक्ता। एवं शीलपारमिता क्षान्तिपारमिता वीर्यपारमिता ध्यानपारमिता प्रज्ञापारमिताप्यायुष्मन् अबद्धा अमुक्ताः असत्त्वादबद्धा अमुक्ताः।

4 A धर्मा    5 विर० = विरहितो भविष्यत्यबद्धोऽमुक्तः

दनुत्पन्नतामुपादाय। एवं ह्यायुष्मन् पूर्ण बो० महासत्त्वस्य अबद्धोऽमुक्तो महायानसन्नाहो वेदितव्यः॥ इति युगनद्धमार्गसम्भारः[1]।

---

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। कतमद् भगवन् बो० महासत्त्वस्य महायानम्। कथं भगवन् बो० महासत्त्वो महायानसंप्रस्थितो वेदितव्यः। कुतस्तद् यानं निर्यास्यति। क्व वा तद् यानं स्थास्यति। को वा तेन यानेन निर्यास्यति। एवमुक्ते भगवानायुष्मन्तं सुभूतिमेतदवोचत्। यत् सुभूते एवं वदसि कतमद् बो० महासत्त्वस्य महायानमिति। षट्पारमिताः सुभूते बो० महासत्त्वस्य महायानम्। कतमा षट्पारमिता। दानपा० शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा० प्रज्ञापा०।

सुभूतिराह। कतमा भगवन् बो० महासत्त्वस्य दानपा०।

भगवानाह। इह सुभूते बो० महासत्त्वः सर्वाकारज्ञताप्रतिसंयुक्तैश्चित्तोत्पादैर्दानं ददाति यदुताध्यात्मिकबाह्यानि वस्तूनि तानि च सर्वसत्त्वसाधारणानि कृत्वानुत्तरायै सम्यक्संबोधये परिणामयति। परांश्च तत्र समादापयति अनुपलम्भयोगेन। इयं सुभते बो० महासत्त्वस्य दानपा०।

सु०। क० शीलपा०।

भ०। आत्मना च दश कुशलान् कर्मपथान् समादाय वर्त्तते। परांश्च दशकुशले कर्मपथे समा०[5]। ०सत्त्वस्य अपरामृष्टा शीलपा०।

सु०। क० क्षान्तिपा०।

भ०। आत्मना च क्षान्तिसमापन्नो भवति परांश्च क्षान्तौ समा०। ०सत्त्वस्य क्षान्तिपा०।

सु०। क० वीर्यपा०।

---

1 $C_2$ युगनद्धयोग०    2 A परांश्चतत्र

3 सु०=सुभूतिराह। कतमा भगवन् बो० महासत्त्वस्य—पारमिता

4 भ०=भगवानाह। इह सुभूते बो० महासत्त्वः सर्वाकारज्ञताप्रतिसंयुक्तैश्चित्तोत्पादैः

5 समा०। ०सत्त्वस्य=समादापयति अनुपलम्भयोगेन। इयं सुभूते बो० महासत्त्वस्य।

भ० । पञ्चसु पारमितासु अनिक्षिप्तधुरो विहरति परांश्च तासु पञ्चसु पारमितासु समा० । ०सत्त्वस्य वीर्यपा० ।

सु० । क० ध्यानपा० ।

भ० । आत्मना चोपायकौशल्येन ध्यानानि समापद्यते । न च तेषां वशेनोपपद्यते परांश्च ध्यानेषु समा० । ०सत्त्वस्य ध्यानपा० ।

सु० । क० प्रज्ञापा० ।

भ० । [1]सर्वधर्मानभिनिविशते सर्वधर्माणां च प्रकृतिं प्रत्यवेक्षते[2] सर्वधर्मप्रकृति[3]प्रत्यवेक्षायां च सत्त्वांश्च समा० । ०सत्त्वस्य प्रज्ञापा० । इदं सुभूते बो० महासत्त्वस्य महायानम् ॥ इत्युपायकौशल्यसम्भारः ॥

पु० सु० बो० महासत्त्वस्य महायानं यदुत अध्यात्मशून्यता yāvat (for full list see p. 24) परभावशून्यता ।

तत्र कतमा अध्यात्मशून्यता । आध्यात्मिका[4] धर्मा उच्यन्ते चक्षुः श्रोत्रं घ्राणं जिह्वा कायो मनः । तत्र चक्षुश्चक्षुषा शून्यं अकूटस्थाविनाशितामुपादाय[5] । तत् कस्य हेतोः । प्रकृतिरस्यैषा । श्रोत्रं श्रोत्रेण शून्यं अकूटस्थाविनाशितामुपादाय । तत् कस्य हेतोः । प्रकृतिरस्यैषा, and so on with the other इन्द्रियs । इयमुच्यते अध्यात्मशून्यता ।

तत्र कतमा बहिर्धाशून्यता । ये बहिर्धा धर्मास्तद् यथा रूपशब्दगन्धरसस्प्रष्टव्यधर्माः । तत्र रूपं रूपेण शून्यमकूटस्थाविनाशितामुपादाय । तत् कस्य हेतोः । प्रकृतिरस्यैषा, and so on with the other आयतनs । इयमुच्यते बहिर्धाशून्यता ।

तत्र कतमा अध्यात्मबहिर्धाशून्यता । षडाध्यात्मिकान्यायतनानि षड्बाह्यान्यायतनानि । इयमुच्यते अध्यात्मबहिर्धाशून्यता ।

तत्र कतमा आध्यात्मिका धर्मा बहिर्धाधर्मैः शून्याश्चक्षुःश्रोत्रघ्राण-

1 $C_1$ सर्वधर्माणामभि०

2 A & $C_2$ ऽप्रत्ययवेक्षते

3 $C_1$ प्रत्यय वे०

4 $C_1$ अध्या०

5 A ०विनासिता० throughout

जिह्वाकायमनांसि आध्यात्मिकानि रूपशब्दगन्धरसस्पर्शधर्मैः शून्यानि अकू०[1]। तत्र कतमे बहिर्धा धर्मा आध्यात्मिकैः धर्मैः शून्याः। रूपशब्दगन्धरसस्पर्शधर्माश्चक्षुःश्रोत्रघ्राणजिह्वाकायमनोभिः शून्या अकू०। इयमुच्यते अध्यात्मबहिर्धाशून्यता।

त०[2] शून्यताशून्यता। या सर्वधर्माणां शून्यता तया शून्यतया शून्या अकू०। इ०[3] शून्यताशून्यता।

त० महाशून्यता। पूर्वा दिक्[4] पूर्वया दिशा शून्या एवं दक्षिणा पश्चिमा yāvat ऊर्ध्वा दिक् ऊर्ध्वया दिशा शून्या अकू०। इ० महाशून्यता।

त० परमार्थशून्यता। परमार्थ उच्यते निर्वाणम्। तच्च निर्वाणेन शून्यम् अकू०। इ० परमार्थशून्यता।

त० संस्कृतशून्यता। संस्कृत उच्यते कामधातुः रूपधातुरारूप्यधातुश्च। तत्र कामधातुः कामधातुना शून्योऽकू०। रूपधातुः रूपधातुना शून्यः अकू०। आरूप्यधातुरारूप्यधातुना शून्योऽकू०। इ० संस्कृतशून्यता।

त० असंस्कृतशून्यता। असंस्कृत उच्यते यस्य नोत्पादो न निरोधो न स्थितिर्नान्यथात्वम्। इदमुच्यते असंस्कृतम्[5]। असंस्कृतमसंस्कृतेन शून्यं अकू०। इ० असंस्कृतशून्यता।

त० अत्यन्तशून्यता। यस्य अन्तो नोपलभ्यते तदत्यन्तमत्यन्तेन शून्यम् अकू०। इ० अत्यन्तशून्यता।

त० अनवराग्रशून्यता। यस्य नैवाग्रं नावरमुपलभ्यते। तस्य मध्याभावः। यस्य च नादिर्नमध्यंनावरमुपलभ्यते तस्य नागतिर्न गतिः। आदिमध्यावसानान्यपि आदिमध्यावसानैः शून्यान्यकू०। इ० अनवराग्रशून्यता।

त० अनवकारशून्यता। यस्य धर्मस्य न कश्चिदवकारः। अवकारं नाम[6]

---

1 अकू = अकूटस्थाविनाशितामुपादाय। तत् कस्य हेतोः। प्रकृतिरेषामेषा or प्रकृतिरस्या एषा।

2 त० = तत्र कतमा 3 इ० = इयमुच्यते।

4 A & $C_1$ पूर्वादि; $C_2$ पूर्वादिक्वैया दिशा शून्या

5 Mss. omit it.

6 A अवकाराणाम; $C_2$ अवकारो नाम; $C_1$ अनवकार नाम

अविकिरणं छोरणमुत्सर्गः[1]। अनवकारोऽनवकारेण[2] शून्योऽकू०। इ० अनवकारशून्यता।

त० प्रकृतिशून्यता। या सर्वधर्माणां प्रकृतिः संस्कृतानां वा असंस्कृतानां वा न श्रावकैः कृता न प्रत्येकबुद्धैः कृता न तथागतैरर्हद्भिः सम्यक्संबुद्धैः कृता नापकृता। प्रकृतिः प्रकृत्या शून्या अकू०। इ० प्रकृतिशून्यता।

त० सर्वधर्मशून्यता। सवधर्मा उच्यन्ते रूपं etc., i.e., all the स्कन्धs, इन्द्रियs; आयतनs, विज्ञानs; संस्पर्शs; संस्पर्शप्रत्ययवेदनाs up to मनःसंस्पर्शप्रत्ययवेदना संस्कृता धर्मा असंस्कृता[3] धर्माः। इम उच्यन्ते सर्वधर्माः। तत्र धर्माः धर्मैः शून्या अकू०। इ० सर्वधर्मशून्यता।

त० स्वलक्षणशून्यता। [4]रूपणलक्षणं रूपम्। अनुभवलक्षणा वेदना। उद्ग्रहणलक्षणा संज्ञा। अभिसंस्कारलक्षणाः संस्काराः। [5]विजाननलक्षणं विज्ञानं विस्तरेण कर्तव्यं यच्च 'स्कृतानां धर्माणां लक्षणालक्षणं यच्चासंस्कृतानां धर्माणां [6]लक्षणालक्षणं सर्व एते धर्माः [7]स्वलक्षणशून्या अकू०। इ० स्वलक्षणशून्यता।

त० अनुपलम्भशून्यता। ये धर्मा अतीतानागतप्रत्युपन्नास्ते नोपलभ्यन्ते। तत् कस्य हेतोः। नातीते अनागता उपलभ्यन्ते। नाप्यनागते अतीताः[8]। न प्रत्युत्पन्नेऽतीतानागता उपलभ्यन्ते। नाप्यतीता अनागते[9] याः प्रत्युत्पन्ना एवामियमनुपलब्धिरादिविशुद्धित्वात् अकू०। इ० अनुपलम्भशून्यता।

त० अभावस्वभावशून्यता। नास्ति सांयोजिकस्य धर्मस्य[10] स्वभावः प्रतीत्यसमुत्पन्नत्वात्। संयोगः संयोगेन शून्यः अकू०। इ० अभावस्वभावशून्यता।

त० भावशून्यता। भाव उच्यते पञ्चोपादानस्कन्धाः। स च भावो भावेन शून्योऽकू०। इ० भावशून्यता।

---

1 $C_1$ अविकारणमुत्सर्गः   2 $C_1$ drops it ; $C_2$ अवकारशून्यो

3 A & $C_2$ ०तधर्मा   4 A & $C_1$ रूपेण० ; $C_2$ रूपणा

5 A विज्ञानां ; $C_2$ विज्ञामनो ; $C_1$ विजानना

6 A drops लक्षणा   7 A स्वलक्षणेन

8 $C_1$ ०तानागत ; $C_2$ makes a confusion here.

9 $C_1$ गत या   10 $C_1$ धर्मस्वभावः

त० अभावशून्यता। अभाव उच्यते असंस्कृतम्। तत्रासंस्कृतमसंस्कृतेन शून्यम् अकू०। इ० अभावशून्यता।

त० स्वभावशून्यता। [1]स्वभावो हि प्रकृतिरविपरीतता[2] तस्या या तया शून्यता अकू०। न सा ज्ञानेन दर्शनेन च कृता। तत् कस्य हेतोः। प्रकृतिरस्यैषा। इ० स्वभावशून्यता।

त० परभावशून्यता। या उत्पादाद्वा तथागतानामनुत्पादाद्वा[3] स्थितैवैषा धर्माणां धर्मता धर्मस्थितिता yāvat भूतकोटिस्तस्या या तया शून्यता। अकू०। न सा परेण कृता[4]। तत् कस्य हेतोः। प्रकृतिरस्यैषा। इयमुच्यते परभावशून्यता। इदमुच्यते सुभूते बो० महासत्त्वस्य महायानम्॥

इति ज्ञानसम्भारः॥

---

पु० सु० बो० महासत्त्वस्य महायानम्। यदुत शूरङ्गमो नाम समाधिः। yāvat (see pp. 142-3 also infra for full list) आकाशासङ्गविमुक्तिनिरुपलेपो नाम समाधिः[5]। तत्र कतमः शूरङ्गमो नाम समाधिः, etc. as in p. 144 up to रत्नमुद्रो नाम समाधिः। तत्र कतमः सिंहविक्रीडितो नाम समाधिः[6]॥ यत्र समाधौ स्थित्वा सर्वसमाधिभिर्विक्रीडति। अयमुच्यते सिंहविक्रीडितो नाम समाधिः। तत्र कतमः सुचन्द्रो नाम समाधिः। यत्र समाधौ स्थित्वा सर्वसमाधीनवभासयति।[7]अयमुच्यते सुचन्द्रो नाम समाधिः। त०[8] चन्द्रध्वजकेतुर्ना०। यः सर्वसमाधीनां ध्वजं धारयति। अ०[9]। त० सर्वधर्मोद्गतो ना०। य०[10] सर्वसमाधिभिरुद्गच्छति। अ०। त० अवलोकित-

---

1 A स्वभावस्वभाव 2 $C_1$ ०परीतया

3 $C_2$ ०पादो 4 $C_1$ omits न सा परेण कृता

5 Here ends Ch. VII of the Ś.

6 In this way all the समाधिs are explained; the meanings only are given here omitting तत्र कतमो etc; अयमुच्यते etc. for the names of समाधिs, see supra, pp. 141, 142-3, Ś. 1412-4.

7 $C_2$ समाधीनव भासयति; A ०भासमयति।

8 त०=तत्र कतमः—नाम समाधिः 9 अ०=अयमुच्यते...नाम समाधिः

10 य०=यत्र समाधौ स्थित्वा

मूर्धा ना०। य० सर्वसमाधीनां[1] मुर्धानमवलोकयति। अ०। त० धर्मधातुनियतो ना०। य० धर्मधातोर्निश्चयं गच्छति। अ०। त० नियतध्वजकेतुर्ना०। य० सर्वसमाधीनां नियतध्वजं धारयति। अ०। त० वज्रोपमो ना०। य० सर्वसमाधिभिर्न भिद्यते। अ०। त० धर्मप्रवेशमुद्रो ना०। य० सर्वसमाधीनां मुद्रां[2] प्रविशति। अ०। त० समाधिराजछप्रतिष्ठितो ना०। य० समाधीनां राजछप्रतिष्ठानेन[3] प्रतितिष्ठति। अ०। त० रश्मिप्रमुक्तो ना०। य० सर्वसमाधीनां रश्मीनवसृजति। अ०। त० बलव्यूहो ना०। य० [4]सर्वसमाधीनां बलव्यूहं धारयति। अ०। त० समुद्गतो ना०। य० समाधयः समुदागच्छन्ति। अ०। त० निरुक्तिनिर्देशप्रवेशो ना०। य० सर्वसमाधीनां निरुक्तिनिर्देशं प्रविशति। अ०। त० अधिवचनसंप्रवेशो ना०। य० सर्वसमाधीनां अधिवचननामधेयानि प्रविशति। अ०। त० दिग्विलोकितो ना०। य० सर्वसमाधीनां दिशो व्यवलोक्यन्ते। अ०। त० आधारणमुद्रो ना०। य० सर्वसमाधीनां मुद्रा आधारयति। अ०। त० असम्प्रमुषितो ना०। य० सर्वसमाधयो न प्रमुष्यन्ते[5]। अ०। त० सर्वधर्म समवसरणसागरमुद्रो ना०। य० तस्य सर्वसमाधयः संग्रहं समवसरणतामुद्गच्छन्ति[6]। अ०। त० आकाशस्फारणो[7] ना०। य० सर्वसमाधीनामाकाशस्फरणतया स्फरति[8]। अ०। त० तेजोवती ना०। य० सर्वसमाधीनां तेजसा च धिया च ज्वलयति। तेनोच्यते तेजोवती नाम समाधिः[9]। त० अप्रमाणावभासो ना०। य० अप्रमाणमवभासते ते०[10]। त० असङ्गनावरणो ना०। य० सर्वसङ्गरहिततामुपादाय निरावरणोऽवभासते ते०। त० सर्वधर्मप्रवृत्तिसमुच्छेदो ना०। य० सर्वधर्मप्रवृत्तिं समुच्छिनत्ति[11]

---

1 $C_1$ throughout समाधिनां    2 $C_1$ मुद्रो

3 $C_1$ drops प्रतिष्ठानेन    4 A & $C_2$ omit सर्व

5 $C_1$ समाधिया प्र० ; $C_2$ पमुष्यन्ते ; A drops whole of this line.

6 A ०सरणमुद्गच्छन्ति ; $C_1$ सरणं तागच्छति ; $C_2$ सरणतागच्छति।

7 $C_2$ स्फुरणो संप्रमुखितो नाम ; $C_1$ अयं प्रमुखितो नाम

8 A & $C_1$ स्फारणताय स्फारति    9 $C_1$ drops two lines here.

10 ते० = तेनोच्यते......नाम समाधिः।

11 $C_1$ समुच्छिन्न छि ; $C_2$ drops it.

ते०। त० रणजहो ना०[1]। य० सर्वसमाधीनां निमित्तान्यपि जहाति प्रागेवान्यानि निमित्तानि[2] क्लेशानां ते०। त० वैरोचनो ना०। य० सर्वसमाधीनवभासयति तपति विरोचते[3] ते०। त० अनिमिषो ना०। य० न कश्चिद्धर्ममेषति ते०। त० अनिकेतस्थितो ना०। य० सर्वसमाधिषु न कश्चिद्धर्ममनिकेतं०[4] समनुपश्यति ते०। त० निश्चित्तो ना०। य० निहीनां-[5] श्चित्तचैतसिकान्[6] धर्मान् न प्रवर्तयति ते०। त० विमलप्रदीपो ना०। य० सर्वसमाधीनां प्रदीपं धारयति[7] ते०। त० अनन्तप्रभो ना०। य० अनन्तां प्रभां[8] करोति ते०। त० प्रभाकरो ना०। य० सर्वसमाधीनां प्रभां करोति ते०। त० समन्तावभासो ना०। यस्य समाधेः सह प्रतिलम्भेन समाधिमुखान्य[9]वभासन्ते ते०। त० शुद्धसारो ना०। य० सर्वसमाधीनां शुद्धसमतामनुप्राप्नोति ते०। त० विमलप्रभो ना०। य० सर्वसमाधीनां बलमाकर्षयति सर्वसमाधीन् प्रभावयति ते०। त० रतिकरो ना०। य० सर्व-समाधीनां रतिमनुभवति ते०। त० विद्युत्प्रदीपो ना०। य० सर्वसमाधीनां प्रदीपं करोति ते०। त० अक्षयो ना०। य० समाधीनां नैवाक्षयं न क्षयं समनु-पश्यति ते०। त० वज्रमण्डलो ना०। य० सर्वसमाधिमण्डलानि धारयति ते०[10]। त० अक्षयापगतो ना०। य० सर्वसमाधीनां क्षयं समनुपश्यति तथा च पश्यति यथा अणुमपि धर्मं न समनुपश्यति ते०। त० अनिञ्ज्यो[11] ना०। य० सर्वसमाधीन्नेञ्जयति न मन्यते न स्पन्दते[12] न प्रपञ्चयति ते०। त० विवृतो ना०। य० सर्वसमाधीन् विवृतान् समनुपश्यति ते०। त० सूर्यप्रदीपो ना०। य० सर्वसमाधीनां रश्मिमुखमवभासयति ते०। त० चन्द्रविमलो ना०। य० सर्वसमाधीनामन्धकारं विधमयति[13] ते०। त० शुद्धप्रभासो[14] ना०। य० सर्वसमाधीनां चतस्रः प्रतिसंविदः प्रतिलभते ते०। त० आलोककरो ना०।

---

1 $C_2$ रतजहो  2 A नित्यानि  3 $C_1$ ०च्यते
4 $C_1$ मनसिकेतं  5 $C_1$ हीनां  6 $C_2$ चैतसिकान्
7 A धारयन धाति  8 $C_1$ सर्वसमाधीनां प्रभां and omits अनन्तां
9 A सुखान्य०  10 Mss. अयमुच्यते
11 $C_1$ & $C_2$ निंज्यो ; A मिञ्यो  12 $C_1$ स्पन्दति
13 $C_1$ विधयति ; $C_2$ विज्ञयति ; A विधमंयति  14 $C_1$ ०प्रभो

य० समाधिमुखानामालोकं करोति ते०। त० काराकारो ना०। य० सर्वसमाधीनां [1]कारणताक्रियाङ्करोति ते०। त० ज्ञानकेतुर्ना०। य० समाधीनां ज्ञानकेतुं समनुपश्यति ते०। त० वज्रोपमो ना०। य० सर्वधर्मान् निर्विध्यते[2] समाधिमपि न समनुपश्यति ते०। त० चित्तस्थितिर्ना०। य० चित्तं न वर्णयति न विवर्तते न प्रतिभासते न विघातमापत्स्यते न चास्यैवं भवति चित्तमिति ते०। त० समन्तालोको ना०। य० सर्वसमाधीनां समन्तालोकं समनुपश्यति ते०। त० सुप्रतिष्ठितो ना०। य० सर्वसमाधिषु प्रतिष्ठितो भवति ते०। त० रत्नकोटिर्ना०। य० सर्वसमाधयः समन्ताद्रत्नकोटिरिव सन्दृश्यन्ते ते०। त० वरधर्ममुद्रो ना०। त० सर्वसमाधयो मुद्रिता भवन्ति आदिमुद्रामुद्रितामुपादाय ते०। त० सर्वधर्मसमता ना०। य० न कञ्चिद्धर्मं समतानिर्मुक्तं समनुपश्यति ते०। त० रतिजहो ना०। य० सर्वसमाधिरतिः सर्वधर्मरतिर्जहाति[3] ते०। त० सर्वधर्मोद्गत[4]पूर्णो ना०। य० सर्वधर्मैश्चोद्गच्छति सर्वधर्मैश्चापूर्यते ते०। त० विकिरणो ना०। य० सर्वसमाधिभिः सर्वधर्मान् विकिरति विधमयति ते०। त० सर्वधर्मपदप्रभेदो ना०। य० सर्वसमाधीनां च सर्वधर्माणां च पदानि प्रभिनत्ति[5] ते०। त० समाक्षरो ना०। य० सर्वसमाधीनां समाक्षरताम् प्रतिलभते ते०। त० अक्षरापगतो ना०। य० सर्वसमाधीनामेकाक्षरमपि नोपलभते ते०। त० आलम्बनच्छेदो ना०। य० सर्वसमाधीनामालम्बनं छिद्यते ते०। त० अविकारो ना०। य० सर्वधर्माणां विकारं नोपलभते ते०। त० अप्रकारो ना०। य० सर्वधर्माणां प्रकारमपि नोपलभते ते०। त० नामनिमित्ताप्रवेशो ना०। य० सर्वसमाधीनां नामनिमित्तानि नोपलभते ते०। त० अनिकेतचारी ना०। य० सर्वसमाधीनां निकेतं नोपलभते ते०। त० तिमिरापगतो ना०[6]। य० सर्वसमाधितिमिरं विशोधयति ते०। त० चारित्रवतो ना०। य० सर्वसमाधीनां चारित्रं समनुपश्यति ते०। त० अचलो ना०। य० सत्त्वानां[7] चलितं न समनु-

---

1 $C_1$ कारताक्रियां ; $C_2$ कारगतां क्रियां

2 $C_1$ विविध्यते ; $C_2$ निविध्यन्ते

3 A drops जहाति

4 $C_2$ धर्मागतं ; A धर्माङ्गतं

5 A प्रभिवत्ति

6 A adds here प्रवेशो नाम समाधिः

7 A सत्त्वासत्त्वानां

पश्यति ते०। कतमो विषयतीर्णो ना०। य० सर्वसमाधीनां विषयमतिक्रामति ते०। त० सर्वगुणसञ्चयोपगतो ना०। य० सर्वगुणानां सर्वसमाधीनाञ्च सञ्चयतामनुप्राप्नोति ते०। त० चित्तस्थितिनिश्रितो ना०। य० सर्वसमाधीनां चित्तं न प्रवर्तते ते०। त० शुभपुष्पितशुद्धिर्ना०। य० सर्वसमाधिषु शुभपुष्पितशुद्धिं प्रतिलभते ते०। त० बोध्यङ्गवान् ना०। य० सप्तबोध्यङ्गानि प्रतिलभते ते०। त० अनन्तप्रतिभासो ना०। य० अन्तद्वयं नोपलभते ते०। त० असमसमो[1] ना०। य० सर्वसमाधीनां समसमतां[2] न प्रतिलभते ते०। त० सर्वधर्मातिक्रमणो[3] ना०। य० सर्वत्रैधातुकं[4] समतिक्रामति ते०। त० परिच्छेदकरो ना०। य० सर्वसमाधीनां[5] सर्वधर्माणां च परिच्छेदं करिष्यति ते०। त० विमतिविकिरणो ना०। य० सर्वसमाधिविमतिविकिरण[6]मनुप्राप्नोति ते०। त० निरधिष्ठानो ना०। य० सर्वधर्माणां स्थानं समनुपश्यति ते०। त० एकव्यूहो ना०। य० न कस्यचिद्धर्मस्य द्वयतां समनुपश्यति ते०। त० आकाराभिनिर्हारो ना०। य० सर्वसमाधीनां सर्वधर्माणां चाकाराभिनिर्हारं समनुपश्यति ते०। त० एकाकारव्यूहो ना०। य० सर्वसमाधीनामेकाकारतां समनुपश्यति ते०। त० आकारानवकारो नाम समाधिः। य० सर्वधर्माणामद्वयतां समनुपश्यति ते०। त० निर्वेधिकसर्वभावतलाधिकारो ना०। य० सर्वसमाधीनां निर्वेधिकं[7] ज्ञानमनुप्राप्नोति यस्यानुप्राप्तितो न कश्चिन्न प्रतिविध्यते ते०। त० संकेतरुतप्रवेशो ना०। य० सर्वसमाधीनां संकेतरुतानि प्रविशति ते०। त० गीर्घोषोऽक्षरविमुक्तो ना०। य० सर्वसमाधीन् अक्षरविमुक्तान् समनुपश्यति ते०। त० ज्वलनोल्का ना०। य० सर्वसमाधींस्तेजसा च[8] भासयति तपति विरोचते ते०। त० लक्षणपरिशोधनो ना०। य० सर्वलक्षणानि परिशोधयति ते०। त० अनभिलक्षितो ना०। य० सर्वसमाधीनभिलक्षयति ते०। त० सर्वाकारवरोपेतो ना०। य० सर्वाकारवरोपेतो भवति ते०। त० सर्वसुखदुःखनिरभिनन्दी ना०। य० सर्वसमाधिषु सुखदुःखानि न समनुपश्यति ते०। त०

1 $C_1$ समसमा
2 $C_1$ समसमतां
3 $C_1$ ०क्रमणा
4 A सर्वधा०
5 $C_1$ drops it.
6 $C_1$ विमतिकिरण०
7 $C_1$ निर्वेधि समाधीनां
8 $C_1$ साजसा च

अक्षयाकारो ना०। य० सर्वसमाधीनां क्षयं न समनुपश्यति ते०। त० धारणीप्रतिपत्तिर्ना०। य० सर्वसमाधीनाधारयति ते०। त० सर्वसम्यक्त्व[1]मिथ्यात्वसंग्रहो ना०। य० समाधीनां सम्यक्त्वमिथ्यात्वानि न समनुपश्यति ते०। त० सर्वरोधनिरोधप्रशमनो नाम समाधिः। य० सर्वसमाधीनां रोधनिरोधाञ्च समनुपश्यति ते०। त० अनुसारप्रतिसारो ना०। य० सर्वसमाधीनामनुसारप्रतिसारान् न समनुपश्यति ते०। त० विमलप्रभो ना०। य० सर्वसमाधीनां प्रभामण्डलं नोपलभ्यते ते०। त० सारवती ना०। य० सर्वसमाधीनामसारतां नोपलभ्यते ते०। त० परिपूर्णचन्द्रविमलो ना०। य० तस्य सर्वसमाधयः परिपूर्णा भवन्ति तद् यथापि नाम चन्द्रः पूर्णमास्यां ते०। त० महाव्यूहो ना०। य० तस्य सर्वसमाधयो महाव्यूहेन समन्वागता भवन्ति ते०। त०[2] सर्वाकारप्रभाकरो ना०। य० सर्वसमाधीनां सर्वधर्माणां च प्रभां करोति ते०। त० समाधिसमता ना०। य० सर्वसमाधीनां न विक्षेपं नैकाग्रतां च समनुपश्यति ते०। त० अरणसमवसरणो नाम समाधिः। य० [3]सर्वसमाधीनामरणसरणसर्वसमवसरणतामनुप्राप्नोति ते०। त० अनिलानिकेतो ना०। य० सर्वसमाधीनामालयं न समनुपश्यति ते०। त० तथतास्थितनिश्चितो ना०। य० सर्वसमाधीनां तथतां न व्यतिवर्तते ते०। त० कायकलिसंप्रमथनो[4] ना०। य० सर्वसमाधिकायं नोपलभते ते०। त० वाक्कलिविध्वंसनो ना०। य० सर्वसमाधीनां वाक्कर्मणोपलभते ते०। त० गगनकल्पो ना०। य० गगनवदवभासते ते०। त० आकाशासङ्गविमुक्तिनिरुपलेपो ना०। य० सर्वधर्माणामाकाशासङ्गविमुक्तिनिरुपलेपनामनुप्राप्नोति ते०। इदं सुभूते बो० महासत्त्वस्य प्रज्ञापारमितायाञ्चरतो महायानम्[5]। इति पुण्यसम्भारः।

पु० सु०: बो० महासत्त्वस्य महायानम्। यदुत चत्वारि स्मृत्युपस्थानानि। कतमानि चत्वारि। कायस्मृ०[6] वेदनास्मृ० चित्तस्मृ० धर्मस्मृ०।

---

1 $C_1$ सम्यक्त०   2 A सर्वाकारश्च

3 $C_1$ & $C_2$ add before this त० अरणसमवसरणो ना०। य० सर्वसमाधयोरणन्ति ते०।   4 $C_1$ & $C_2$ संप्रथमनो

5 Here Chap. VII of Ś. ends & Chap. IX commences.

6 स्मृ० = स्मृत्युपस्थानं

तत्र कतमत् कायस्मृ०। एवं यावत् कतमद्धर्मस्मृ०[1]। इह सु०[2] बो० महासत्त्वोऽध्यात्मकाये कायानुपश्यी विहरति। न च कायसहगतान् वितर्कान् वितर्कयति तच्चानुपलम्भयोगेन। बहिर्धाकाये कायानुपश्यी etc. as in l. 2-3. अध्यात्मबहिर्धाकाये कायानुपश्यी etc. as in l. 2-3. आतापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये। एवं अध्यात्मं वेदनासु चित्ते अध्यात्मं धर्मेषु धर्मानुपश्यी etc. as in l. 4-5. substituting धर्म for काय up to दौर्मनस्ये।

कथञ्च सु० बो० महासत्त्वोऽध्यात्मं काये कायानुपश्यी विहरति। इह सुभूते बो० महासत्त्वश्चरंश्चरामीति प्रजानाति। स्थितः[3] स्थितोऽस्मीति प्र०[4]। निषण्णो निषण्णोऽस्मीति प्र०। शयानः शयितोऽस्मीति प्र०। यथा यथास्य कायः स्थितो भवति प्रणीतमप्रणीतं वा तथा तथैनं प्र०। एवं हि सुभूते बो० महासत्त्वोऽध्यात्मं काये कायानुपश्यी विहरति आतापी संप्रजानन् स्मृतिमान् विनीयलोकेऽभिध्यादौर्मनस्ये। पुनरपरं सु० बो० महासत्त्वोऽध्यात्मं काये कायानुपश्यी विहरति। अभिक्रामन् वा प्रतिक्रामन् वा संप्रजानचारी भवति आलोकिते विलोकिते सम्मिञ्जिते प्रसारिते संघाटीपट[5]पात्रचीवरधारणे अशिते पीते खादिते शयिते [6]निद्राक्लमप्रतिविनोदने आगते गते स्थिते निषण्णे सुप्ते जागरिते[7] भाषिते तुष्णीम्भावे प्रतिसंलयने एवं संप्रजानचारी भवति। एवं हि सु० बो० महासत्त्वः प्रज्ञापारमितायां चरन् अध्यात्मं काये कायानुपश्यी विहरति। आतापी etc. up to दौर्मनस्ये तच्चानुलम्भयोगेन। पुनरपरं सु० बो० महासत्त्वः स्मृत[8] आश्वसन् स्मृत आश्वसामीति यथाभूतं प्रजानाति। स्मृतः प्रश्वसन् स्मृतः प्रश्वसामीति य०[9]। दीर्घं वा आश्वसन् दीर्घं वा आश्वसामीति य०। दीर्घं वा प्रश्वसन् दीर्घं वा प्रश्वसामीति य०। ह्रस्वं वा आश्वसन् ह्रस्वं वा

---

1 स्मृ० = स्मृत्युपस्थानं

2 सु० = सुभूते

3 A स्थिति:

4 प्र० = प्रजानाति

5 $C_2$ पत०

6 $C_1$ निद्राप्रेम; $C_2$ निद्रकेम

7 A जागर्त्तित

8 A drops it.

9 य० = यथाभूतं प्रजानाति

आश्वसामीति य०। ह्रस्वं वा प्रश्वसन् ह्रस्वं वा प्रश्वसामीति य०। तद् यथापि नाम सु० चक्रं भ्रामयेत् कुम्भकारः कुम्भकारान्तेवासी वा दीर्घमाविध्यन् दीर्घमाविध्यामीति य०। ह्रस्वमाविध्यं ह्रस्वमाविध्यामीति य०। एवमेव सु० बो० महासत्त्वः स्मृत आश्वसन् etc. as before p. 204, ll. 20ff.। एवं हि सु० बो० महासत्त्वः काये कायानुपश्यी विहरति आतापी etc. पुनरपरं सु० बो० महासत्त्वः इममेव कायं धातुशो यथाभूतं प्रत्यवेक्षते। अस्त्यस्मिन् काये पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुः। तद् यथापि नाम सु० गोघातको वा गोघातकान्तेवासी वा तीक्ष्णेन शस्त्रेण गां हन्यात् गां हत्वा चत्वारि फलकानि कुर्यात्। चत्वारि फलकानि कृत्वा प्रत्यवेक्षेत स्थितो वा[1] निषण्णः। एवमेव सु० बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन्निममेव कायं धातुशो यथाभूतं प्रत्यवेक्षते। अस्त्यस्मिन् काये पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुः। एवं हि सु० बो० महासत्त्वः पज्ञापारमितायां चरन्नध्यात्मं काये कायानुपश्यी विहरति आतापी as before up to दौर्मनस्ये तच्चानुपलम्भयोगेन। पुनरपरं सु० बो० महासत्त्वः प्रज्ञापारमितायां चरन्निममेव कायमूर्ध्वपादतलादधः केशमस्तकात्नखरोमत्वकूपर्यन्तं[2] पूर्णं नानाप्रकारस्याशुचेर्यथाभूतं प्रत्यवेक्षते—सन्त्यस्मिन् काये केशरोमाणि नखा दन्तास्त्वक्चर्ममांसस्नायवः शोणितमस्थिमज्जाहृदयं वृक्कायकृत्क्लोमप्लीहा आममन्त्राणि[3] अन्त्रगुणा उदरं पुरीषं मूत्रमश्रुस्वेदो मेदः खेटः[4] सिंहानकं पूयं लोहितं पित्तं श्लेष्मा वसा मलो[5] मस्तकलुङ्गमक्षिगूथकं [6]कर्णगूथकमित्यस्मिन् काये यथाभूतं प्रत्यवेक्षते। तद् यथापि नाम सु० कर्मकारस्य मुतोडिः[7] पूर्णो[8] नानाधान्यानां शालीनां व्रीहीनां तिलानां तण्डुलानां मुद्गानां माषाणां यवानां गोधूमानां मसूराणां सर्षपाणामप्यन्यश्चक्षुष्मान् पुरुषो मुक्तो[9]

---

1 Mss. add अथवा  2 A पूर्यन्तं  3 C₂ राम; C₁मन्त्रनि

4 $C_1$ खट; A खुतः, Cf. Majjhima Nikāya, I, p. 57: खेळो

5 A मला  6 $C_1$ कर्णकमित्य०

7 A मुतोतिः; $C_1$ मतोविः; $C_2$:मुतोभिः but compare Majjhima Nikāya, I, p. 57: मुतोळि पूरा नानाविहितस्स धञ्ञस्स।

8 A & $C_1$ पूर्णा  9 A & $C_1$ मुक्ता

प्रत्यवेक्षमाणः एवं जानीयादयं[1] शालिः, अयं व्रीही, अमी तिलाः, अमी तण्डुलाः, अमी मुद्गाः, अमी माषाः, अमी यवाः, अमी गोधूमाः, अमी मसूराः, अमी सर्षपा इति । एवमेव सु० बो० महासत्त्व इममेव कायमूर्ध्वं पादतलादधः केशमस्तकात् etc. as before p. 205, ll. 15-19 up to कर्णगूथकं । एवं हि सु० बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् अध्यात्मं काये कायानुपश्यी विहरति आतापी etc. up to दौर्मनस्ये ।

पुनरपरं सु० बो० महासत्त्वो यदा श्मशानगतः पश्यति नानारूपाणि श्मशानेऽपविद्धानि[2] शिवपथिकायामुज्झितानि[3] एकाहमृतानि वा द्व्यहमृतानि वा त्र्यहमृतानि वा चतुरहमृतानि वा पञ्चाहमृतानि वा आध्मातकानि विनीलकानि वा विपूयकानि वा विखादितकानि वा विक्षिप्तकानि वा स इममेव कायं तत्रोपसंहरति । अयमपि काय एवं धर्मा एवं स्वभाव एतां धर्मतामव्यतिवृत्तः[4] । एवं हि सु० बो० महासत्त्वो बहिर्धाकाये कायानुपश्यी विहरति आतापी etc. up to दौर्मनस्ये । पुनरपरं सु० बो० महासत्त्वो यदा मृतशरीराणि पश्यति श्मशान उत्सृष्टानि षड्रात्रमृतानि वा सप्तरात्रमृतानि वा तानि काकैर्वा खाद्यमानानि [5]कुररैर्वा गृध्रैर्वा शृगालैर्वा वृकैर्वा[6] श्वभिर्वा तदन्यैर्वा नानाविधैः प्राणकजातैः खाद्यमानानि स इममेव कायं तत्रोपसंहरति etc. as before ll. 10-13 । पुनरपरं सु० बो० महासत्त्वो यानि तानि पश्यति मृतशरीराणि श्मशान उज्झितानि खादितकानि अशुचीनि[7] विपूतीनि[8] दुर्गन्धीनि स इममेवकायं तत्रोपसंहरति etc. as before ll. 10-13 । पु० सु० बो० महासत्त्वो यदा पश्यति शिवपथिकायामस्थिसंकुलां[9] मांसशोणितम्रक्षितां स्नायुविनिबद्धान्तां दृष्ट्वा स इममेव कायं तत्रोपसंहरति etc. as before ll. 10-13। पु० सु० बो० महासत्त्वो यानि तानि पश्यति मृतशरीराणि शिवपथिकायामस्थिसंकलामपगतमांसशोणित-

---

1 $C_1$ ०वयं

2 A drops ०विद्धानि

3 $C_2$ मुषितानि ; $C_1$ मुक्ततानि

4 A एतान्धर्ममव्यति०

5 $C_2$ कुरन्यैर्लै०. Cf. Majjhima Nikāya, I, p. 58 : कुललेहि वा खज्जमानं

6 Cf. Mvyut. 213. 15

7 $C_2$ अशुचिनि

8 A विपुति

9 Cf. Pāli. संखलिकं

स्नायुबन्धनान्तां दृष्ट्वा इममेव कायं etc. as before. पु० सु० बो० महासत्त्वो यदा पश्यति शिवपथिकायामस्थिसंकलां विग्रहबन्धनविप्रयुक्तां विसंयुक्तां यथासंख्याः पृथिव्यां विक्षिप्ताः स इममेव कायं etc. as before. पु० सु० बो० महासत्त्वो यदा पश्यति शिवपथिकायामस्थीनि दिग्विदिशो विक्षिप्तानि यदुतान्येन पादास्थीनि अ०[1] जंघास्थीनि अ० उर्वस्थीनि अ० श्रोणीकटाहास्थीनि अ० पृष्ठवंशास्थीनि अ० पार्श्वकास्थीनि अ० ग्रीवास्थीनि अ० बाह्वस्थीनि अ० शिरःकपालास्थीनि स इममेव कायं etc. as before. पु० सु० बो० महासत्त्वो यदा पश्यति शिवपथिकायामस्थीनि अनेकवार्षिकाणि अनेकवर्षशतानि वातातपपरीतानि[2] श्वेतानि शङ्खसन्निभानि स इममेव कायं etc. as before. पु० सु० बो० महासत्त्वो यदा पश्यति शिवपथिकायामस्थीनि तिरोवार्षिकाणि नीलानि कपोतवर्णानि पूतीनि चूर्णकजातानि पृथिव्यां पांशुना समसमीभूतानि स इममेव कायं etc as before. एवं वेदनायां चित्ते धर्मे धर्मानुपश्यी विहरति आतापी संप्रजानन् स्मृतिमान् विनीयलोके अभिध्यादौर्मनस्ये तच्चानुपलम्भयोगेन। इदं सु० बो० महासत्त्वस्य महामानम्।

पु० सु० बो० महासत्त्वस्य महायानम्। यदुत चत्वारि सम्यक्प्रहाणानि। कतमानि चत्वारि। इह सु० बो० महासत्त्वोऽनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय छन्दं जनयति व्यायच्छते वीर्यमारभते चित्तं प्रतिगृह्णाति सम्यक्प्रणिदधाति उत्पन्नानां पापकानामकुशलानां धर्माणां प्रहाणाय छन्दं जन०[3]। अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय छन्दं जन०। उत्पन्नानां कुशलानां धर्माणां स्थितये भूयो भवाय असंप्रमोषाय अपरिहाणाय छन्दं जन०। तच्चानुपलम्भयोगेन। इदमपि सु० बो० महासत्त्वस्य महायानम्।

पु० सु० बो० महासत्त्वस्य महायानम् यदुत चत्वार ऋद्धिपादाः। कतमे चत्वारः। इह सु० बो० महासत्त्वश्छन्दसमाधिप्रहाणसंस्कारसमन्वागतमृद्धिपादं भावयति विवेकनिश्रितं विरागनिश्रितं निरोधनिश्रितं व्यवसर्गपरिगतमेवं वीर्यसमाधिश्चित्तसमाधिर्मीमांसासमाधिप्रहाणसंस्कार etc. as

---

1 अ० = अन्येन  2 $C_1$ परीतानि

3 जन० = जनयति व्यायच्छते चित्तं प्रतिगृह्णाति सम्यक् प्रणिदधाति।

before up to परिगतम् तच्चानुपलम्भयोगेन। इदमपि सु० बो० महासत्त्वस्य महायानम्।

पु० सु० बो० महासत्त्वस्य महायानं यदुत पञ्चेन्द्रियाणि। कतमानि पञ्च। श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियम्। तच्चानुपलम्भयोगेन[1]। इदमपि[2] etc.। पुनर etc.[3]। यदुत पञ्चबलानि। कतमानि पञ्च। श्रद्धाबलं वीर्यबलं स्मृतिबलं समाधिबलं प्रज्ञाबलम् तच्चानुपलम्भयोगेन। इदमपि etc.

पुनर० etc. यदुत सप्तबोध्यङ्गानि। कतमानि सप्त। स्मृतिसं०[4] धर्मप्रविचयसं० वीर्यसं० प्रीतिसं० प्रस्रब्धिसं० समाधिसं० उपेक्षासं०। तत्र कतमत् स्मृतिसं० यावदुपेक्षासं०। इह सु० बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् स्मृतिसं० यावदुपेक्षासं० भावयति विवेकनिश्रितं विरागनिश्रितं निरोधनिश्रितं व्यवसर्गपरिगतम् तच्चानुपलम्भयोगेन। इदमपि etc.

पुनर० etc. यदुत आर्याष्टाङ्गमार्गः। कतम आर्याष्टाङ्गो मार्गः। यदुत सम्यग्दृष्टिः स०[5]संकल्पः स०कर्मान्तः स० आजीवः स० व्यायामः स० स्मृतिः स० समाधिः। तच्चानुपलम्भयोगेन। इदमपि etc.।

पुनर० etc.। यदुत त्रयः समाधयः। कतमे त्रयः समाधयः। शून्यतानिमित्ताप्रणिहितः। तत्र कतमः शून्यतासमाधिः। स्वलक्षणेन शून्यान् सर्वधर्मान् प्रत्यवेक्षमाणस्य या चित्तस्य स्थितिः शून्यताविमोक्षमुखमयमुच्यते शून्यतासमाधिः। [6]अनिमित्तान् सर्वधर्मान् etc. as before; read अनिमित्त for शून्यता। अप्रणिहितान् सर्वधर्मान् प्रत्यवेक्षमाणस्य या चित्तस्य etc. as before; read अप्रणिहित for शून्यता। इमानि त्रीणि विमोक्षमुखानि। त्रयः समाधयः। इदमपि etc.। एतेषु त्रिषु विमोक्षमुखेषु शिक्षितव्यम्।

पुनर० etc। यदुत दुःखज्ञानं समुदयज्ञानं निरोधज्ञानं मार्गज्ञानं क्षयज्ञानमनुत्पादज्ञानं धर्मज्ञानं अन्वयज्ञानं[7] संवृत्तिज्ञानं परिजयज्ञानं

---

1 Mss. put it after इदमपि etc.

2 इदमपि etc = इदमपि सुभूते बो० महासत्त्वस्य महायानम्।

3 पुनर० etc = पुनरपरं सुभूते बो० महासत्त्वस्य महायानम्। 4 सं० = संबोध्यङ्ग

5 स० = सम्यक् 6 $C_1$ & $C_2$ आनि० 7 $C_1$ सं अन्वयं

यथाभूतज्ञानं। तत्र कतमद् दुःखज्ञानं। यद् दुःखस्यानुत्पादज्ञानम् इदं दुःखज्ञानं। त०[1] समुदय०[2]। यत् समुदयस्य प्रहाणज्ञानं। त० निरोध०। यद्दुःखनिरोधज्ञानं। त० मार्ग०। यन्निरोधसाक्षात्करणज्ञानं। त० क्षय०। यद्रागद्वेषमोहक्षयज्ञानं। त० अनुत्पाद०। यदनुत्पादे अनुत्पादज्ञानं। त० धर्म०। यत् पञ्चानां स्कन्धानां [3]धर्मोपच्छेदज्ञानं। त० अन्वय०। चक्षुरनित्यं श्रोत्रं घ्राणं जिह्वा कायो मनोऽनित्यं। एवं यावद् [5]व्यस्तसमस्तेषु स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु च ज्ञानं[4]। त० संवृत्ति०। यत् परसत्त्वानां परपुद्गलानां चेतसैव चेतसो ज्ञानं। त० परिजय०। यत्प्रतिपत्परिजयज्ञानं। त० यथाभूत०[6]। यत् तत् तथागतस्य सर्वाकारज्ञताज्ञानं तच्चानुपलम्भयोगेन। इदमपि etc.

पुनर etc.। यदिदं त्रीणीन्द्रियाणि। कतमानि त्रीणि। अनाज्ञातमाज्ञास्यामीन्द्रियमाज्ञेन्द्रियमाज्ञातावीन्द्रियं। त०[7] अनाज्ञातमाज्ञास्यामीन्द्रियं। यच्छैक्षाणां पुद्गलानाम् अनभिसमितानामनवभासं यदविनयं[8] श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियम् इदमुच्यते अनाज्ञातमाज्ञास्यामीन्द्रियं। त० आज्ञेन्द्रियं। यच्छैक्षाणां पुद्गलानामाज्ञातवतां श्रद्धेन्द्रियं etc. up to प्रज्ञेन्द्रियम् इदमुच्यते आज्ञेन्द्रियं। त० आज्ञातावीन्द्रियं[9] यदुताशैक्षाणां पुद्गलानामर्हतां प्रत्येकबुद्धानां बोधिसत्त्वानां तथागतानामर्हतां सम्यक्संबुद्धानां श्रद्धेन्द्रियं etc. up to प्रज्ञेन्द्रियम् इदमुच्यते आज्ञातावीन्द्रियं। इदमपि etc. अनुपलम्भयोगेन।

पुनर etc.। यदुत सवितर्कः सविचारः समाधिरवितर्कोऽविचारमात्रः समाधिः। त० सवितर्कः सविचारः समाधिः। इह सु० बो० महासत्त्वो विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कसविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरति। अयमुच्यते सवितर्कः सविचारः समाधिः। त०

---

1 त० = तत्र कतमत्......ज्ञानं 2 ० indicates ज्ञा
3 Mss. धर्मोप० 4 $C_2$ adds here तच्चानुपलम्भयोगेन
5 $C_2$ drops it. 6 $C_1$ कतम०
7 त० = तत्र कतमत् 8 $C_1$ drops it. 9 Mss. ०विन्द्रियं

कतमोऽवितर्कोऽविचारमात्रः समाधिः । यः[1] प्रथमस्य ध्यानस्य द्वितीयस्य ध्यान-[2]स्यान्तरिकोऽयमुच्यते अवितर्कोऽविचारमात्रः समाधिः । तत्र कतमोऽवितर्कोऽविचारः समाधिर्यद् द्वितीयं ध्यानं विस्तरेण कर्तव्यं यावन्नैव संज्ञानासंज्ञायतनसमापत्तिरयमुच्यतेऽवितर्कोऽविचारः समाधिः । इदमपि etc. अनुपलम्भयोगेन ।

पुनर etc. । यदुत दशानुस्मृतयः । कतमा दश । यदुत बुद्धानुस्मृतिर्धर्मानु०[3] संघानु० शीलानु० त्यागानु० देवतानु० ऊर्ध्वगानु० मरणानु० कायानु० आनापानानु० । इदमपि etc. अनुपलम्भयोगेन ।

पुनर etc. । यदुत चत्वारि ध्यानानि चत्वार्यप्रमाणानि चतस्र आरूप्यसमापत्तयोऽष्टौ विमोक्षा नवानुपूर्वविहारसमापत्तयः । इदमपि etc.

पुनर etc. । दश तथागतबलानि । कतमानि दश । यदुत इह बो० महासत्त्वः स्थानञ्च स्थानतोऽस्थानञ्चास्थानतो यथाभूतं प्रजानाति । अतीतानागतप्रत्युत्पन्नानां च कर्मणां कर्मसमादानानां च स्थानतो हेतुतो विपाकञ्च यथा०[4] । नानाधातुकं यथा० । परसत्त्वानां परपुद्गलानां नानाधिमुक्तिकतां यथा० । परसत्त्वानां परपुद्गलानामिन्द्रियपरापरज्ञानतां यथा० । सर्वत्रगामिनीं प्रतिपदं यथा० । परसत्त्वानां परपुद्गलानां ध्यानविमोक्षसमाधिसमापत्तिसंक्लेशव्यवदानव्युत्थानं यथा० । सोऽनेकविधं पूर्वनिवासमनुस्मरति । स च दिव्येन चक्षुषा सत्त्वानां [5]च्युतोपपादं यथा० । स आस्रवाणां क्षयादनास्रवां चेतोविमुक्तिं प्रज्ञाविमुक्तिं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षात्कृत्वा उपसम्पद्य विहरति क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमिथ्यात्वमिति यथा० । इदमपि etc. अनुपलम्भयोगेन ।

---

1 Mss यां  2 $C_1$ & $C_2$ ०न्तरिका ; cf. Ś. 1442.

3 नु० = नुस्मृतिः  4 यथा० = यथाभूतं प्रजानाति

5 $C_1$ सत्त्वोपपानां ; A सत्त्वानाचष्य तोपपादं $C_1$ चुत्योपपादं

पुनर etc.। यदुत चत्वारि वैशारद्यानि। कतमानि चत्वारि। यदुत सम्यक्संबुद्धस्य वत मे[1] प्रतिजानतः[2] इमे धर्मा अभिसंबुद्धा इति अत्र च मे कश्चिच्छ्रमणो वा देवो वा मारो वा ब्रह्मा वा कश्चिद्वा पुनर्लोके सह धर्मेण [3]चोदयेदिति निमित्तमेतन्न समनुपश्यामि। इदमत्र निमित्तमसमनुपश्यन् क्षेमप्राप्तोऽभयप्राप्तो विहरामि आर्षभं स्थानं प्रजानामि पर्षदि सम्यक् सिंहनादं नदामि ब्राह्मं चक्रं प्रवर्तयामि अप्रवर्तितं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सह धर्मेणेति। क्षीणाश्रवस्य वत मे प्रतिजानतः इमे आस्रवा अपरिक्षीणा इति नैतत् स्थानं विद्यते। अत्र च मे कश्चिच्छ्रमणो वा ब्राह्मणो वा पेयालं यावद् ब्राह्मं चक्रं प्रवर्त्त etc. up to सह धर्मेणेति। ये खलु पुनरिमे मया आन्तरायिका धर्मा आख्यातास्तान् [4]प्रतिषेवमाणस्य नालमन्तरायायेति नैतत् स्थानं विद्यते। अत्र मे etc[5]। या मया प्रतिपदाख्याता आर्या नैर्याणिकी[6] निर्याति तत्करस्य सम्यग् दुःखक्षयाय तां प्रतिपद्यमानो न निर्यायात् सम्यग् दुःखक्षयायेति नैतत् स्थानं विद्यते। अत्र च मे etc. इमानि चत्वारि वैशारद्यानि। इदमपि etc. अनुपलम्भयोगेन।

पुनर etc.। यदुत चतस्रः प्रतिसंविदः। कतमाश्चतस्रः। धर्मप्र०[7] अर्थप्र० निरुक्तिप्र० प्रतिभानप्र०। इदमपि etc. अनुपलम्भयोगेन।

पुनर etc.। यदुताष्टादशावेणिका बुद्धधर्माः। कतमे अष्टादश। यदुत [8]याञ्च रात्रिं सुभूते तथागतोऽर्हन् सम्यक्संबोधिमभिसंबुद्धः याञ्च रात्रिमुपादाय परिनिर्वास्यति एतस्मिन्नन्तरे सुभूते नास्ति तथागतस्य स्खलितं नास्ति रवितं नास्ति मुषितस्मृतिता नास्ति नानात्वसंज्ञा नास्त्यसमाहितं चित्तं नास्त्य-

---

1 A चतेमे ; $C_1$ वतेमे   2 $C_1$ ०जानते

3 $C_2$ व्यादय०   4 $C_2$ प्रतिषेध०

5 मे etc. = मे कश्चिच्छ्रमणो वा पेयालं यावत् केनचिद्वा पुनर्लोके सह मे

6 $C_2$ ॰ैयानिकि ; A & $C_1$ निर्याणिकी

7 प्र० = प्रतिसंवित्   8 $C_1$ यांच

प्रतिसंख्या चोपेक्षा[1] नास्ति छन्दपरिहाणिर्नास्ति वीर्यप०[2] नास्ति स्मृतिप० नास्ति समाधिप० नास्ति प्रज्ञाप० नास्ति विमुक्तिप०। सर्वकायकर्मज्ञानपूर्वङ्गमज्ञानानुपरिवर्त्ति। सर्ववाक्कर्म as before up to वर्त्ति। सर्वमनस्कर्म as before up to वर्त्ति। अतीतेऽध्वन्यप्रतिहतमसङ्गज्ञानन्दर्शनञ्च। अनागतेऽध्वन्यप्र० as before up to नञ्च। प्रत्युत्पन्नेऽध्वन्यप्र० as before up to नञ्च प्रवर्त्तते। इमे अष्टादशावेणिका बुद्धधर्माः। इदमपि etc. अनुपलम्भयोगेन। इति मार्गसम्भारः॥

---

पुनर etc.। यदुत धारणीमुखानि। यदुताक्षरनयसमताक्षरमुखमक्षरप्रवेशः। कतमोऽक्षरनयसमता अक्षरमुखमक्षरप्रवेशः। अकारो मुखः सर्वधर्माणामाद्यनुत्पन्नत्वात्। रेफो मुखः स०[3] रजोऽपगतत्वात्। पकारो मुखः स० परमार्थनिर्देशात्। चकारो मुखः स० च्यवनोपपत्त्यनुपलब्धित्वात्। नका०[4] स० नामापगतत्वात्। लका० स० लोकोत्तीर्णत्वात् तृष्णालताहेतुप्रत्ययसमुद्घातित्वात्[5] च[6]। दका० स० दान्तदमथपरिच्छिन्नत्वात्। बका० स० बन्धनविमुक्तत्वात्। डका० स० डमरापगतत्वात्[8]। सका० स० सङ्गानुपलब्धित्वात्। वका० स० वाक्पथघोषसमुच्छिन्नत्वात्। तका० स० तथताऽचलितत्वात्। यका० स० यथावदनुत्पादत्वात्। स्तका० स० स्तम्भानुपलब्धित्वात्। कका० स० कारकानुपलब्धित्वात्। सका० स० समतानुपलब्धित्वात्। मका० स० ममकारानुपलब्धित्वात्। गका० स० गगनानुपलब्धितः। स्थका० स० स्थानानु०[9]। जका० स० जात्यनु०। श्वका० स० श्वासानु०। धका० स० धर्मधात्वनु०। शका० स० शमथानु०। खका० स० खसमतानु०। क्षका० स० क्षयानु०। तका०[10] स०[11] तथानुपलब्धितः।

---

1 $C_2$ योपेक्षा
2 प = परिहाणि:
3 स० = सर्वधर्माणां
4 का० = कारो मुखः
5 $C_2$ समुद्घाटितत्वात्
6 Mss. omit च.
7 A दमप०
8 $C_2$ दमर०
9 नु० = नुपलब्धितः
10 Mss. स for त
11 Henceforth स० = सर्वधर्माः

श्रका०[1] स० सर्वज्ञानानु०। हका० स० हेतोरनु०। च्छका० स० [2]छवेरप्यनु०। स्मका० स० स्मरणानु०। ह्वका० स० [3]आह्वानापगतत्वात्। सका० सर्वधर्मा उत्साहानु०। घका० स० घनानु०। ठका० स० विठपनानु। णका० स० रणविगतत्वात्। फका० स० फलानु०। स्कका० स० स्कन्धानु०। जका० स० जरानु। चका० स० चरणानु०। टका० स० ठंकारानु०। ढका० स० ढंकारानु०।

नास्ति अत उत्तरि अक्षरव्यवहारः। तत् कस्य हेतोः। तथाहि न कस्यचिन्नामास्ति येन संव्यवह्रियेत येन वाभिलप्येत येन निर्दिश्येत येन लक्ष्येत[4] येन पश्येत्। तद् यथापि नाम सुभूते आकाशम्। एवमेव सर्वधर्मा अनुगन्तव्याः। अयं सु० धारणीप्रवेशोऽकाराद्यक्षरनिर्देशप्रवेशः। यः कश्चित् सु० बो० महासत्त्वः इदमकाराद्यक्षरकौशल्यप्रवेशं ज्ञास्यति न स क्वचिद् ते प्रतिहन्यते[5]। सर्वं तं धर्मतया समाधयिष्यति[6] रुतज्ञानकौशल्यञ्च प्रतिलप्स्यते। यो हि कश्चित् सु० बो० महासत्त्व इमामकाराद्यक्षरमुद्रां श्रोष्यति श्रुत्वा चोद्ग्रहीष्यति धारयिष्यति वाचयिष्यति परेषां देशयिष्यति रमयति तया सन्तत्या तस्य[7] विंशतिरनुशंसाः प्रतिकांक्षितव्याः। कतमा विंशतिः। स्मृतिमांश्च भविष्यति। मतिमांश्च भ०[8]। गतिमांश्च भ०। धृतिमांश्च भ०। ह्रीमांश्च प्रज्ञावांश्च प्रतिभानवांश्च सत्यकुशलश्च[9] भ०। इदं धारणीमुखमल्पकृच्छ्रेण प्रतिलप्स्यते न च कथंकथी भ०। विमतिश्चास्य न भ०। न च श्लक्ष्णां वाचं श्रुत्वा परेष्वनुनीतो भ०। न च[10] परुषया वाचा प्रतिहन्यते। न चोन्नतो भ० नावनतः। यथास्थित एव भ० रुतकुशलश्च भविष्यति। स्कन्धकु०[11] धातुकु०। आयतनकु० सत्यकु० प्रतीत्यसमुत्पादकु०। हेतुकु० प्रत्ययकु०। धर्मकु०। इन्द्रियपरिपूर्ण-

---

1 का० = कारमुखाः

2 $C_2$ छ्यरप्य

3 $C_1$ चाह्वाराप०

4 Mss. लक्ष्यते

5 Ś. 1452 स न क्वचिद् ते संघति

6 Ś. 1453 संसाध० ; A समाधरिष्यति

7 $C_1$ ते या सन्तत्यागम्य

8 भ० = भविष्यति

9 A & $C_2$ drop it.

10 $C_1$ चापरु०

11 कु० = कुशलश्च भविष्यति

ज्ञानकु०। परचित्तज्ञानकु० ऋद्धिविधिज्ञानकु०। दिव्यश्रोत्रज्ञानकु०। पूर्वनिवासानुस्मृतिज्ञानकु०। च्युतोपपत्तिज्ञानकु०। आस्रवक्षयज्ञानकु०। स्थानास्थाननिर्देशकु०। अतिक्रमणकु० इर्यापथकु०। इमाननुशंसान् प्रतिलप्स्यते इति। इदमपि सुभूते धारणीमुखमक्षरमुखमकारमुखं[1] बो० महासत्त्वस्य महायानम्। इति धारणीसम्भारः[2]॥

यदपि तत् सुभूतिरेवमाह। कथं बो० महासत्त्वो महायानसम्प्रस्थितो भवतीति। इह सुभूते बो० महासत्त्वः षट्सु पारामितासु चरन् भूमेर्भूमिं संक्रामति। कथं च सुभूते बो० महासत्त्वो भूमेर्भूमिं संक्रामति यदुतासंक्रान्त्या सर्वधर्माणाम्। तत् कस्य हेतोः। न हि स कश्चिद्धर्मो य आगच्छति वा गच्छति वा संक्रामति वा उपसंक्रामति वा। अपि तु या धर्माणां भूमिस्तांश्च मन्यते न चिन्तयति भूमिपरिकर्म च करोति न च भूमिं समनुपश्यति।

कतमच्च बो० महासत्त्वस्य भूमिपरिकर्म। प्रथमायां भूमौ वर्तमानेन बो० महासत्त्वेन दशभूमिपरिकर्माणि करणीयानि। कतमानि दश। अध्याशयपरिकर्म अनुपलम्भयोगेन। हितवस्तुता प०[3] निमित्ततानुपलम्भतामुपादाय। सर्वसत्त्वसमचित्तताप० सत्त्वानुपलब्धितामुपादाय। त्यागप० दायकदेयपरिग्राहकानु०[4]। कल्याणमित्रसेवाप० तैरसंस्तापनतामुपादाय[5]। सद्धर्मपर्येष्टिप० सर्वधर्मानु०। अभीक्ष्णं नैष्क्रम्यप० गृहानु०। बुद्धकायस्पृहाप० [6]लक्षणानुव्यञ्जननिमित्तानु०। धर्मविवरणप० धर्मभेदानु०। सत्यवचनप० वचनानु०। इमानि सु० बो० महासत्त्वानां प्रथमाया भूमेर्दश परिकर्माणि यानि प्रथमायां भूमौ वर्तमानेन बो० महासत्त्वेन दश परिकर्माणि करणीयानि।

---

1 Ś. 1453 धारणीमुखमकाराद्यक्षरप्रवेशो ; mss. ०मक्षय०

2 Here ends ch. IX of Ś. and begins ch. X.

3 प० = परिकर्म

4 नु० = नुपलब्धितामुपादाय

5 A तैरसन्तायनतामु ; $C_1$ तैरसस्तापनतामु ; $C_2$ तरसंतापनतामु

6 $C_1$ लक्षणानुप०

पु० सु०[1] बो० महासत्त्वो द्वितीयायां भूमौ वर्तमानोऽष्टौ धर्मान् मनसिकरोति तेषु च प्रतिपद्यते। कतमानष्टौ। यदुत शीलविशुद्धिं कृतज्ञतां कृतवेदितां क्षान्तिबलप्रतिष्ठानं प्रामोद्यप्रत्यनुभवतां सर्वसत्त्वापरित्यागितया[2] महाकरुणाया आमुखीकर्म। गुरूणां श्रद्धया[3] गौरवं शास्तृसंज्ञाया गुरुशुश्रूषां पारमितास्तद्योगपर्येष्टिम्[4]। इमान् सुभूते बोधिसत्त्वेन महासत्त्वेन द्वितीयायां भूमौ वर्तमानेनाष्टौ धर्मान् मनसिकृत्वा प्रतिपत्तव्यम्[5]।

पु० सु० बो० महासत्त्वेन[7] तृतीयायां भूमौ वर्तमानेन पञ्चसु धर्मेषु स्थातव्यम्। कतमेषु पञ्चसु। यदुत बाहुश्रुत्येऽतृप्ततायां तत्र चाक्षरानभिनिवेशे निरामिषधर्मदानविवरणतायां तया चामन्यनतया बुद्धक्षेत्रपरिशोधनकुशलमूलपरिणामनतायां तया चामन्यनतया अमितसंसारापरिखेदनतायां तया चामन्यनतया ह्रीरपत्राप्यव्यवस्थाने तेन चामन्यनतया एषु सु० बो० महासत्त्वेन पञ्चसु धर्मेषु तृतीयायां भूमौ वर्तमानेन स्थातव्यम्।

पु० सु० बो० महासत्त्वेन चतुर्थ्यां भूमौ वर्तमानेन दशसु धर्मेषु स्थातव्यम्। ते[6] च न परित्यक्तव्याः। कतमेषु दशसु। यदुत अरण्यवासोऽल्पेच्छता सन्तुष्टिर्धूतगुणसंलेखानुत्सर्जनं शिक्षाया अपरित्यागः कामगुणविजुगुप्सनं निर्वित्सहगतश्चित्तोत्पादः सर्वास्तिपरित्यागिता अनवलीनचित्तता सर्ववस्तुनिरपेक्षता। इमे सु० दश धर्मा बो० महासत्त्वेन चतुर्थ्यां भूमौ वर्तमानेन न परित्यक्तव्या। एषु च स्थातव्यम्।

पु० सु० बो० महासत्त्वेन पञ्चम्यां भूमौ वर्तमानेन दश धर्मा परिवर्जयितव्याः। कतमे दश। यदुत गृहिप्रव्रजितसंस्तवः परिवर्जयितव्यः। [7]कुलमात्सर्यं प०[8]। संगणिकास्थानं प०। आत्मोत्कर्षणं प०। परपंसनं प०। दशाकुशलाः कर्मपथाः प०। अधिमानस्तम्भौ प०। विपर्यासाः प०। विचिकित्सा प०। रागद्वेषमोहाधिवासनाः प०। इमे सु० दश धर्मा बो० महासत्त्वेन पञ्चम्यां भूमौ वर्तमानेन प०।

---

1 पु० सु० = पुनरपरं सुभूते

2 A & $C_1$ त्यागतया

3 $C_1$ शुद्धया

4 A० स्तद्याग

5 $C_2$ प्रतिवर्त्तव्यं

6 $C_2$ तेन च

7 $C_1$ कुशलमा० ; A कलमा०

8 प० = परिवर्जयितव्यम् or परिवर्जयितव्याः

पु० सु० बो० महासत्त्वेन षष्ठ्यां भूमौ वर्तमानेन षड् धर्माः परिपूरयितव्याः। कतमे षट्। यदुत षट् पारमिताः परिपूरयितव्याः। अपरे षड् धर्माः परिवर्जयितव्याः। कतमे षट्। श्रावकचित्तं प०[1]। प्रत्येकबुद्धचित्तं प०। परित्रसनाचित्तं[2] प०। याचनकं दृष्ट्वा नावलीयते। सर्ववस्तूनि[3] च त्याज्यानि न च दौर्मनस्यचित्तमुत्पादयितव्यं न च याचनकविक्षेपः कर्तव्यः। इमे सु० षड् धर्मा बो० महासत्त्वेन षष्ठ्यां भूमौ वर्तमानेन परिपूरयितव्याः। अपरे षड् धर्माः परिवर्जयितव्याः।

पु० सु० बो० महासत्त्वस्य सप्तम्यां भूमौ वर्तमानस्य विंशतिः धर्मा न भवन्ति। कतमे विंशतिः। यदुत आत्मग्राहोऽस्य न भवति सत्त्वग्राहो जीवग्राहः पुद्गलग्राह उच्छेदग्राहः शाश्वतग्राहः। निमित्तसंज्ञा हेतुदृष्टिः स्कन्धाभिनिवेशो धात्वभिनिवेशः। आयतनमृद्धिस्त्रैधातुके प्रतिष्ठानं त्रैधातुकाध्यवसानं त्रैधातुके आलयो[4] बुद्धनिश्रयदृष्ट्यभिनिवेशो धर्मनि०[5] संघनि० शीलनि० शून्या धर्मा इति विवादः शून्यताविरोधश्चास्य न भवति। इमे सु० विंशतिर्धर्मा बो० महासत्त्वस्य सप्तम्यां भूमौ वतमानस्य न भवन्ति। तेन विंशतिरेव धर्माः सप्तम्यां भूमौ स्थितेन परिपूरयितव्याः। कतमे विंशतिः। यदुत शून्यतापरिपूरिता[6] निमित्तसाक्षात्क्रिया अप्रणिहितज्ञानं त्रिमण्डलपरिशुद्धिः कृपाकारुण्यञ्च सर्वसत्त्वेषु तेष्वनवमन्यना सर्वधर्मसमतादर्शनं तत्र चानभिनिवेशः। भूतनयप्रतिवेधस्तेन[7] चामन्यना अनुत्पादक्षान्तिरनुत्पादज्ञानमेकनयनिर्देशः। सर्वधर्माणां कल्पनासमुद्घातः। [8]संज्ञादृष्टिविवर्त्तः क्लेशविवर्त्तः[9] शमथनिध्यप्तिः विपश्यनाकौशल्यं दान्तचित्तता[10] सर्वत्राप्रतिहतज्ञानचित्तता अनुनयस्याभूमिर्यत्रेच्छाक्षेत्रगमनं तत्र च बुद्धपर्षन्मण्डले स्थित्वात्मभावसन्दर्शनम्। इमे विंशतिर्धर्मा बो० महासत्त्वेन सप्तम्यां भूमौ वर्तमानेन परिपूरयितव्याः।

---

1 प० = परिवर्जयितव्यं   2 $C_1$ ०त्रसराचित्तं

3 $C_1$ वस्तूनि दान च दौ०   4 $C_1$ & $C_2$ चालया

5 नि० = निश्रयदृष्ट्याभिनिवेशः ; $C_1$ has दृष्टभिः

6 A & $C_1$ पूरिरा   7 Ś. 1457 प्रतिषेधः

8 S. 1457 संज्ञाविवर्त्तः   9 A drops it.   10 A दान्तता

पु० सु० बो० महासत्त्वेन अष्टम्यां भूमौ वर्तमानेन चत्वारो धर्माः परिपूरयितव्याः। कतमे चत्वारः। यदुत सर्वसत्त्वचित्तानुप्रवेशोऽभिज्ञाविक्रीडनं बुद्धक्षेत्रदर्शनन्तेषाञ्च बुद्धक्षेत्राणां यथादृष्टिनिष्पादनता बुद्धपर्युपासनता बुद्धकाययथाभूतप्रत्यवेक्षणता[1]। इमे सु० चत्वारो धर्मा बो० महासत्त्वेनाष्टम्यां भूमौ वर्तमानेन परिपूरयितव्याः।

पु० सु० बो० महासत्त्वेनाष्टम्यां भूमौ वर्तमानेन चत्वारो धर्माः परिपूरयितव्याः। कतमे चत्वारः। यदुत इन्द्रियपरापरज्ञानं बुद्धक्षेत्रपरिशोधनं मायोपमस्य समाधेरभीक्ष्णं समापत्तिर्यथा यथा च सत्त्वानां कुशलमूलनिष्पत्तिस्तथा तथात्मभावमभिनिर्मिमीते संचिन्त्यभवोत्पादनता[2]। इमे सु० बो० महासत्त्वेन अष्टम्यां भूमौ वर्तमानेन चत्वारो धर्माः परिपूरयितव्याः।

पु० सु० बो० महासत्त्वेन नवम्यां भूमौ वर्तमानेन द्वादश धर्माः परिपूरयितव्याः। कतमे द्वादश। यदुत अनन्तप्रणिधानपरिग्रहः। स यथा यथा प्रणिदधाति तथा तथास्य समृध्यते देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगरुतज्ञानं प्रतिभाननिर्देशज्ञानं गर्भावक्रान्तिसम्पत्कुशलस०[3] जातिस० गोत्रस० परिवारस० जन्मस० नैष्क्रम्यस० बोधिवृक्षस० सर्वगुणपरिपूरणस०। इमे सुभूते बो० महासत्त्वेन नवम्यां भूमौ वर्तमानेन द्वादश धर्माः परिपूरयितव्याः।

दशम्यां पुनः सु० बोधिसत्त्वभूमौ वतमानो बो० महासत्त्वस्तथागत एवेति वक्तव्यः।

सुभूतिराह। कतमद्भगवन् बो० महासत्त्वस्याध्याशयपरिकर्म[4]। भगवानाह। या सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः सर्वकुशलमूलसमुदानयनता इदं सुभूते बो० महासत्त्वस्याध्याशयपरिकर्म। तत्र क०[5] हितवस्तुतापरिकर्म यद्बो० महासत्त्वः सर्वसत्त्वानामर्थाय महायानज्ञानपर्येष्टिमापद्यते। इदं बो० महासत्त्वस्य हितवस्तुतापरिकर्म। तत्र क० सर्वसत्त्वसमचित्ततापरिकर्म। यत् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैश्चतुरप्रमाणाभिनिर्हरणा मैत्रीकरुणामुदितोपेक्ष[6]णामिदमु०[7]।

---

1 Mss. वेक्षणतया ; cf. Ś. 1458.

2 Mss. दानतया

3 स० = सम्पत्

4 A आशय ; $C_2$ अध्यात्मय

5 क० = कतमत् बोधिसत्त्वस्य महासत्त्वस्य

6 Mss. ०पेक्षाणायिद०

7 इदमु० = इदमुच्यते + the term explained.

तत्र क० त्यागपरिकर्म। यत् सर्वसत्त्वेभ्योऽविकल्पितं दानं ददाति इदमु० । तत्र क० कल्याणमित्रसेवनापरिकर्म। यानि बो० महासत्त्वस्य कल्याणमित्राणि सर्वाकारज्ञतायां[1] समादापयन्ति तेषां मित्राणां सेवना भजना पर्युपासना शुश्रूषा[2] इदमु० बो०[3]। तत्र क० धर्मपर्येष्टिपरिकर्म। यत् सर्वाकारज्ञताप्रतिसंयुक्तेन मनसिकारेण धर्मं पर्येषते न च श्रावकप्रत्येकबुद्धभूमौ पतति इदं बो०। तत्र क० [4]अभीक्ष्णं [5]नैष्क्रम्यपरिकर्म। यत् सर्वजातिष्वव्यवकीर्णोऽभिनिष्क्रामति तथागतशासने प्रव्रजति[6] न चास्य कश्चिदन्तरायो[7] भवति इदं सु० बो०। तत्र क० बुद्धकायस्पृहापरिकर्म। यद् बुद्धविग्रहं दृष्ट्वा न जातु बुद्धमनसिकारेण विरहितो भवति यावत् सर्वाकारज्ञताऽनुप्राप्तो[8] भवति। इदं सु० बो०। तत्र क० धर्मविवरणपरिकर्म। यद्बो० महासत्त्वः सम्मुखीभूतस्य[9] तथागतस्य परिनिर्वृतस्य वा सत्त्वानां धर्मं देशयति आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणं स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं सम्प्रकाशयति यदुत सूत्रं गेयं व्याकरणमितिवृत्तकं जातकं निदानमवदानं तथा वैपुल्याद्भुतधर्मोपदेशाः। इदं बो०। तत्र क० सत्यवचनपरिकर्म। यदुत यथावादितथाकारिता[10] इदं बो०। इमानि सु० बो० महासत्त्वस्य प्रथमायां भूमौ वर्तमानस्य दश परिकर्माणि।

तत्र सुभूते कतमानि बो० महासत्त्वस्य द्वितीयायां भूमौ वर्त्तमानस्याष्टौ परिकर्माणि। इह सुभूते बो० महासत्त्वस्य शीलपरिशुद्धिर्यदुत श्रावकप्रत्येकबुद्धचित्तानाममनसिकारता येऽप्यन्ये[11] दौःशील्यकरा[12] बोधिपरिपन्थनकरा[12] धर्मास्तेषाममनसिकारः। इयं बो० etc.[13] तत्र क०[14] कृतज्ञता कृत-

1 $C_1$ सर्वाकारज्ञतां
2 A & $C_1$ शुश्रूषा
3 इदमु० बो० = इदमुच्यते बो० महासत्त्वस्य + the term explained
4 Mss. आभीक्ष्ण्यं
5 Mss. नैष्क्रम्यं
6 A प्रव्रजितस्य
7 $C_2$ ०रायां
8 A & $C_1$ प्राप्ता
9 $C_2$ ०भूतेऽस्य
10 A ०कारिका
11 $C_2$ अन्य
12 A & $C_1$ ०कारी
13 इयं or इदं बो० etc. = इयं बोधिसत्त्वस्य महासत्त्वस्य + the term explained
14 क० = कतमो or कतम बो० महासत्त्वस्य

वेदिता यद्बो० महासत्त्वो बोधिसत्त्वचर्यां चरन् अल्पमपि [1]कृतमासंसारान् न नाशयति प्रागेव बहु इयं बो० etc. तत्र क० क्षान्तिबलप्रतिष्ठानम्। यत् सर्वसत्त्वानामन्तिके अव्यापादाविहिंसाचित्तता इदं बो० etc. तत्र क० प्रामोद्यप्रीत्यनुभवनता। यत् सर्वसत्त्वपरिपाचनता इयं बो० etc. तत्र क० महाकरुणाया आमुखीभावः। यद्बो० महासत्त्वस्य बोधिसत्त्वचारिकां चरत एवम्भवति एकैकस्य सत्त्वस्यार्थाय गङ्गानदीवालुकोपमान् कल्पान् निरये पचेयं यावन्न[2] स[3] सत्त्वो बुद्धज्ञाने प्रतिष्ठापित इति। एवमेकैकस्य कृतशः सत्त्वस्य[4] य उत्साहो योऽपरिखेदोऽयमुच्यते बो० etc. तत्र क० श्रद्धागौरवम्। यद्बो० महासत्त्वस्य सर्वत्र [5]निहतमानतया सश्रद्धता[6] इदमुच्यते बो० etc. तत्र क० गुरुशुश्रूषाश्रद्दधानता। यद् गुरूणामन्तिके शास्तृसंज्ञा इयमुच्यते बो०। तत्र क०[7] पारमितास्तद्योगपर्येष्टिः[8]। या अनन्यकर्मतया पारमिता-पर्येषणता इयमुच्यते बो०। तत्र क० बाहुश्रुत्यतृप्तता। यत् किञ्चिद्बुद्धैर्भगवद्भिर्भाषितमिह वा लोकधातौ समन्ताद्वा दशदिशि लोके तत् सर्वमाराधयिष्यामीति या अतृप्तता इयं बो०। तत्र क० निरामिषधर्मदानविवरणता। यद्बो० महासत्त्वो धर्मं देशयति। स तेन धर्मदानकुशलेनात्मनो बोधिमपि न प्रतिकांक्षति इयं बो etc. तत्र क० बुद्धक्षेत्रपरिशोधनकुशलमूलपरिणामना यैः कुशलमूलैर्बुद्धक्षेत्रं परिशोधयन् आत्मपरचित्तं परिशोधयति तेषां कुशलमूलानां या परिणामना इयमुच्यते बो० etc. तत्र क० अपरिमितसंसारापरिखेदिता या कुशलमूलोपस्तम्भता यैः कुशलमूलैरुपस्तब्धः सत्त्वानाञ्च[9] परिपाचयति बुद्धक्षेत्रं च परिशोधयति न च जातु खेदमापद्यते यावन्न सर्वधर्मान् सर्वाकारज्ञतां च परिपूरयति इयं बो०। तत्र क० ह्रीरपत्राप्यव्यवस्थानम्। या सर्वश्रावकप्रत्येक-

---

1 A कृतमां मया० ; but see Ś. 1460

2 $C_1$ यावन्त  3 $C_2$ drops it,  4 $C_1$ सत्त्व

5 $C_1$ निहित०  6 A & $C_1$ सप्रद्धता ; $C_2$ सपद्धता

7 क० = कतमा बो० महासत्त्वस्य

8 $C_2$ पारमितासुद्योगप०  9 A सत्त्वांश्च

बुद्धचित्तजुगुप्सनता इदं बो० etc. तत्र क० अरण्यवासापरित्यागिता। या सर्वश्रावकप्रत्येकबोधिसमतिक्रमणता इयं बो० etc. तत्र क० अल्पेच्छता। यद्बो महासत्त्वो बोधिमपि नेच्छति इयं बो० etc. तत्र० क० सन्तुष्टिः। यद्बो० महासत्त्वः सर्वाकारज्ञतामपि न मन्यते इयं बो०। तत्र क० धूतगुणसंलेखानुत्सर्जनता। या गम्भीरेषु धर्मेषु निध्यप्तिः क्षान्तिरियं बो०। तत्र क० शिक्षाया अपरित्यागिता। यः सर्वशिक्षाणामप्रचारः इयं बो० etc. तत्र क० कामगुणजुगुप्सनता। यः कामचित्तस्यानुत्पाद इयं बो० etc. तत्र क० बो० निर्वित्सहगतश्चित्तोत्पादः। यः सर्वधर्माणामनभिसंस्कारोऽयं[1] बो० etc. तत्र क० सर्वास्तिपरित्यागिता। या आध्यात्मिकबाह्यानां धर्माणामग्रहणता[2] इयं बो० etc. तत्र क० अनवलीनचित्तता या विज्ञानस्थितिष्वस्य[3] चित्तं नावलीयते इयं बो० etc. तत्र क० सर्ववस्तुनिरपेक्षता। या सर्ववस्तूनाममनसिकारता इयं बो० etc। तत्र क० गृहिसंस्तवपरिवर्जनता। या बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रमणता उपपादुकताप्रतिलाभमुण्डकाषायप्रावरणता इयं बो० etc. तत्र क० भिक्षुभिक्षुणीसंस्तवपरिवर्जनता। यद्भिक्षुणा वा भिक्षुण्या सह [4]अच्छटिकासंघातमात्रमपि न तिष्ठति न च तैर्विना परित्रसनाचित्तमुत्पादयति इयं बो० etc. तत्र कथं बो०[5] कुलमात्सर्यं परिवर्जयितव्यम्। इह सु० बो० एवं चित्तमुत्पादयितव्यम्। यन्मया सत्त्वानां सर्वसुखोपधानं कर्तव्यं तत्र ते सत्त्वाः स्वपुण्यैरेव सुखिता[6] नात्र मया मात्सर्यचित्तमुत्पादयितव्यम्। इदं बो० कुलमात्सर्यपरिवर्जनता[7]। तत्र कथं बो० सङ्गणिकास्थानं परिवर्जयितव्यम्। यत्र बो० महासत्त्वस्य सङ्गणिकास्थानस्थितस्य श्रावकप्रत्येकबुद्धप्रतिसंयुक्ता कथा[8] स्यात्तत्प्रतिसंयुक्तं वा चित्तोत्पादमुपादयेन्न तत्र बो० महासत्त्वेन स्थातव्यम्। इयं बो० etc. तत्र कथं बो० महासत्त्वेन आत्मोत्कर्षणा

---

1 $C_1$ धर्माणामनभिसं   2 A ०ग्रफलता ; $C_2$ गहनता

3 A या यद्विज्ञान० ; $C_1$ स्थितिष्वस्य   4 $C_2$ अच्छतिका

5 तत्र कथं बो० = बो० महासत्त्वेन   6 $C_1$ सुखता   7 Mss. वर्जयितव्यम्

8 $C^2$ कथास्यात्तत्पत्ति ; A कथाश्यात्तत्प्रति

परिवर्जयितव्या। या आध्यात्मिकानां धर्माणां असमनुपश्यना इयं बो० etc.* तत्र क० बो० महासत्त्वस्य परपंसनापरिवर्जनता। यदुत बाह्यानां धर्माणामसमनुपश्यना। इयं बो० etc. तत्र कथं बो० महासत्त्वेन दशाकुशलाः कर्मपथाः परि०[1]। तथाह्येते आर्यमार्गस्यान्तरायकराः सुगतेर्वा प्रागेव संबोधेः। एवं हि सु० बो० etc. तत्र कथं बो० महासत्त्वेन अधिमानः परि०। तथाहि स न कञ्चिद्धर्मं समनुपश्यति कुतः पुनरधिकं येनाधिमंस्यते। एवं हि सु० बो० etc. तत्र कथं सु० बो० महासत्त्वेन स्तम्भः परि०। तथाहि तद्वस्तु न समनुपश्यति यत्र स्तम्भमुत्पादयेदेवं हि सु० बो० etc. तत्र कथं सु० बो० महासत्त्वेन विपर्यासाः परि०। सर्ववस्तूनामनुपलब्धितामुपादाय। एवं हि सु० बो० etc. तत्र कथं सु० बो० महासत्त्वेन विचिकित्सा परि०। तथाहि सन्देहापगतान्[2] सर्वधर्मान् समनुपश्यति। एवं हि सु० बो०। तत्र कथं सु० बो० महासत्त्वेन रागद्वेष[3]मोहानामधिवासना परि०। तथा हि रागद्वेषमोहानां वस्तु न समनुपश्यति। एवं हि सु० बो० etc. तत्र कथं बो० महासत्त्वेन षड् धर्माः परिपूरयितव्याः। यदुत षट्पारमिता—दानपारमिता yāvat प्रज्ञापारमिता—इमाः षट् पारमिताः परिपूरयितव्याः। तत्र कथं बो० महासत्त्वेन षड् धर्माः परि०। यदुत श्रावकचित्तं परि०। तत् कस्य हेतोः। तथाहि नैष मार्गो [4]बोधये। प्रत्येकबुद्धचित्तं परि०। त०[5] नै०[6]। परितसनाचित्तं न कर्तव्यम्। त० नै०। याचनकं दृष्ट्वा नावलीनचित्तमुत्पादयितव्यम्। त० नै०। सर्वस्वमपि परित्यज्य न दुर्मनस्को भवति। त० नै०। याचनकविक्षेपो न कर्तव्यः। त० नै०। तत्र कथं बो० महासत्त्वेन आत्मग्राहो न कर्तव्यः। तत् कस्य हेतोः। तथाहि अत्यन्ततया आत्मा न संविद्यते एवं बो० महासत्त्वेन आत्मग्राहो न कर्तव्यः। एवं सत्त्वग्राहो जीवग्राहः पुद्गलग्रा०[7]। त० एते अत्यन्ततया न संविद्यन्ते। एवं सत्त्वजीवपुद्गलग्रा०। तत्र कथं बो० महासत्त्वेन उच्छेदग्रा०। त० न कञ्चिद्धर्मं

---

* बो० etc. = बो० महासत्त्वेन + the term spoken of + परि०

1 परि० = परिवर्जयितव्याः or तव्यः or तव्यम्

2 $C_1$ ०गतात्

3 A & $C_1$ throughout दोष

4 $C_2$ बोद्धये

5 त० = तत् कस्य हेतोस्तथाहि

6 नै० = नैषमार्गो बोधये

7 ग्रा० = ग्राहो न कर्तव्यः

उच्छिद्यते। अत्यन्ततयानुत्पन्नत्वात् सर्वधर्माणां नोच्छेदः एवमुच्छेदग्रा०। तत्र etc.[1] शाश्वतग्रा०। त०[2] यो धर्मो नोत्पद्यते स न शाश्वतो भवति। एवं शाश्वतग्रा०। तत्र etc. निमित्तसंज्ञा नोत्पादयितव्या। त० अत्यन्ततया संक्लेशो न संविद्यते एवं निमित्तसंज्ञा नोत्पादयितव्या। तत्र etc. हेतुदृष्टिर्न कर्तव्या। त० स तां दृष्टिं न समनुपश्यति। एवं हेतुदृष्टिर्न कर्तव्या। एवं स्कन्धेषु धातुष्वायतनेष्वभिनिवेशो न क०[3]। त० ते धर्माः स्वभावेन न संविद्यन्ते। एवं स्कन्धधात्वायतनेष्वभिनिवेशो न क०। तत्र etc. त्रैधातुकेऽभिनिवेशो न क०। त० त्रैधातुकस्वभावो न संविद्यते। एवं त्रैधातुकेऽभिनिवेशो न क०। तत्र etc. त्रैधातुकेऽध्यवसानं न क०। त० तद्वस्तु नोपलभ्यते। एवं त्रैधातुकेऽध्यवसानं न क०। तत्र etc. त्रैधातुके आलयो न क०। त० निःस्वभावत्वादेवं त्रैधातुके आलयो न क०। तत्र etc. बुद्धधर्मसंघनिश्रयो न क०। त० न बुद्धधर्मसंघदृष्टिनिश्रयात् बुद्धधर्मसंघदर्शनं। एवं बुद्धधर्मसंघदृष्टिनिश्रयो न क०। तत्र etc. शीलदृष्टिनिश्रयो न क०। त० न शीलदृष्टिनिश्रयाच्छीलपरिशुद्धिर्भवत्येवं etc. तत्र etc. शून्यतायां विवादो न क०। त० सर्वधर्माः स्वभावेन शून्या न शून्यतया। एवं शून्यतायां[5] विवादो न क०। तत्र etc. शून्यताविरोधो[6] न क०। त० सर्वधर्माः शून्या न शून्यता शून्यतां[7] विरोधयति। एवं etc. तत्र etc. शून्यता परिपूरयितव्या। स्वलक्षणशून्यतामुपादाय [8]परिपूरिर्बो० महासत्त्वस्य शून्यतापरिपूरिरेवं etc. तत्र कतमा बो० महासत्त्वस्य अनिमित्तसाक्षात्क्रिया[9]। यदुत सर्वनिमित्तानाममनसिकारता। इयं etc. तत्र कतमद् बो० महासत्त्वस्य अप्रणिहितज्ञानम्। यत् सर्वत्रैधातुके[10] चित्तस्याप्रतिष्ठानम्। इदम् etc. तत्र कतमा बो०

---

1 तत्र etc. = तत्र कथं बो० महासत्त्वेन  2 त० = तत् कस्य हेतोस्तथाहि

3 क० = कर्त्तव्यः कर्त्तव्या or कर्त्तव्यम्

4 एवं or इयं etc. = एवं or इयं बो० महासत्त्वस्य + the term spoken of.  5 $C_1$ drops a line here.

6 $C_2$ ०निरोधो  7 A drops शून्यतां  8 $C_2$ परिपूरिता

9 A ०मित्तसाक्षात्  10 Mss सर्वधातुके

महासत्त्वस्य त्रिमण्डलपरिशुद्धिः। यदुत दशकुशलकर्मपथपरिशुद्धिरेवं etc.* तत्र etc[1]. सर्वसत्त्वेषु कृपाकरुणापरिपूरिः कर्तव्या। यो महाकरुणायाः प्रतिलाभः[2]। एवं etc. तत्र etc. सर्वसत्त्वा नावमन्तव्याः। यदुत मैत्रीपरिपूर्या। एवं etc. तत्र etc[3]. समतादर्शनम्। यदुतानुत्क्षेपोऽप्रक्षेपः[4] सर्वधर्माणामिदं etc. तत्र etc. भूतनयप्रतिवेधः। यः सर्वधर्मानामप्रतिवेधः। अयं etc. तत्र etc. अनुत्पादक्षान्तिः। या सर्वधर्माणामनुत्पादाय अनिरोधाय अनभिसंस्काराय क्षान्तिरियं etc. तत्र etc. अनुत्पादज्ञानम्। यन्नामरूपानुत्पादज्ञानमिदं etc. तत्र etc. एकनयनिर्देशः। या अद्वयसमुदाचारता अयं etc. तत्र etc. कल्पनासमुद्घातः। या सर्वधर्माणां कल्पना अयं etc. तत्र etc. संज्ञादृष्टिविवर्तः। या सर्वश्रावकप्रत्येकबुद्धभूमेः[5] संज्ञादृष्टिविवर्तनता अयं etc. तत्र etc. क्लेशविवर्तः। यः सर्ववासनानुसन्धिक्लेशोत्सर्गः[6]। अयं etc. तत्र etc. शमथविपश्यनाभूमिः। या सर्वाकारज्ञताज्ञानमियं etc. तत्र etc. [7]दान्तचित्तता। या त्रैधातुकेऽनभिरतिः। इयं etc. तत्र etc. अप्रतिहतज्ञानम्। यो बुद्धचक्षुःप्रतिलम्भः। इदं etc. तत्र etc. अनुनयापसरणज्ञता[8]। या[9] षडायतनिका उपेक्षा। इयं etc. तत्र etc. यत्रेच्छाक्षेत्रगमनम्। यदेकबुद्धक्षेत्रान्न चलति[10] सर्वबुद्धक्षेत्रेषु संदृश्यते न चास्य बुद्धक्षेत्रसंज्ञोत्पद्यते। इदं etc. तत्र etc. सर्वात्मभावदर्शनम्। यद् यथापर्षन्मण्डले आत्मभावदर्शनम्[11]। इदं etc. तत्र etc. सर्वसत्त्वचित्तचरितानुप्रवेशः। यदेकचित्तेन सर्वसत्त्वचित्तचरितज्ञानम्। अयं etc. तत्र etc. अभिज्ञाविक्रीडना याभिरभिज्ञाभिर्विक्रीडमानो बुद्धक्षेत्राद् बुद्धक्षेत्रं संक्रामति बुद्धदर्शनाय न च बुद्धसंज्ञी भवति। इयं etc. तत्र etc. यथादृष्टबुद्धक्षेत्रपरिनिष्पादनता। या त्रिसाहस्रमहासाहस्रलोकधात्वीश्वरचक्रवर्तिमूर्तिस्थितस्य सर्वलोकधातुपरित्यागस्यामन्यनता। इयं

---

* एवं or इदं or अयं etc. = see fn. 4 of p. 222.

1 तत्र etc. = तत्र कथं बो० महासत्त्वेन  2 $C_2$ प्रतिलम्भः

3 तत्र etc. = तत्र कतमो or कतमा or कतमत् महासत्त्वस्य

4 $C_2$ संक्षेपः  5 $C_2$ भूमौ  6 $C_1$ सर्गः  7 $C_1$ दात०

8 $C_2$ ०नयोप ; A ०नपायसरण०  9 A drops it.

10 $C_1$ 'क्षेत्रान्न चलति सर्वबुद्धक्षेत्रान्न चलति

11 $C_1$ पर्षत् सभावदर्शनम्

etc. तत्र etc. बुद्धपर्युपासनता या बुद्धपर्युपासनता सर्वसत्त्वानुग्रहं प्रति। इयं etc. तत्र etc. बुद्धकाययथाभूतप्रत्यवेक्षणता। या धर्मकाययथाभूतप्रत्यवेक्षणता[1]। इयं etc. तत्र etc. इन्द्रियपरापरज्ञानता। या दशसु बलेषु स्थित्वा सर्वसत्त्वानामिन्द्रियपरिपूर्तिप्रज्ञाज्ञानता। इयं etc. तत्र etc. बुद्धक्षेत्रपरिशोधनता। या सर्वसत्त्वचित्तपरिशोधनता। इयं etc. तत्र etc. मायोपमसमाधिः। यत्र समाधौ स्थित्वा सर्वाः क्रियाः करोति न चास्य चित्तप्रचारो भवति। अयं etc. तत्र etc. [2]अभीक्ष्णसमापत्तिः। या बो० महासत्त्वस्य विपाकजः समाधिरियं etc. तत्र etc संचिन्त्यात्मभावपरिग्रहः यद् बो० महासत्त्वो यथा यथा सत्त्वानां कुशलमूलपरिनिष्पत्तिर्भवति तथा तथा सञ्चिन्तयात्मभावस्य परिगृह्णाति। अयं etc. तत्र कथं बो० महासत्त्वस्यानन्तप्रणिधानम्। यद्बो० महासत्त्वः षण्णां पारमितानां परिपूर्णत्वाद् यथा[3] यथा प्रणिधिं प्रणिदधाति तथा तथा समृध्यते। इदं etc. तत्र etc. सर्वसत्त्वरुतज्ञानम् यद्बो० महासत्त्वो निरुक्तिप्रतिसंविदा देवादीनां रुतं प्रतिसंविध्यति। इयं etc. तत्र etc. परिपूर्णप्रतिभानम्। यद्बो० महासत्त्वः प्रतिभानप्रतिसंविदापरिपूर्णप्रतिभाननिर्देशज्ञानं प्रतिविध्यति। इदं etc. तत्र etc गर्भावक्रान्तिसम्पत्[4]। इह बो० महासत्त्वः सर्वासु जातिषु उपपादुक उपपद्यते। इयं etc. तत्र etc. कुलसम्पत्। यद्बो० महासत्त्वः क्षत्रियमहाशालकुलेषु ब्राह्मणमहाशालकुलेषु वा प्रत्याजायते। इयं etc. तत्र etc. गोत्रसम्पत्। यद्बो० महासत्त्वो यस्माद् गोत्रात् पूर्वका बोधिसत्त्वा अभूवंस्तत्र गोत्रे प्रत्याजायते[5]। इयं etc. तत्र etc. परिवारसम्पत्। यद्बो० महासत्त्वो बोधौ[6] सत्त्वान् प्रतिष्ठाप्य बोधिसत्त्वपरिवार एवं भवतीयं etc. तत्र etc. जन्मसम्पत्। यज्जातमात्र एव बो० महासत्त्वः सर्वलोकधातूनवभासेन स्फरति[7] तांश्च सर्वान् षड् विकारान् कम्पयति। इयं etc. तत्र etc. अभिनिष्क्रमणसम्पत्।

---

1 A & $C_2$ ०वेक्षता

2 $C_2$ अभिक; $C_2$ अभिक्ष्ण

3 A drops it.

4 A & $C_2$ सम्यक

5 $C_2$ प्रत्यजाययते

6 A drops it.

7 A ०वभासनभवति ; $C_2$ स्फुरति

यद् बो० महासत्त्वः प्रव्रजितोऽनेकैः सत्त्वकोटीनियुतशतसहस्रैः सार्धमभिनिष्क्रामति गृहात् इयं etc.[1] तत्र etc.[2] बोधिवृक्षव्यूहसम्पत्। यद् बो० महासत्त्वस्य बोधिवृक्षस्य मूलं सौवर्णं भवति स्कन्धो वैदूर्यमयो भवति सर्वरत्नमयाः शाखाः पत्राणि सर्वरत्नमयानि तस्य[3] वृक्षस्य पुष्पगन्धोऽवभासश्च अनन्तान् लोकधातूनवभासेन स्फुरति इयं etc. तत्र etc. सर्वगुणपरिपूरिसम्पत्। या बो० महासत्त्वस्य [4]सत्त्वपरिपाकेन बुद्धक्षेत्रपरिशुद्धिरियम् etc.

तत्र कथं बो० महासत्त्वो दशम्यां भूमौ स्थितः संस्तथागत एवेति वक्तव्यः। यदा बो० महासत्त्वस्य दश पारमिताः परिपूर्णा भवन्ति यावदष्टादशावेणिका बुद्धधर्माः परिपूर्णा भवन्ति सर्वाकारज्ञताज्ञानञ्च सर्ववासनानुसन्धिक्लेशप्रहाणं भवति महाकरुणा च सर्वबुद्धधर्माः परिपूर्णा भवन्ति। एवं हि सुभूते बो० महासत्त्वो दशम्याः पुनर्बोधिसत्त्वभूमेः परन्तथागत एवेति वक्तव्यः।

तत्र कतमा बो० महासत्त्वस्य दशभूमयः[5]। यद्बो० महासत्त्व उपायकौशल्येन सर्वासु पारमितासु चरन् सप्तत्रिंशद्बोधिपक्षेषु धर्मेषु शिक्षितोऽप्रमाणध्यानारूप्यसमापत्तिषु चरन् दशतथागतबलप्रतिसंवित्स्वष्टादशावेणिकेषु बुद्धधर्मेषु चरन् गोत्रभूमिमष्टमकभूमिंदर्शनभूमिंतनुभूमिं वीतरागभूमिं कृताविभूमिं श्रावकभूमिं प्रत्येकबुद्धभूमिं बोधिसत्त्वभूमिं बो० महासत्त्वोऽतिक्रम्य एता नवभूमीरतिक्रम्य बुद्धभूमौ प्रतिष्ठते इयं बो० महासत्त्वस्य दशमी भूमिरेवं हि सु० बो० महासत्त्वो महायानसंप्रस्थितो भवति॥ इति भूमिसम्भारः॥

यत् पुनः सुभूतिरेवमाह। कुतस्तद्यानं निर्यास्यतीति त्रैधातुकान्निर्यास्यति येन सर्वाकारज्ञता तेन स्थास्यति तत् पुनरद्वययोगेन। तत् कस्य हेतोः। तथाहि यच्च महायानं या च सर्वाकारज्ञता उभावेतौ धर्मौ न संयुक्तौ न विसंयुक्तौ अरूपिणौ अनिदर्शनौ अप्रतिघौ एकलक्षणौ यदुतालक्षणौ। तत् कस्य हेतोः। न हि सुभूते अलक्षणौ धर्मौ निर्यातौ वा

1 See p. 222, fn. 4.

2 तत्र etc. = तत्र कतमा बो० महासत्त्वस्य

3 A कस्य

4 A drops सत्त्व

5 A देश०

निर्यातो वा निर्यास्यतो वा धर्मधातोः। स[1] सुभूते निर्याणमिच्छेत्तथतायाः योऽलक्षणानां धर्माणां निर्याणमिच्छेदेवं भूतकोटेरचिन्त्यधातोराकाशधातोः प्रहाणधातोर्विरागकोटेरनुत्पादस्यानिरोधस्याभावस्य स निर्याणमिच्छेद् योऽलक्षणानां धर्माणां निर्याणमिच्छेत् रूपशून्यतायाः स सुभूते निर्याणमिच्छेद् योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। एवं वेदनाशून्यतायाः yāvat विज्ञानशून्यतायाः स etc.[2] तत् कस्य हेतोः। न हि सुभूते रूपशून्यता त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति न वेदनाशून्यता yāvat विज्ञानशून्यता त्रैधातुकात् etc. as before. तत् कस्य हेतोः। तथाहि सुभूते रूपं रूपेण शून्यम् and so on with the other स्कन्धs। चक्षुःशून्यतायाः स etc. एवं श्रोत्रशून्यतायाः yāvat मनःशून्यतायाः स etc. एवं रूपशून्यतायाः yāvat धर्मशून्यतायाः। And so on with विज्ञानशून्यतायाः संस्पर्शशून्यतायाः संस्पर्शवेदयितशून्यतायाः up to मनःसंस्पर्शजवेदयितशून्यतायाः स etc. तत् कस्य हेतोः। न हि सुभूते चक्षुःशून्यता त्रै०[3]। एवं न श्रोत्रशून्यता yāvat न मनःशून्यता त्रै०। In this way all the आयतनs, विज्ञानs, संस्पर्शs, संस्पर्शवेदयितs, up to न मनःसंस्पर्शजवेदयितशून्यता त्रै०। तत् कस्य हेतोः। तथाहि सुभूते चक्षुश्चक्षुषा शून्यं श्रोत्रं श्रोत्रेण शून्यं and so on with the other स्कन्धs, आयतनs, विज्ञानs, संस्पर्शs, संस्पर्शजवेदनाs up to मनःसंस्पर्शजा वेदना मनःसंस्पर्शजया वेदनया शून्या।

स्वप्नस्य स etc.[4] विस्तरेण कर्तव्यम्। एवं मरीच्या मायायाः प्रतिश्रुत्कायाः प्रतिभासस्य प्रतिबिम्बस्य गन्धर्वनगरस्य तथागतनिर्मितस्य स etc. तत् कस्य हेतोः। न हि सुभूते स्वप्नस्य स्वभावस्त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति। एवं न मरीच्याः स्वभावः yāvat न तथागतनिर्मितस्य स्वभावस्त्रैधातुकात् etc. as before. तत् कस्य हेतोः।

---

1 Mss. repeat here स सुभूते निर्याणमिच्छेत्

2 स etc. = स सुभूते निर्याणमिच्छेद् योऽलक्षणानां धर्माणां निर्याणमिच्छेत्

3 त्रै० = त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति

4 See fn 2

तथाहि सुभूते स्वप्नस्वभावः स्वप्नस्वभावेन शून्यः yāvat तथागतनिर्मितस्वभावस्तथागतनिर्मितस्वभावेन शून्यः। इति दर्शनमार्गे प्रथमग्राह्यविकल्पप्रतिपक्षः॥

दानपारमितायाः स० etc. एवं शीलपारमितायाः yāvat प्रज्ञापारमितायाः स० etc. तत् कस्य हेतोः। तथाहि सुभूते यो दानपारमितायाः स्वभावो न स त्रै०[1]। एवं शीलपा०[2] क्षान्तिपा० वीर्यपा० ध्यानपा०। तथाहि यः प्रज्ञापा० स्वभावो न स त्रै०। तत् कस्य हेतोः। तथाहि सु० दानपारमितास्वभावो दानपारमितास्वभावेन शून्यः। And so on with the other पारमिताs।

अध्यात्मशून्यतायाः स सुभूते निर्याणमिच्छेत् योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। तत् कस्य हेतोः। तथाहि योऽध्यात्मशून्यतायाः स्वभावो न स त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति। तत् कस्य हेतोः। तथाहि सुभूते अध्यात्मशून्यता अध्यात्मशून्यतया शून्या। This is the typical form in which the following terms are mentioned: बहिर्धाशून्यता अध्यात्मबहिर्धाशून्यता ; यावत् अभावस्वभावशून्यता ; स्मृत्युपस्थानानि ; सम्यक्प्रहाणानि ; ऋद्धिपादाः ; इन्द्रियाणि ; बलानि ; बोध्यङ्गानि ; मार्गः ; अप्रमाणध्यानारूप्यसमापत्तयः दशतथागतबलानि ; चतुर्वैशारद्यानि ; चतस्रः प्रतिसंविदः ; अष्टादशावेणिकबुद्धधर्माः up to तथाहि सुभूते बुद्धधर्मा बुद्धधर्मैः शून्याः॥ इति दर्शनमार्गे द्वितीयग्राह्यविकल्पप्रतिपक्षः॥

अर्हतः स सुभूते निर्याणमिच्छेत् योऽलक्षणानां धर्माणां निर्याणमिच्छेत्। तत् कस्य हेतोः। तथाहि सुभूते योऽर्हतः स्वभावो न स त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति। तत् कस्य हेतोः। तथाहि सुभूते अर्हत्स्वभावोऽर्हतः स्वभावेन शून्यः। In this way the following terms are mentioned: प्रत्येकबुद्धः, बो० महासत्त्वः, तथागतः up to स्रोत-

---

1 त्रै० = त्रैधातुकान्निर्यास्यति सर्वाकारज्ञतायां स्थास्यति

2 पा० = पारमितायाः

आपत्तिफलस्य स[1] etc. एवं सकृदागामिफलस्य अनागामिफलस्य अर्हत्त्वस्य प्रत्येकबोधेर्मार्गज्ञतायाः सर्वाकारज्ञतायाः स etc. तत् कस्य हेतोः। तथाहि सुभूते यः स्रोतआपत्तिफलस्य स्वभावो न स त्रै०। तत् कस्य हेतोः। तथाहि स्रोतआपत्तिफलस्वभावः स्रोतआपत्तिफलस्वभावेन शून्यः। एवं सकृदागामिफलस्य यः स्वभावोऽनागामिफलस्य यः स्वभावोऽर्हत्वस्य यः स्वभावः प्रत्येकबुद्धत्वस्य यः स्वभावो मार्गज्ञताया यः स्वभावः सर्वाकारज्ञताया यः स्वभावो न स त्रै०[2]। तत् कस्य हेतोः। तथाहि सर्वाकारज्ञतायाः स्वभावः सर्वाकारज्ञतास्वभावेन शून्यः॥ इति दर्शनमार्गे प्रथमग्राहकविकल्पप्रतिपक्षः[3]॥

नाम्नः स[4] etc. एवं निमित्तस्य सङ्केतस्य व्यवहारस्य प्रज्ञप्तेः स [4]etc. तत् कस्य हेतोः। तथाहि सुभूते यो नाम्नः स्वभावो न स त्रै०। तत् कस्य हेतोः। तथाहि सुभूते नामस्वभावो नामस्वभावेन शून्यः। एवं सङ्केतस्य यः स्वभावो व्यवहारस्य यः स्वभावः प्रज्ञप्तेर्यः स्वभावो न स त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति। तत् कस्य हेतोः। तथाहि प्रज्ञप्तिस्वभावः प्रज्ञप्तिस्वभावेन शून्यः। And so on with the following terms,[5] अनुत्पादः अनिरोधः अनभिसंस्कारः up to तथाहि अनभिसंस्कारस्वभावोऽनभिसंस्कारस्वभावेन शून्यः। एवं हि सुभते महायानम्। न स[6] त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति। अचलितं तद्यानम्[7]॥ इति दर्शनमार्गे द्वितीयग्राहकविकल्पप्रतिपक्षः॥

यत् पुनः सुभूतिरेवमाह। क्व तद्यानं स्थास्यतीति। न तद् यानं क्वचित्

---

1 स etc. = स सुभूते निर्याणमिच्छेद् योऽलक्षणां धर्माणां निर्याणमिच्छेत्

2 त्रै० = त्रैधातुकान्निर्यास्यति न सर्वाकारज्ञतायां स्थास्यति

3 A drops विकल्प

4 Mss. omit स.

5 The mss. repeat these later on fully only with the first and the last terms of a category as shown above.

6 Mss. drop here न स.

7 $C_2$ ०यानाम्

स्थास्यति। तत् कस्य हेतोः। तथाहि सु० अस्थिताः[1] सर्वधर्माः। अपि तु सु० अस्थानं[2] न स्थानयोगेन तद् यानं स्थास्यति। तद् यथापि नाम सु० धर्मधातुर्न स्थि०[3]। एवमेव सु० तत् महायानं न स्थि०। तद् यथापि नाम सुभूते अनुत्पादोऽनिरोधोऽसंक्लेशोऽव्यवदानमनभिसंस्कारो न स्थि०। एवमेव सु० तत् महायानं न स्थि०। तथाहि सु० धर्मधातुर्धर्मधातुना शून्यः। तत् कस्य हेतोः। न हि सु० धर्मधातुस्वभावः स्थितो वा अस्थितो वा। तत् कस्य हेतोः। तथाहि सु० धर्मधातुस्वभावो धर्मधातुस्वभावेन शून्यः। एवमनुत्पादोऽनिरोधोऽसंक्लेशोऽव्यवदानमनभिसंस्कारोऽनभिसंस्कारेण शून्यः। तत् कस्य हेतोः। न हि सु० अनभिसंस्कारस्वभावः स्थितो वा अस्थितो वा। तत् कस्य हेतोः। तथाहि सु० अनभिसंस्कारस्वभावोऽनभिसंस्कारस्वभावेन शून्यः। एवं हि सु० तद् यानं न क्वचित् स्थास्यति अस्थितमस्थानयोगेन अचाल्ययोगेन॥ <u>इति भावनामार्गे प्रथमग्राह्यविकल्पप्रतिपक्षः॥</u>

यत् पुनः सुभूतिरेवमाह। कस्तेन यानेन निर्यास्यतीति। न कश्चित्तेन यानेन निर्यास्यति। तत् कस्य हेतोः। तथाहि सु० यच्च तद् यानं येन च निर्यास्यति यश्च[4] निर्यास्यति यतश्च निर्यास्यति सर्व एते धर्मा न संविद्यन्ते एवमसंविद्यमानानां सर्वधर्माणां कतमो धर्मः कतमेन धर्मेण निर्यास्यति। तत् कस्य हेतोः। तथाहि सु० नात्मा उपलभ्यते न सत्त्वो न जीवो yāvat न पश्यक उपलभ्यते आत्मनोऽत्यन्तविशुद्धितामुपादाय। एवं यावत् पश्यकस्यात्यन्तविशुद्धितामुपादाय धर्मधातुर्नो०[5]। एवमनुत्पादो yāvat अनभिसंस्कारो नो०। स्कन्धधात्वायतनानि नो०। प्रतीत्यसमुत्पादो नो०। दानपारमिता नो०। एवं शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा० प्रज्ञापा० नो०। अध्यात्मशून्यता नो०। And in this way all the terms are mentioned as in p. 227, ll. 15-19, 25, p. 228, ll. 1-2 up to सर्वाकारज्ञता नो०। प्रमुदिता भूमिर्नो०। एवं विमला प्रभाकरी

---

1 A अत अस्थिताः 2 A अते अस्थानं ; $C_1$ अस्त्वनं

3 स्थि० = स्थितो नास्थितः or स्थितं नास्थितं।

4 A येश्च 5 नो० = नोपलभ्यते अत्यन्तविशुद्धितामुपादाय

अर्चिष्मती सुदुर्जया[1] अभिमुखी दूरङ्गमा अचला साधुमती धर्ममेघा भूमिर्नो०। पूर्वान्तो नो०। अपरान्तो नो०। प्रत्युत्पन्नो नो०। एवमगतिर्नो०[2] गतिर्नो०। स्थितिर्नो० च्युतिर्नो० उपपत्तिर्नो० हानिर्नो० वृद्धिर्नो० अत्यन्तविशुद्धितामुपादाय।

कस्यानुपलब्ध्या नो०। धर्मधातोरनुपलब्ध्या नो०। तत् कस्य हेतोः। न हि सु० धर्मधातुरुपलभ्यते अनुपलब्ध्या नोपलभ्यते। अनुत्पादस्यानिरोधस्यासंक्लेशस्य अव्यवदानस्य अनभिसंस्कारस्यानुपलब्ध्या नोपलभ्यते अभिसंस्कारः। स्कन्धधात्वायतनानुपलब्ध्या नोपलभ्यन्ते स्कन्धधात्वायतनानि। प्रतीत्यसमुत्पादानुपलब्ध्या नोपलभ्यते प्रतीत्यसमुत्पादः। दानपारमितानुपलब्ध्या नोपलभ्यते दानपारमिता And so on with all the other पारमिताs and terms mentioned in p. 227, ll. 15-19 up to अष्टादशावेणिका बुद्धधर्मा नोपलभ्यन्ते॥ इति भावनामार्गे द्वितीयग्राह्यविकल्पप्रतिपक्षः॥

स्रोतआपन्नः स्रोतआपन्नानु०[3]। तत् कस्य हेतोः। न हि सुभूते स्रोतआपन्न उपलभ्यते अत्यन्तविशुद्धितामुपादाय। एवं सकृदागाम्यनागाम्यर्हन्नर्हदनु० प्रत्येकबुद्धः प्रत्येकबुद्धानु० यावत्तथागतस्तथागतानु०। तत् कस्य हेतोः। न हि सुभूते तथागत उपलभ्यते अत्यन्तविशुद्धितामुपादाय॥ इति भावनामार्गे प्रथमग्राहकविकल्पप्रतिपक्षः॥

स्रोतआपत्तिफलं स्रोतआपत्तिफलानु०। एवं सकृदागामिफलमनागामिफलमर्हत्त्वं प्रत्येकबुद्धत्वं बोधिसत्त्वत्वं बुद्धत्वं बुद्धानु०। एवं प्रमुदिता भूमिर्भूम्यनु० yāvat (for a list of भूमिs see above) धर्ममेघा भूमिर्भूम्यनु० [4]अत्यन्तविशुद्धितामुपादाय।

पुनरपरं सुभूते दशभूमयो भूम्यनु०। कतमा दश। शुक्लविदर्शना भूमिर्गोत्रभूमिरष्टमकभूमिर्दर्शनभूमिस्तनुभूमिः वीतरागभूमिः कृताविभूमिः प्रत्येकबुद्धभूमिर्बोधिसत्त्वभूमिर्बुद्धभूमिः। अध्यात्मशून्यतया प्रथमा भूमिर्नोपलभ्यते।

---

1 A सुदुर्ज्जया

2 नो० = नोपलभ्यते

3 नु० = नुपलब्ध्या नोपलभ्यते

4 A omits अत्यन्त.

बहिर्धाशू०[1] । अध्यात्मबहिर्धाशू० । यावदभावस्वभावशू० । यावद्दशमीभूमिः अध्यात्मशून्यतया दशमीभूमिर्नोपलभ्यते etc. as before, replacing प्रथमा by दशमी up to नोपलभ्यते अत्यन्तविशुद्धितामुपादाय । अध्यात्मशून्यतया सत्त्वपरिपाको नोपलभ्यते etc. as before, replacing दशमीभूमिः by सत्त्वपरिपाकः up to उपादाय । अध्यात्मशून्यतया बुद्धक्षेत्रपरिशुद्धिर्नोपलभ्यते etc. as before, replacing दशमीभूमि by बुद्धक्षेत्रः । अध्यात्मशून्यतया पञ्च चक्षूंषि नोपलभ्यन्ते etc. as before, replacing दशमीभूमिः by पञ्चचक्षूंषि । एवं हि सु० बो० महासत्त्वोऽनुपलम्भयोगेन सर्वधर्माणां महायानेन सर्वाकारज्ञतायां निर्यास्यति ॥ इति भावनामार्गे द्वितीयग्राहकविकल्पप्रतिपक्षः ॥ इत्युक्ता सम्भारप्रतिपत्तिः[2] ॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । महायानं महायानमितीदं भगवन्नुच्यते । सदेवमानुषासुरं लोकमभिभूय निर्यास्यति तेनोच्यते महायानमिति । आकाशसमं तद् यानम् । तद् यथापि नाम भगवन्नाकाशेऽप्रमेयाणामसंख्येयानमपरिमाणानां सत्त्वानाम् अवकाशः । एवमेव भगवन्नस्मिन्महायाने अप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानाम् अवकाशः । एवं हि भगवन् बोधिसत्त्वस्य महायानम् । तद् etc.[3] आकाशस्य नाप्यागमो दृश्यते न निर्गमो न स्थानं दृश्यते । एवमेव०[4] up to न स्थानमुपलभ्यते । तद् etc. आकाशस्य नापि पूर्वान्त उपलभ्यते नापरान्त उपलभ्यते न [5]मध्य उपलभ्यते अध्वसमतामुपादाय । एवमेव etc. up to उपादाय । एवमिदं भगवन् महायानं महायानमित्युच्यते । भगवानाह । एवमेतत्[6] सु० बो० महासत्त्वस्य महायानम् । यदिमाः षड् पारमिता दान-

---

1 शू० = शून्यतया प्रथमा भूमिर्नोपलभ्यते

2 Here ends Ch. X of Ś. and Ch. XI commences.

3 तद etc. = तद यथापि नाम भगवन्

4 एवमेव० = एवमेवास्य भगवन् महायानस्य + the qualities attributed to आकाश

5 $C_2$ मधमुप०

6 A एवमेवन् ; $C_1$ एवमवत्

पारमिता yāvat प्रज्ञापारमिता इदं सु० बो० महासत्त्वस्य महायानम्। पुनरपरं सु० बो० महासत्त्वस्य महायानं यदुत सर्वधारणीमुखानि सर्वसमाधिमुखानि—शूरंगमः समाधिर्विस्तरेण कार्यः यावदसङ्गाकाशविमुक्तिनिरुपलेपः समाधिः। इदं etc[1]। पुनर०[2] यदुत अध्यात्मशून्यता बहिर्धाशून्यता अध्यात्मबहिर्धाशून्यता यावदभावस्वभावशून्यता इदं etc. पुनर० यदुत चत्वारि स्मृत्युपस्थानानि चत्वारि सम्यक्प्रहाणानि yāvat अष्टादशावेणिका बुद्धधर्मा इदं etc.

यत् पुनः सुभूतिरेवमाह। सदेवमानुषासुरं लोकमभिभूय तद् यानं निर्यास्यतीति। कतमश्च सदेवमानुषासुरो लोको यदुत कामधातू रूपधातुरारूप्यधातुः। स चेत् सुभूते कामधातुस्तथता अवितथता अनन्यतथता अविपरीतं भूतं तत्त्वं यथावन्नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मी भावो[3] भविष्यन्नाभावो नैवेदं महायानं सदेवमानुषासुरं लोकमभिभूय निरयास्यत्। यस्मात्तर्हि सुभूते कामधातुः कल्पितो विठपितः सन्दर्शितोऽयथावत् सर्वमनित्यमध्रुवमशाश्वतं विपरिणामधर्मि[4] अभावस्तस्मादिदं महायानं सदेवमानुषासुरं लोकमभिभूय निर्यास्यति। And so on with रूपधातु and आरूप्यधातु। In these terms are the following items dealt with स्कन्धs, धातुs; आयतनs; संस्पर्शs; संस्पर्शजा वेदनाs[5]।

स चेत् सुभूते धर्मधातुर्भावो भविष्यन्नाभावो नैवेदं महायानं सदेवमानुषासुरं लोकमभिभूय निरयास्यत्। यस्मात्तर्हि सुभूते धर्मधातुरभावो न भावस्तस्मात् महायानं सदेवमानुषासुरं लोकमभिभूय निर्यास्यति। एवं तथता भूतकोटिः स चेत् सुभूते अचिन्त्यधातुर्भावो भविष्यन्नाभावो etc. as

---

1 इदं etc. = इदं सुभूते बो० महासत्त्वस्य महायानम्

2 पुनर० = पुनरपरं सुभूते बो० महासत्त्वस्य महायानम्

3 $C_1$ & $C_2$ ० धर्माभावो

4 $C_1$ ०धर्मिः

5 The mss. make the statement fully only with the first and the last item of a class.

before. And so on with the पारमिताs, शून्यताs[1] स्मृत्युपस्थानs[2]। एवं चत्वारि सम्यकप्रहाणानि चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि पञ्चबलानि सप्त बोध्यङ्गानि। स चेत् सुभूते आर्याष्टाङ्गमार्गो भावो etc. as before. स चेत् सुभूते अप्रमाणध्यानारूप्यसमापत्तयोऽभावो etc. as before. एवं दशबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदः स चेत् सुभूते अष्टादशावेणिका बुद्धधर्मा भावः etc. as before. इति अग्रहता-निर्याणम्[3] ॥

स चेत् सुभूते गोत्रभूधर्मा भावो etc. as before. स चेत् सुभूते अष्टमकधर्मा भावो etc. as before. एवं स्रोतआपन्नधर्माः सकृदागामिधर्मा अनागामिधर्मा अर्हद्धर्माः प्रत्येकबुद्धधर्मा बोधिसत्त्वधर्माः। स चेत् सुभूते बुद्धधर्मा भावो etc. as before. स चेत् सुभूते गोत्रभूमिर्भावो etc. as before. एवमष्टमकः स्रोतआपन्नः सकृदागाम्यनागाम्यर्हत्-प्रत्येकबुद्धबोधिसत्त्वः। स चेत् सुभूते बुद्धो भावो etc. as before. स चेत् सुभूते मानुषासुरलोको भावो etc.[4] इति प्रहाणनिर्याणम् ॥

स चेत् सुभूते प्रथमचित्तोत्पादमुपादाय बो० महासत्त्वस्य यावदाबोधिमण्डादेतस्मिन्नन्तरे[5] ये चित्तोत्पादास्ते भावः etc. as before.

स चेत् सुभूते बो० महासत्त्वस्य वज्रोपमं ज्ञानं[6] भावो भविष्यन्नाभावो नैव बो० महासत्त्वः सर्ववासनानुसन्धिक्लेशान्[7] भावान्विदित्वा सर्वाकारवरोपेतं सर्वज्ञज्ञानमनुप्राप्नुयात्। यस्मात् सुभूते बो० महासत्त्वस्य वज्रोपमं

---

1 Henceforth, the mss. mention the शून्यताs thus : अध्यात्मशू० बहिर्धाशू० अध्यात्मबहिर्धाशू० यावदभावस्वभावशू०

2 Cf. Sūtrā. p. 60 : न भावस्तत्र चाभावो नाभावो भाव एव च।
भावाभावाविशेषश्च मायादिषु विधीयते ॥

3 A अयता 4 A & $C_2$ drop here a line or two.

5 A अस्मिन् for एतस्मिन् 6 $C_2$ वज्रोपमं सम्यग्ज्ञानम् 7 A ०क्लेशो न

ज्ञानमभावो[1] न भावस्तस्माद्धो० महासत्त्वः सर्ववासनानुसन्धिक्लेशज्ञानभावानिति[2] विदित्वा सर्वाकारवरोपेतं सर्वज्ञज्ञानमनुप्राप्नोति। एवं महायानं सदेवमानुषासुरं लोकमभिभूय निर्यास्यति।

स चेत् सुभूते तथागतस्यार्हतः सम्यक्संबुद्धस्य द्वात्रिंशत् महापुरुषलक्षणानि भावो भविष्यन्नाभावो नैव तथागता अर्हन्तः सम्यक्संबुद्धाः सदेवमानुषासुरं लोकं तेजसा च श्रिया चाभ्यभविष्यत्। यस्मात् etc.[3] अभिभवन्ति।

स चेत् सुभूते तथागतोऽर्हन् सम्यक्संबुद्धो गङ्गानदीवालुकोपमान् लोकधातूनवभासेनास्फारिष्यत्। यस्मात्तर्हि सु० etc. स्फारति।

स चेत् सुभूते तथागतस्य षष्ठ्यङ्गोपेतः स्वरो भावो भविष्यन्नाभावो नैव तथागतोऽर्हन् सम्यक्संबुद्धो दशसु दिक्षु अप्रमेयासंख्येयान् लोकधातून् स्वरेणाभिव्यज्ञापयिष्यत्। यस्मात्तर्हि etc. अभिविज्ञपयति।

स चेत् सुभूते तथागतस्य त्रिपरिवर्तं द्वादशाकारधर्मचक्रं भावो भविष्यन्नाभावो नैव तथागतस्त्रिपरिवर्तद्वादशाकारं धर्मचक्रं प्रावर्तयिष्यत् अप्रवर्तनीयं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सहधर्मेण। यस्मात्तर्हि etc. तथागतेन प्रवर्तितम्।

स चेत् सुभूते सत्त्वा भावो भविष्यन्नाभावो येषां कृतशस्तथागतेन धर्मचक्रं प्रवर्तितं नैव ते सत्त्वा अनुपधिशेषनिर्वाणधातौ परिनिर्वास्यत्यस्मात्तर्हि etc. परिनिर्वास्यन्ति॥ इत्यधिगमनिर्याणमिति त्रिविधमुद्देशनिर्याणम्॥

यत् पुनः सुभूतिरेवमाह। आकाशसमं तद् यानमिति। एवमेतत् सुभूते एवमेतत् आकाशसमं तद् यानम्। यथाकाशस्य न पूर्वा दिक् प्रज्ञायते न दक्षिणा न पश्चिमा नोत्तरा न विदिशो नाधो नोर्ध्वा दिक् प्रज्ञायते एवमेव

---

1 $C_2$ ज्ञामसंभावो

2 A & $C_2$ drop ति.

3 यस्मात् तर्हि etc. indicate the previous statement in a positive form and the verb used is put in लट.

सुभूते तस्य यानस्य न पूर्वा etc. as before[1] ते०[2]। तद् यथापि नाम सुभूते आकाशं न दीर्घं न ह्रस्वं न वृत्तं न चतुरस्रं न समं न विषमं न नीलं न पीतं न लोहितं नावदातं न मञ्जिष्ठं न स्फटिकरजतवर्णम्। एवमेव सुभूते तत् महायानं न दीर्घं etc. as before ते०। तद् यथापि नाम सुभूते आकाशं नातीतं नानागतं न प्रत्युत्पन्नम्। एवमेव सुभूते तत् महायानं नातीतं etc. as before ते०। तद् यथापि नाम सुभूते आकाशस्य न हानिः न वृद्धिरेवमेव सुभूते तस्य महायानस्य न हानिः etc. as before ते०। तद्०[3] आकाशस्य न संक्लेशो न व्यवदानम्। एवमेव etc.[4] ते० तद्० आकाशस्य नोत्पादो न निरोधो न स्थितिन[5] विष्ठितिर्न स्थितेरन्यथात्वम्। एवमेव etc. ते०। तद्० आकाशं न कुशलं नाकुशलं न व्याकृतं नाव्याकृतम्। एवमेव etc. ते०। तद्० आकाशं न दृष्टं न श्रुतं न मतं न विज्ञातम्। एवमेव etc. ते०। तद्० आकाशं न ज्ञेयं नाज्ञेयं न परिज्ञेयं न परिज्ञातव्यं न प्रहातव्यं न साक्षात्कर्तव्यं न भावयितव्यम्। एवमेव etc. ते०। तद्० आकाशं न विपाको न विपाकधर्मि। एवमेव etc. ते०। तद्० आकाशं न कामधातुपर्यापन्नं न रूपधातुपर्यापन्नं नारूप्यधातुपर्यापन्नम्। एवमेव etc. ते०। तद्० आकाशं न प्रथमचित्तोत्पादो न द्वितीयो न तृतीयो न चतुर्थो न पञ्चमो न षष्ठो न सप्तमो नाष्टमो न नवमो न दशमश्चित्तोत्पादः। एवमेव etc. ते०। तद्० आकाशे न शुक्लविदर्शनाभूमिर्न गोत्रभूमिर्नाष्टमकभूमिर्न दर्शनभूमिर्न तनुभूमिर्न वीतरागभूमिर्न कृताविभूमिः। एवमेव ते०। तद्० आकाशे न स्रोतआपत्तिफलं न सकृदागामिफलं नानागामिफलं नार्हत्त्वं न प्रत्येकबुद्धत्वं न बुद्धत्वम्। एवमेव etc. ते०। तद्० आकाशे न श्रावकभूमिर्न प्रत्येकबुद्धभूमिर्न सम्यक्संबुद्धभूमिः। एवमेव etc ते०। तद्० आकाशं न रूपि नारूपि

---

1 Mss. omit here ते०

2 ते० = तेनोच्यते आकाशसमं तद् यानमिति

3 तद्० = तद् यथापि नाम सुभूते

4 एवमेव etc. = एवमेव सुभूते तस्य महायानस्य + the quality attributed to आकाश

5 $C_1$ विस्थिति

न[1] सनिदर्शनं नानिदर्शनं न सप्रतिघं नाप्रतिघं न संयुक्तं न विसंयुक्तम्। एवमेव etc. ते०। तद्० आकाशं न नित्यं नानित्यं न सुखं न दुःखं नात्मा नानात्मा न शान्तं नाशान्तम्। एवमेव etc. ते०। तद्० आकाशं न शून्यं नाशून्यं न निमित्तं नानिमित्त न प्रणिहितं नाप्रणिहितम्। एवमेव etc. ते०। तद्० आकाशं न विविक्तं नाविविक्तं नालोको नान्धकारः। एवमेव etc. ते०। तद्० आकाशं न लभ्यते नोपलभ्यते[2]। एवमेव etc. ते०। तद्० आकाशं न प्रव्याहारो नाप्रव्याहारः[3]। एवमेव etc. ते०॥ इति [4]समतानिर्याणम्॥

यत् पुनः सुभूतिरेवमाह। यथाकाशेऽप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामवकाशः। एवमेव तस्मिन् महायानेऽप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामवकाश इति। एवमेतत् सुभूते एवमेतत्। यथा etc. (as above ll. 9-10) up to अवकाश इति। तत् कस्य हेतोः। सत्त्वासत्तया हि[5] सुभूते आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। अनेनापि सुभूते पर्यायेण तस्मिन् महायानेऽप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामवकाशः। तत् कस्य हेतोः। तथाहि सुभूते ये च सत्त्वा यच्चाकाशं[6] यच्च महायानं सर्वमेतन्नोपलभ्यते।

पुनरपरं सुभूते सत्त्वासत्तया आकाशासत्ता वेदितव्या आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासत्ता वेदितव्या। एवं हि सुभूते तस्मिन् etc[7]। तथाहि सुभूते ये च सत्त्वा यच्चाकाशं यच्च महायानं यच्चाप्रमेयं सर्वमेवं नोपलभ्यते।

पुनरपरं सुभूते सत्त्वासत्तया आकाशासत्ता etc. as before, replacing only अप्रमेयम् by असंख्येयम् up to नोपलभ्यते।

---

1 A drops स; $C_2$ संनिद०

2 $C_2$ omits it. 3 A व्हारा० 4 $C_2$ समन्ता०

5 A याहि 6 A यथाकाशं

7 तस्मिन् etc. = तस्मिन् महायाने अप्रमेयाणामसंख्येयानामपरिमाणा॰णां सत्त्वानामवकाशः

पुनरपरं सुभूते सत्त्वासत्तया तथागतासत्ता वेदितव्या तथागतासत्तया etc. as before, replacing only अप्रमेयम् by अपरिमाणम्।

पुनरपरं etc. as before p. 236, ll. 16-17 up to महायानासत्ता वेदितव्या। महायानासत्तया असंस्कृतासत्ता वेदितव्या असंस्कृतासत्तयाप्रमेयासत्ता वेदितव्या अप्रमेयासत्तया असंख्येयासत्ता वेदितव्या असंख्येयासत्तया अपरिमाणासत्ता वेदितव्या अपरिमाणासत्तया सर्वधर्मासत्ता वेदितव्या[1]। एवं हि सुभूते तस्मिन् etc. तत् कस्य हेतोः। तथाहि सुभूते ये च सत्त्वा यश्च तथागतो यच्चाकाशं यच्च महायानं यच्चासंस्कृतं[2] यच्चाप्रमेयं यच्चासंख्येयं यच्चापरिमाणं ये च सर्वधर्माः सर्व एते नोपलभ्यन्ते।

पुनरपरं सुभूते आत्मसत्त्वासत्तया सत्त्वजीवपोषपुरुषपुद्गलमनुजमानवकारकवेदकजानकपश्यकासत्ता[3] वेदितव्या। [4]जानकपश्यकासत्तया भूतकोट्यसत्ता वेदितव्या। भूतकोट्यसत्तया अप्रमेयासंख्येयापरिमाणासत्ता वेदितव्या। अप्रमेयासंख्येयापरिमाणासत्तया सर्वधर्मासत्ता वेदितव्या। एवं हि सु० तस्मिन् etc. तत् कस्य हेतोः। तथाहि सुभूते यश्चात्मा यश्च यावज्जानकपश्यको या च भूतकोटिः यच्चाप्रमेयमसंख्येयमपरिमाणं ये च सर्वधर्माः सर्व एते नोपलभ्यन्ते[5]।

पुनरपरं सुभूते आत्मसत्त्वासत्तया यावज्जानकपश्यकासत्ता वेदितव्या। यावज्जानकपश्यकासत्तया अचिन्त्यधात्वसत्ता वेदितव्या। अचिन्त्यधात्वसत्तया रूपस्कन्धासत्ता वेदितव्या। रूपस्कन्धासत्तया वेदना yavāt विज्ञानस्कन्धासत्ता वेदितव्या[6]। विज्ञानस्कन्धासत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासंख्येयापरिमाणासत्ता वेदितव्या। अप्रमेयासंख्येयापरिमाणासत्तया सर्वधर्मासत्ता वेदितव्या। एवं हि सुभूते तस्मिन् etc. तत् कस्य हेतोः। तथाहि सुभूते यश्चात्मा यावद् ये च सर्वधर्माः सर्व एते नोपलभ्यन्ते।

---

1 A drops two lines here.

2 A drops it.

3 $C_1$ आत्मसत्त्वासत्तया यावज्जानकपश्यकासत्ता

4 $C_1$ यावज्जानकपश्यक

5 $C_2$ सर्वेमेते नोपलभ्यते

6 A & $C_2$ make a mess here.

पुनरपरं सुभूते आत्मसत्त्वासत्तया यावज्ज्ञानकपश्यकासत्ता वेदितव्या[1]। यावज्ज्ञानकपश्यकासत्तया चक्षुरसत्ता वेदितव्या। चक्षुरसत्तया श्रोत्रघ्राणजिह्वाकायमनोऽसत्ता वेदितव्या। मनोऽसत्तया आकाशासत्ता वेदितव्या। आकाशासत्तया महायानासत्ता वेदितव्या। महायानासत्तया अप्रमेयासंख्येयापरिमाणासत्ता वेदितव्या। अप्रमेयासंख्येयापरिमाणासत्तया सर्वधर्मासत्ता वेदितव्या। एवं हि सुभूते तस्मिन् महायाने अप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामवकाशः। तत् कस्य हेतोः। तथाहि सुभूते यश्चात्मा यावद् ये च सर्वधर्माः सर्व एते नोपलभ्यन्ते।

पुनरपरं etc. as before. ll. 1-2 (read instead of चक्षुः) दानपारमितासत्ता वेदितव्या दानपारमितासत्तया[2] शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा० प्रज्ञापारमितासत्ता वेदितव्या। प्रज्ञापारमितासत्तया आकाशासत्ता etc.

पुनरपरं etc. as before, ll. 1-2 (read instead of चक्षुः) अध्यात्मशून्यता बहिर्धाशून्यता अध्यात्मबहिर्धाशून्यता यावदभावस्वभावशून्यतासत्ता वेदितव्या। अभावस्वभावशून्यतासत्तया आकाशासत्ता etc.

पुनरपरं etc. as before, ll. 1-2 (read instead of चक्षुः) स्मृत्युपस्थानासत्ता वेदितव्या स्मृत्युपस्थानासत्तया सम्यक्प्रहाणासत्ता वेदितव्या सम्यक्प्रहाणासत्तया ऋद्धिपादासत्ता वेदितव्या। In this way all the terms of this group are mentioned up to आवेणिकबुद्धधर्मासत्तया आकाशासत्ता etc.

पुनरपरं etc. as before गोत्रभूम्यसत्ता वेदितव्या। गोत्रभूम्यसत्तया अष्टमकभूम्यसत्ता वेदितव्या and so on with the other terms of this group (see p. 230, l. 23) up to कृताविभूम्यसत्तया आकाशासत्ता etc.

---

1 Mss. drop it.

2 Mss. दानपारमितया सत्तया

पुनरपरं etc. as before स्रोतआपन्नासत्ता वेदितव्या स्रोतआपन्नसत्तया सकृदागाम्यसत्ता वेदितव्या and so on with the other terms of this group up to प्रत्येकबुद्धासत्तया आकाशासत्ता etc.

पुनरपरं etc. as before श्रावकयानासत्ता वेदितव्या श्रावकयानासत्तया प्रत्येकबुद्धयानासत्ता वेदितव्या प्रत्येकबुद्धयानासत्तया तथागतासत्ता वेदितव्या तथागतासत्तया सर्वाकारज्ञतासत्ता वेदितव्या। सर्वाकारज्ञतासत्तया आकाशासत्ता etc.

तद् यथापि नाम सुभूते निर्वाणधातावप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामवकाशः। एवमेव सुभूते तस्मिन् महायाने अ०[1]। तद् यथापि नाम सुभूते आकाशे अ०। एवमेव सुभूते तस्मिन् महायाने अ०॥

इति सत्त्वार्थनिर्याणम्॥

यदपि सुभूतिरेवमाह। नापि तस्य महायानस्य आगतिर्दृश्यते नापि गतिर्न स्थानं दृश्यत इति। एवमेतत् सुभूते तस्य महायानस्यागतिर्न दृश्यते नापि गतिर्न स्थानं दृश्यते। तत् कस्य हेतोः। अचला हि सुभूते सर्वधर्मास्ते[2] न क्वचिद् गच्छन्ति न कुतश्चिदागच्छन्ति न क्वचित्तिष्ठन्ति। तत् कस्य हेतोः। न हि सुभूते रूपस्य प्रकृतिः कुतश्चिदागच्छति न क्वचिद् गच्छति न क्वचित्तिष्ठति। वेदनायाः संज्ञायाः संस्काराणाम्। न हि सुभूते विज्ञानस्य प्रकृतिः कुतश्चिदागच्छति न क्वचित्तिष्ठति। The above is repeated by substituting प्रकृतिः by तथता, स्वभावः and लक्षणम्। न सुभूते चक्षुषः प्रकृतिर्न तथता न स्वभावो न लक्षणं कुतश्चिदागच्छति न क्वचिद् गच्छति न क्वचित्तिष्ठति। एवं न श्रोत्रस्य न घ्राणस्य न जिह्वाया न कायस्य न सुभूते मनसः प्रकृतिर्न तथता न स्वभावो न लक्षणं कुतश्चिदागच्छति न क्वचिद् गच्छति न क्वचित्तिष्ठति। And so on with पृथिवी, अप्, तेजस्, वायु and आकाशधातुs[3]। Then with धर्मधातुः, तथता, भूतकोटिः, अचिन्त्य-

1 अ० = अप्रमेयाणामसंख्येयाणामपरिमाणानां सत्त्वानामवकाशः

2 $C_2$ ०सत्

3 The Mss. make the statement fully only with the first and the last.

धातुः। Then with पारमिताs स्मृत्युपस्थानानि yāvat मार्गः। Then with अप्रमाणध्यानारूप्यसमापत्तिः yāvat अष्टादशावेणिका बुद्धधर्माः। Then with बोधिः and असंस्कृतः॥ इत्यनाभोगनिर्याणम्॥

यदपि तत् सुभूतिरेवमाह। नास्य यानस्य पूर्वान्त उपलभ्यते नापरान्त उ०[1] न मध्य उ० [2]त्र्यध्वसमं तद् यानं तस्मात् महायानं महायानमित्युच्यते। एवमेतत् सुभूते एवमेतत्। नास्य यानस्य पूर्वान्त उ० etc. as before up to उच्यते। तत् कस्य हेतोः। तथाहि सुभूते [3]अतीतोऽध्वातीतेनाध्वना शून्यः। अनागतोऽध्वा अनागतेनाध्वना शून्यः। प्रत्युत्पन्नोऽध्वा प्रत्युत्पन्नेनाध्वना शून्यः। त्र्यध्वसमता त्र्यध्वसमतया शून्या। महायानं महायानेन शून्यम् बोधिसत्त्वो बोधिसत्त्वेन शून्यः। न सुभूते शून्यता एका वा द्वे वा तिस्रो वा चतस्रो वा पञ्च वा षट् वा सप्त वा अष्ट वा नव वा दश वा तस्मात् त्र्यध्वसमतया [4]सममिदं यानं बो० महासत्त्वस्य नापि तत्र सममुपलभ्यते न विषमं नापि तत्र वा राग उपलभ्यते न विरागः। न दोष उ० नादोषः। न मोह उ० नामोहः। न नाम उ० नानाम। यावन्न कुशलमु० नाकुशलम्। न सास्रवमु० नानास्रवम्। न सावद्यमु० नानवद्यम्। न क्लेश उ० नाक्लेशः। न क्लेशक्षय उ० नाक्लेशक्षयः। न लौकिकमु० न लोकोत्तरम्। न संक्लेश उ० न व्यवदानम्। न संसार उ० न निर्वाणम्। नाप्यत्र नित्यमु० नानित्यम्। नसुखमु० न दुःखम्। नात्मा उ० नानात्मा। न शान्तमु० नाशान्तम्। न कामधातुरु० न कामधातुसमतिक्रमः। न रूपधातुरु० न रूपधातुस[5]०। नारूप्यधातुरु० नारूप्यधातु स०। तत् कस्य हेतोः। तथाहि तस्य स्वभावो नोपलभ्यते अतीतं सुभूते रूपमतीतेन रूपेण शून्यम्। Similarly अनागतं and प्रत्युत्पन्नम्। एवमतीता वेदना संज्ञा संस्काराः। अतीतं विज्ञानमतीतेन विज्ञानेन शून्यम्। Similarly अनागतं and प्रत्युत्पन्नम्। तत् कस्य हेतोः। न शून्यतायामतीतं रूपमुप-

---

1 उ० = उपलभ्यते

2 A अध्व०

3 A अतीतो अतीतेनाध्वना

4 A समतिदं

5 स० = समतिक्रमः

लभ्यते शून्यतैव तावच्छून्या शून्यतायां नोपलभ्यते कुतः पुनः शून्यतायामतीतं रूपमुपलप्स्यते। न शून्यतायामतीता वेदना उपलभ्यते। शू०[1] । कु०[2] अतीता वेदना उपलप्स्यते। And so on with the other three स्कन्धs। एवं न शून्यतायामनागतं रूपं वेदनासंज्ञासंस्कारा विज्ञानमुपलभ्यते। न शून्यतायां प्रत्युत्पन्नं रूपमुपलभ्यते। शू०। कु० प्रत्युत्पन्नं रूपमुपलप्स्यते। And so on with the other स्कन्धs। न शून्यतायामतीतानागतप्रत्युत्पन्नं रूपमुपलभ्यते। शू०। कु० अतीतानागतप्रत्यत्पन्नं रूपमुपलप्स्यते। न शून्यतायाम् then as before putting the other four स्कन्धs in place of रूपम्। शू० कु०।

पूर्वान्ततः सुभूते दानपारमिता नोपलभ्यते। अपरान्ततोऽपि सु० दानपा०[3] । प्रत्युत्पन्नतोऽपि सु० दानपा०। अध्वसमतया दानपा०। न सु० अध्वसमतायामतीताध्वा उपलभ्यते समतैव तावत् समतायां नोपलभ्यते। कुतः पुनः समतायामतीतानागतप्रत्युत्पन्ना दानपारमितोपलप्स्यते। एवं पूर्वान्तापरान्तप्रत्युत्पन्नेष्वध्वसु शीलपा०। पू०[4] क्षान्तिपा०। पू० वीर्यपा०। पू० ध्यानपा०। पूर्वान्ततः सु० प्रज्ञापा० etc. as with दानपा० up to प्रज्ञापारमितोपलप्स्यते।

पुनरपरं सुभूते पू०[5] स्मृत्युपस्थानानि नोपलभ्यन्ते। [6]त्र्यध्वसमतायां स्मृत्युपस्थानानि नोपलभ्यन्ते। न सु० समतायामतीतानागतप्रत्यत्पन्ना ऽध्वान[7] उपलभ्यन्ते। समतैव समतायां नोपलभ्यते। कुतः पुनः समतायामती-

---

1 शू० = शून्यतैव तावच्छून्या शून्यतायां नोपलभ्यते

2 कु० = कुतः पुनः शून्यतायां

3 पा० = पारमिता नोपलभ्यते

4 पू० = पूर्वान्तापरान्तप्रत्युत्पन्नेष्वध्वसु

5 पू० = पूर्वान्तापरान्तमध्येषु। It is another form for पूर्वान्तापरान्तप्रत्युत्पन्नेषु। मध्येषु here signifies प्रत्युत्पन्नेषु। The mss. have repeated पूर्वान्तापरान्तमध्येषु with all the terms of this group. In the next para मध्यतः has been synonymously used for प्रत्युत्पन्नतः।

6 Mss. अध्व०

7 A ०पन्नो ध्यान

तानागतप्रत्युत्पन्नानि स्मृत्युपस्थानानि उपलप्स्यन्ते[1]। एवं सम्यक्प्रहाणानि पू०[2] नो०[3]। ऋद्धिपादाः पू० नो०। And so on with all the other terms of this group up to कुतः पुनः समतायामतीतानागतप्रत्युत्पन्ना अष्टादशावेणिका बुद्धधर्मा उपलप्स्यन्ते।

पुनरपरं सुभूते पूर्वान्ततः पृथग्जनो नोपलभ्यते अपरान्ततः [4]पृ०। प्रत्युत्पन्नतः पृ०। त्र्यध्वसमतया पृ०। तत् कस्य हेतोः। सत्त्वानुपलब्धितामुपादाय। एवं श्रावकप्रत्येकबुद्धबोधिसत्त्वाः। पूर्वान्ततः त०[5]। अपरान्ततः त०। मध्यतः त०। त्र्यध्वसमतया त०। तत् कस्य हेतोः। सत्त्वानुपलब्धितामुपादाय। एवं हि सु० बो० महासत्त्वेन प्रज्ञापारमितायां स्थित्वा त्र्यध्वसु शिक्षित्वा सर्वाकारज्ञता परिपूरयितव्या। इदं सु० बो० महासत्त्वस्य त्र्यध्वसमतया महायानम्। अत्र स्थितो बो० महासत्त्वः सदेवमानुषासुरं लोकमभिभवन् सर्वाकारज्ञतायां निर्यास्यति॥ इत्यन्तनिर्याणम्॥

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। साधु साधु भगवन् सुभाषितमिदं भगवतो बो० महासत्त्वानां महायानम्। अत्र भगवन् महायाने शिक्षमाणैरतीतेऽध्वनि बो० महासत्त्वैः सर्वाकारज्ञता अनुप्राप्ता। अनागता अपि बो० महासत्त्वा अत्र महायाने शिक्षमाणाः सर्वाकारज्ञतामनुप्राप्स्यन्ति। येऽपि भगवन् दशदिशि लोकेऽसंख्येयेषु लोकधातुषु बो० महासत्त्वाः प्रत्युत्पन्नास्तेऽप्यत्र महायाने शिक्षित्वा सर्वाकारज्ञतामनुप्राप्नुवन्ति। तस्मात्तर्हि भगवन् महायानमिदं बो० महासत्त्वानां यदुत त्र्यध्वसमतानाम्। अथ खलु भगवानायुष्मन्तं सुभूतिमेतदवोचत्। एवमेतत् सुभूते एवमेतत्। अत्र महायाने शिक्षित्वा अतीतानागतप्रत्युत्पन्ना बो० महासत्त्वाः सर्वाकारज्ञतामनुप्राप्ता अनुप्राप्स्यन्ति अनुप्राप्नुवन्ति च[6]।

अथ खलु पूर्णो मैत्रायणीपुत्रो भगवन्तमेतदवोचत्। अयं भगवन्

1 A has made a mess here.

2 पृ० = see p. 241, fn. 4

3 नो० = नोपलभ्यन्ते

4 पृ० = पृथग्जनो नोपलभ्यते

5 त० = तथागतो नोपलभ्यते

6 Here ends ch. XI of the S. and ch. XII begins.

सुभूतिः स्थविरस्तथागतेन प्रज्ञापारमितायाः कृतशोऽधीष्टो[1]महायानमुपदेष्टव्यं मन्येत ।

अथ खल्वायुष्मान् सुभूतिर्भगवन्तमेतदवोचत् । मा हैवाहं भगवन् प्रज्ञापारमितां व्यतिक्रम्य महायानमुपदिशामि ।

भगवानाह । न हि सुभूते अनुलोमत्वं प्रज्ञापारमितायां महायानमुपदिशसि । तत् कस्य हेतोः । तथाहि सुभूते ये केचित् कुशला बोधिपक्षा धर्माः श्रावकधर्मा वा प्रत्येकबुद्धधर्मा बोधिसत्त्वधर्मा वा बुद्धधर्मा वा सर्वे ते प्रज्ञापारमितायां संग्रहं समवसरणं गच्छन्ति ।

सुभूतिराह । कतमे भगवन् कुशला बोधिपक्षा धर्माः श्रावकधर्माः etc. as before (ll. 8-9) up to गच्छन्ति ।

भगवानाह । तद् यथा चत्वारि स्मृत्युपस्थानानि चत्वारि सम्यक्प्रहाणानि चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि पञ्च बलानि सप्त बोध्यङ्गानि आर्याष्टाङ्गमार्गाः । शून्यतानिमित्ताप्रणिहितविमोक्षमुखं चत्वार्यप्रमाणानि चत्वारि ध्यानानि चतस्र आरूप्यसमापत्तयः । दानपा० शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा० प्रज्ञापा० । दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदो महामैत्री महाकरुणा अष्टादशावेणिका बुद्धधर्माः । असंप्रमुषितधर्मता सदोपेक्षाविहारिता । इमे सु० कुशला बोधिपक्षा धर्माः श्रावकधर्माः प्रत्येकबुद्धधर्माः etc. as before (ll. 8-9) up to गच्छन्ति ।

यच्च सु० महायान या च ध्यानपा० या च वीर्यपा० या च क्षान्तिपा० या च शीलपा० या च दानपा० यच्च रूपं या च वेदना या च संज्ञा ये च संस्कारा यच्च विज्ञानं यच्च चक्षुर्यच्च श्रोत्रं in this way, all the धातुs ; आयतनs ; संस्पर्शs ; संस्पर्शजा वेदनाs are mentioned then यानि च चत्वारि स्मृत्युपस्थानानि yāvat (see the above list) मार्गो यानि चाप्रमाणानि यानि च ध्यानानि याश्चारूप्यसमापत्तयो यानि

---

1 A कृतशोधीष्टा ; $C_1$ कृतशाधिष्टा ; Ś. 1637 : कृते अध्येषितः

च तथागतबलानि यानि च वैशारद्यानि याश्च चतस्रः प्रतिसंविदो यानि च शून्यतानिमित्ताप्रणिहितानि ये चासंस्कृता धर्मा यच्च दुःखं यश्च समुदयो यश्च निरोधो यश्च मार्गो यश्च कामधातुर्यश्च रूपधातुर्यश्चारूप्यधातुर्या चाध्यात्मशून्यता या च बहिर्धाशून्यता या चाध्यात्मबहिर्धाशून्यता या च यावदभावस्वभावशून्यता ये च समाधयो यानि च धारणीमुखानि ये च यावदष्टादशावेणिका बुद्धधर्मा यश्च तथागतप्रवेदितो धर्मविनयो यश्च धर्मधातुर्या च तथता या च भूतकोटिः यश्चाचिन्त्यधातुर्यच्च निर्वाणम्—सर्व एते धर्मा न संयुक्ता न विसंयुक्ता अरूपिणोऽनिदर्शना अप्रतिघा एकलक्षणा यदुतालक्षणाः। अनेन पर्यायेण सुभूते अनुलोमत्वं प्रज्ञापारमितायां महायानं व्यपदिशसि।

तत् कस्य हेतोः। न हि सुभूते अन्यत् महायानमन्या प्रज्ञापारमिता अन्या ध्यानपा० yāvat अन्या दानपा०। इति हि महायानञ्च प्रज्ञापा० ध्यानवीर्यक्षान्तिशीलदानपा० चाद्वयमेतदद्वैधीकारं न सुभूते अन्यत् महायानं अन्यानि स्मृत्युपस्थानानि इति हि महायानं स्मृत्युपस्थानानि चाद्वयमेतदद्वैधीकारम्। एवं नान्यत् etc. with सम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गाः अप्रमाणध्यानारूप्यसमापत्तयः दशबलवैशारद्यप्रतिसंविदष्टादशावेणिका बुद्धधर्माः। अनेन कारणेन सुभूते अनुलोमत्वं प्रज्ञापारमितायां महायानं व्यपदिशसि॥

इति प्राप्तिनिर्याणम्[1]॥

सुभूतिराह। अपि तु खलु पुनर्भगवन् पूर्वान्ततो बोधिसत्त्वो नोपैति। अपरान्ततो बो०[2]। मध्यतो बो०। रूपापर्यन्ततया बोधिसत्त्वापर्यन्तता[3] वेदितव्या। एवं वेदानासंज्ञासंस्कारविज्ञानापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। रूपं बोधिसत्त्व इति। एवमपि न विद्यते नोपलभ्यते। एवं वे०[4] विज्ञानं बोधिसत्त्व इति। एवमपि न विद्यते नोपलभ्यते। एवं हि भगवन् सर्वेण सर्वं सर्वथा सर्वं बोधिसत्त्वमनुपलभमानोऽसमनुपश्यन् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि।

---

1 A ०निर्याणा

2 बो० = बोधिसत्त्वो नोपैति

3 $C_2$ बोधिसत्त्वोपर्यन्तता

4 वे० = वेदनासंज्ञासंस्काराः

अपि तु खलु पुनर्भगवन्नामधेयमात्रमेतद्[1] यदुत बोधिसत्त्व इति। यथा आत्मा आत्मेति चोच्यते[2] अत्यन्ततया चानभिनिवृत्त आत्मा। [3]एवमभावस्वभावानां धर्माणां कतमद्रूपं यदनभिनिवृत्तम्। एवं कतमे ते[4] वे०[5] कतमत् तद्विज्ञानं यदनभिनिवृत्तम्। ये चानभिनिवृत्ता[6] न ते वे०। यच्चानभिनिवृत्तं न तद्विज्ञानम्। तत् किं[7] अनभिनिवृत्तिमनभिनिवृत्तौ[8] प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामि। न चान्यत्रानभिनिवृत्तेर्बोधिसत्त्व उपलभ्यते यो बोधाय चरेत्। स चेदेवं निर्दिश्यमाने बो० महासत्त्वस्य चित्तं नावलीयते न संलीयते न विप्रतिसारी भवति मानसं नोत्त्रस्यति न संत्रस्यति न सन्त्रासमापद्यते चरति बो० महासत्त्वः प्रज्ञापारमितायाम्।

शारिपुत्र आह। केन कारणेनायुष्मन् सुभूते एवं वदसि पूर्वान्ततो बोधिसत्त्वो नोपैति etc. as in p. 244, ll. 18-19. के०[9] रूपापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या etc. as in p. 244, ll.19-21. के० रूपं बोधिसत्त्व इति। एवमपि न विद्यते etc. as in p. 244, ll. 21-24. के० यावदेव नामधेयमात्रमेतत् etc. as before (ll. 1-6). up to अनुशासिष्यामि के० न चान्यत्रानभिनिवृत्तेर्बोधिसत्त्व उपलभ्यते यो बोधाय चरेत्। के० स चेदेवमुपदिश्यमाने etc. as before (ll. 7-9).

सुभूतिराह। सत्त्वासत्तया आयुष्मन् शारिपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति। सत्त्वशून्यतया आ०[10]। सत्त्वविविक्ततया आ०। सत्त्वास्वभावतया आ०। एवमपरान्ततो मध्यतश्च वक्तव्यम्। तत् कस्य हेतोः। :सत्त्वासत्तय शून्यताविविक्ततास्वभावतापूर्वान्तादीनामनुपलब्धेः। न [11]चान्यत्र सत्त्व

---

1 A ०मात्रेण तद्  2 A वाच्यत  3 A एवमस्व
4 The mss. drop कतमे ते here but mention it in i repetition.  5 वे० = वेदनासंज्ञासंस्काराः
6 The mss. drop ये चानभिनिवृत्ता here but mention it i its repetition.
7 $C_2$ किं मन्यसे अभिनि०  8 $C_1$ ०वृत्तो
9 के० = केन कारणेनायुष्मन् सुभूते एवं वदसि
10 आ० = आयुष्मन् शारिपुत्र पूर्वान्ततो बोधिसत्त्वो नोपैति  11 $C_2$ नुपलं

सत्ताशून्यताविविक्ततास्वभावता अन्यो बोधिसत्त्वोऽन्यत्: पूर्वान्तादि इति हि या च सत्त्वासत्ता यावद् यच्च मध्यं सर्वमेतदद्वैधीकारम्। रूपासत्तया पूर्वान्तापरान्तमध्यतो बोधिसत्त्वो नोपैति। रूपशून्यतया रूपविविक्ततया रूपास्वभावतया पूर्वान्तापरान्तमध्यतो बोधिसत्त्वो नोपैति। एवं with the other स्कन्धs, full statement being made with the last only. एवमायतनेषु[1] धातुषु प्रतीत्यसमुत्पादाङ्गेषु च पूर्वान्तापरान्तमध्यतो बोधिसत्त्वो नोपैतीति वक्तव्यम्। The first and the last पारमिताs are then stated like the स्कन्धs as in full.

तत् कस्य हेतोः। न ह्यायुष्मन् शारिपुत्र दानशीलक्षान्तिवीर्यध्यानप्रज्ञापारमितासत्तायां शून्यतायां विविक्ततायामस्वभावतायां पूर्वान्तापरान्तमध्यान्युपलभ्यन्ते। न च शारिपुत्र अन्या असत्ता अन्या शून्यता अन्या विविक्तता अन्या अस्वभावता अन्यो बोधिसत्त्वः अन्या दानपारमिता yāvat अन्या प्रज्ञापारमिता अन्यानि पूर्वान्तापरान्तमध्यानि। इति ह्यायुष्मन् शारिपुत्र या चासत्ता यावदभावस्वभावता याश्च षट् पारमिता यश्च बोधिसत्त्वो यानि च पूर्वान्तापरान्तमध्यानि सर्वमेतदद्वैधीकारम्। एवं ह्यायुष्मन् शारिपुत्र पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपैति। अध्यात्मशून्यतासत्तया शून्यतया विविक्ततया अस्वभावतया पूर्वान्तापरान्तमध्यतो बोधिसत्त्वो नोपैति। एवं यावदभावस्वभावशून्यतासत्तया etc. as above in l. 17 up to नोपैति।

तत् कस्य हेतोः। न ह्यायुष्मन् शारिपुत्र अध्यात्मशून्यतासत्तायां शून्यतायां विविक्ततायामस्वभावतायां च [2]अभावस्वभावशून्यतासत्तायां शून्यतायां विविक्ततायामस्वभावतायां पूर्वान्तापरान्तमध्यान्युपलभ्यन्ते। न च शारिपुत्र अन्या असत्ता अन्या शून्यता अन्या विविक्तता अन्या अस्वभावता अन्यो बोधिसत्त्वोऽन्यानि पूर्वान्तापरान्तमध्यानि। इति ह्यायुष्मन् शारिपुत्र

---

1 Here ends ch. XII as well as the प्रथमखण्ड: of the Śata. and ch. XIII begins.

2 Mss. drop अभाव.

या चाध्यात्मशून्यता असत्ता शून्यता विविक्तता अस्वभावता यावदभावस्वभावशून्यता असत्ता शून्यता विविक्तता अस्वभावता यश्च बोधिसत्त्वो यानि च पूर्वान्तापरान्तमध्यानि सर्वमेतदद्वयीकारम्। अनेनायुष्मन् शारिपुत्र पर्यायेण पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपति।

पुनरपरमायुष्मन् शारिपुत्र स्मृत्युपस्थानासत्तया शून्यतया विविक्ततया अस्वभावतया पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपैति। In this way सम्यक्प्रहाणर्द्धिपादेन्द्रियाणि yāvat बुद्धधर्माः have been treated to show सर्वमेतदद्वयीकारम्। अनेनायुष्मन् शारिपुत्र पर्यायेण पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपैति।

पुनरपरमायुष्मन् शारिपुत्र सर्वसमाध्यसत्तया सर्वधारणीमुखासत्तया धर्मधात्वसत्तया तथतासत्तया भूतकोट्यसत्तया भूतकोटिशून्यतया भूतकोटिविविक्ततया भूतकोट्यस्वभावतया पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपैति। तत् कस्य हेतोः। न ह्यायुष्मन् शारिपुत्र समाध्यसत्तायां यावद्भूतकोट्यसत्तायां etc. as in p. 246, ll. 20 p. 247, l. 4. substituting भूतकोटि for अध्यात्मशून्यता।

पुनरपरमायुष्मन् शारिपुत्र श्रावकासत्तया शून्यतया विविक्ततया अस्वभावतया पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपैति। प्रत्येकबुद्धासत्तया बोधिसत्त्वासत्तया सर्वज्ञासत्तया सर्वज्ञशून्यतया सर्वज्ञविविक्ततया सर्वज्ञास्वभावतया पूर्वान्तापरान्तमध्येषु बोधिसत्त्वो नोपैति। तत् कस्य हेतोः। न etc. as indicated above in ll. 13-14. substituting श्रावकासत्ता यावद् सर्वज्ञासत्ता for अध्यात्मशून्यतासत्ता॥ इति [1]प्राप्तिनिर्याणप्राप्यप्रतिषेधः॥

यत् पुनरायुष्मन् शारिपुत्र एवं वदसि केन कारणेन रूपापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। वेदनासंज्ञासंस्कारविज्ञानापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्येति। रूपमायुष्मन् शा० आकाशसमम्। वे०[2] आकाशसमम् विज्ञानमायुष्मन् शा० आकाशसमम्। तत् कस्य हेतोः। तद्

---

1 $C_2$ निर्याणे ; $C_1$ drops प्य

2 वे० = वेदनासंज्ञासंस्कारा:

यथापि नाम आयुष्मन् शा० यथा आकाशस्य न पूर्वान्त उपलभ्यते नापरान्त उ०[1] न मध्य उ० अनन्तापर्यन्ततया आकाशमिति च व्यवह्रियते एवमेवायुष्मन् शा० रूपस्य नैव पूर्वान्त उ० नापरान्त उ० न मध्यमु०। तत् कस्य हेतोः। रूपशून्यतामुपादाय। न च शून्यतायाः पूर्वान्तो वा अपरान्तो वा मध्यं वोपलभ्यते। वेदनायाः संज्ञायाः संस्काराणां विज्ञानस्य नैव पूर्वान्त उ० नापरान्त उ० न मध्यमु०। तत् कस्य हेतोः। विज्ञानशून्यतामुपादाय। न च शून्यतायाः पूर्वान्तो वा अपरान्तो वा मध्यं वोपलभ्यते। शून्यतेति च व्यवह्रियते। अनेनायुष्मन् शारिपुत्र पर्यायेण रूपापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या[2]। वे०[3] विज्ञानापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या। एवं व्यस्तसमस्तेषु स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु यावज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासेषु। स्मृत्युपस्थानानि yāvat बुद्धधर्मा आयुष्मन् शा० आकाशसमाः। तत् कस्य हेतोः। तद् यथापि नामायुष्मन् शा० आकाशस्य नैवादिर्नान्तो न मध्यमुपलभ्यते अनन्तापर्यन्ततया आकाशमिति च व्यवह्रियते एवमेवायुष्मन् शा० बुद्धधर्माणां नादिर्नान्तो न मध्यमुपलभ्यते। बुद्धधर्मशून्यतामुपादाय। न च शून्यतायाः पूर्वान्तो वा अपरान्तो वा मध्यं वोपलभ्यते। अनेनायुष्मन् शा० पर्यायेण बुद्धधर्मापर्यन्ततया बोधिसत्त्वापर्यन्तता वेदितव्या।

यत् पुनरायुष्मन् शा० एवं वदसि। केन कारणेन रूपं बोधिसत्त्व इत्येवमपि न विद्यते नोपलभ्यते। वे०विज्ञानं बोधिसत्त्व इत्येवमपि न वि०[4] इति। रूपमायुष्मन् शारिपुत्र रूपेण शून्यम् वे०विज्ञानमायुष्मन् शा० विज्ञानेन शून्यम्। तत् कस्य हेतोः। न ह्यायुष्मन् शा० शून्यतायां रूपं संविद्यते। नापि शून्यतायां बोधिसत्त्वः संविद्यते। वे०। न शून्यतायां

1 उ० = उपलभ्यते

2 Ch. XIII or the printed portion of the A. S. B edition of the S´. ends here.

3 वे० = वेदनासंज्ञासंस्कारा

4 वि० = विद्यते नोपलभ्यते

विज्ञानं संविद्यते नापि शून्यतायां बोधिसत्त्वः संविद्यते। अनेनायुष्मन् शारिपुत्र पर्यायेण रूपं बोधिसत्त्व इति एवमपि न वि०। वे०विज्ञानं बोधिसत्त्व इति एवमपि न वि०।

पुनरपरमायुष्मन् शा० दानपारमिता दानपारमितया शून्या yāvat प्रज्ञापारमिता प्रज्ञापारमितया शून्या। तत् कस्य हेतोः। नहि शून्यतायां दानपारमिता विद्यते न शून्यतायां बोधिसत्त्वो विद्यते एवं शीलपा० yāvat ध्यानपा०। न शून्यतायां प्रज्ञापारमिता विद्यते न शून्यतायां बोधिसत्त्वो विद्यते। अध्यात्मशून्यता आ० शा० अध्यात्मशून्यतया शून्या एवं यावद-भावस्वभावशून्यता अभावस्वभावशून्यतया शून्या। स्मृत्युपस्थानानि स्मृत्युपस्थानैः शून्यानि एवं सम्यक्प्रहाणानि ऋद्धिपादाः yāvat अष्टादशा-वेणिका बुद्धधर्मा अष्टादशावेणिकैः बुद्धधर्मैः शून्या। धर्मधातुर्धर्मधातुना शून्यः समाधिः समाधिना शून्यः and so on with धारणीमुखानि, सर्वज्ञता, मार्गाकारज्ञता, सर्वाकारज्ञता, श्रावकयानं, प्रत्येकबुद्धयानं, बुद्धयानम्। श्रावकत्वेन श्रावकः शून्यः प्रत्येकबुद्धत्वेन प्रत्येकबुद्धः शून्यस्तथागतत्वेन तथागतः शून्यः। तत् कस्य हेतोः। न हि शून्यतायां तथागतो विद्यते न शून्यतायां बोधिसत्त्वो विद्यते। अनेनायु० शा० पर्यायेण रूपं बोधिसत्त्व इति एवमपि न वि०। वे०विज्ञानं बोधिसत्त्व इति एवमपि न वि०।

यदप्यायु० शा० आह। केन कारणेनैवं वदसि। एवमहं बो० महासत्त्वं सर्वेण सर्वं सर्वथा सर्वमनुपलभमानोऽसमनुपश्यन् कतमं बोधिसत्त्वं कतमस्यां प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामीति। रूपमायु० शा० रूपे[1] न सं०[2]। रूपं वेदनायां न सं०। वेदना वेदनायां न सं०। वेदना रूपे न सं०। रूपं वेदना च संज्ञायां न सं०। संज्ञा संज्ञायां न सं०। संज्ञा रूपे न सं०[3] संज्ञा रूपवेदनयोर्न[4] सं०। रूपं वेदनासंज्ञासंस्कारेषु न सं०। संस्काराः संस्कारेषु न सं०। संस्कारा रूपवेदनासंज्ञासु न सं०। रूपवेदनासंज्ञासंस्कारा विज्ञाने न

1 A & $C_1$ add here रूपं
2 सं = संविद्यते नोपलभ्यते
3 $C_1$ omits these words.
4 $C_2$ ०वेदनायां न

सं०। विज्ञानं विज्ञाने न सं०। विज्ञानं रूपवेदनासंज्ञासंस्कारेषु न सं० In this way are treated the धातुs, आयतनs, विज्ञान संस्पर्शs and संस्पर्शजा वेदनाs but they are shortene in some places by the words; तत्रापीतरा इतरासु सा न सं०। स्मृत्युपस्थानानि स्मृत्युपस्थानेषु न सं०। ए सम्यक्प्रहाणानि ऋद्धिपादाः yāvat अष्टादशावेणिका बुद्धधर्मा अष्टादशा वेणिकेषु बुद्धधर्मेषु न सं०। तत्रापीतरे इतरेषु च ते न सं० Similarly are treated अध्यात्मशून्यता and यावदभावस्वभावशून्यता समाधिः and धारणी। पृथग्जनभूमिः गोत्रभूमिरष्टमकभूमिर्दर्शनभूमिस्तनु भूमिर्वीतरागभूमिः कृताविभूमिः प्रत्येकबुद्धभूमिर्बोधिसत्त्वभूमिस्तथागतभूमि सर्वज्ञताभूमिः। स्रोतआपन्न स्रोतआपन्नत्वे न सं०। एवं सकृदागामि अनागामी अर्हन् प्रत्येकबुद्धः प्रत्येकबुद्धत्वे न सं०। बोधिसत्त्वो बोधिसत्त्वत न सं०। तथागतस्तथागतत्वे न सं०। प्रज्ञापारमिता प्रज्ञापारमितायां न सं० प्रज्ञापारमितायामववादानुशासनी न सं०। अववादानुशासन्यां प्रज्ञापारमित न सं०। एवं ह्यायु० शा० सर्वधर्मा संविद्यमानत्वेन अनुपलम्भेन बोधि सत्त्वो न सं०॥ इति प्राप्तिनिर्याणे प्रापकप्रतिषेधः[1] ॥

यत् पुनरायु० शा० एवं वदसि। केन कारणेन नामधेयमात्रमेतत् यदु बोधिसत्त्व इति। केन कारणेनायु० सुभूते एवं वदसि आगन्तुकमेतन्नाम धेयं प्रक्षिप्तं यदुत बोधिसत्त्व इति। तथा ह्यायु० शा० नाम दशभ्य दिग्भ्यो न कुतश्चिदागच्छति न क्वचिद् गच्छति न क्वचित्तिष्ठति सर्वधर्माणामेव बोधिसत्त्वानां नामापि न कुतश्चिदेति न क्वचिद् गच्छति न क्वचित्तिष्ठति आगन्तुकमेतन्नामधेयं तथाहि यद्रूपं यद्वेदना यत्संज्ञा यत्संस्कारा यद्विज्ञा मिति नामधेयं न तद्रूपं न वेदना न संज्ञा न संस्कारा न विज्ञानम्। तत् कस हेतोः। तथाहि नाम शून्यं नामस्वभावेन यच्च शून्यं न तन्नाम। तेन[3] कारणे

---

1 A ०धा

2 C₂ एवं

3 C₂ केन; A तेन तेन

नोच्यते बोधिसत्त्व इति नामधेयमात्रमेतदिति । पुनरपरमायु० शा० नामधेयमात्रमेतद् यदुत दानपारमितेति । न च दानपारमितायां नाम न च नाम्नि दानपारमिता । तत् कस्य हेतोः । यच्च नाम या च दानपारमिता उभयमेतन्न सं०[1] । तस्मान्नामधेयमात्रमेतद् यदुत बोधिसत्त्व इति । एवं नामधेयमात्रमेतद् यदुत शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा० नामधेयमात्रमेतद् यदुत प्रज्ञापा० इति etc. as before putting प्रज्ञा for दान । आ०[2] यदुत बोधिसत्त्व इति । नामधेयमात्रमेतद् यदुत अध्यात्मशू०[3] बहिर्धाशू० अध्यात्मबहिर्धाशू० यावदभावस्वभावशू० । न चाध्यात्मन्यतायां नाम न च नाम्नि अध्यात्मशू० बहिर्धाशू० अध्यात्मबहिर्धाशू० यावद्भावस्वभावशू० । तत् कस्य हेतोः । तथाहि यच्च नाम या चाध्यात्मशू० या च बहिर्धाशू० या चाध्यात्मबहिर्धाशू० या च यावदभावस्वभावशू० सर्व एते न सं० । अनेनायु० शा० पर्यायेण नामधेयमात्रमेतत् यदुत बोधिसत्त्व इति । आ० यदुत स्मृत्युपस्थानानि न च स्मृत्युपस्थानेषु नाम न च नाम्नि स्मृत्युपस्थानानि etc. All other terms of this group are then mentioned, full statement being made with the last, viz. अष्टादशावेणिका बुद्धधर्माः । आ० यदुत समाधिरिति यावत् सर्वज्ञतेति । न च सर्वज्ञतायां नाम न च नाम्नि सर्वज्ञता । तत् कस्य हेतोः । तथाहि यच्च नाम या च सर्वज्ञता उभयमेतन्न सं० ।

यत् पुनरायु० शा० एवं वदसि केन कारणेनोच्यते यथा आत्मात्मेति चोच्यते अत्यन्ततया चानभिनिवृत्त आत्मेति । आत्मा शा० अत्यन्ततया न सं० । कुतः पुनरस्याभिनिवृत्तिर्भविष्यति । अत्यन्ततया आयु० शा० सत्त्वो जीवः पोषः yāvat पश्यको न सं० । कु०[4] । अत्यन्ततया आयु० शा० रूपं न सं० । कु० । वेदनासंज्ञासंस्कारा अत्यन्ततया आयु० शा० विज्ञानं न सं० । कु० । And so on with the धातुs ; आयतनs ; विज्ञानs ; संस्पर्शs ;

1 सं = संविद्यते नोपलभ्यते
2 आ० = आगन्तुकमेतन्नामधेयमात्रमेतद्
3 शू० = शून्यता
4 कु० = कुतः पुनरस्याभिनिवृत्तिर्भविष्यति

संस्पर्शजा वेदनाs ; पारमिताs ; शून्यताs[1] ; स्मृत्युपस्थानs yāvat बुद्धधर्माः up to अत्यन्ततया समाधयो धारणीमुखानि न सं०। कु०। अत्यन्ततया श्रावकः प्रत्येकबुद्धो बोधिसत्त्वस्तथागतोऽर्हन् सम्यक्संबुद्धो न सं०। कु०। अनेनायु० शा० पर्यायेण आत्मात्मेति चोच्यते अत्यन्ततया चानभिनिवृत्त आत्मा।

पुनरपरं यदायु० शा० एवमाह। अभावस्वभावाः सर्वधर्मा इति। एवमेतत्। तत् कस्य हेतोः। तथा ह्यायु० शा० नास्ति सांयोगिकः स्वभावः[3]।

शा० आह। कस्यायु० सु० नास्ति सांयोगिकः स्वभावः।

सु० आह। रूपस्यायु० शा० नास्ति सांयोगिकः स्वभावः। वेदनायाः संज्ञायाः संस्काराणां विज्ञानस्यायु० शा० नास्ति सांयोगिकः स्वभावः। And so on with the धातुs, आयतनs, विज्ञानs, संस्पर्शs, संस्पर्शप्रत्यय-वेदनाs and पारमिताs up to नास्ति प्रज्ञापारमितायाः सांयोगिकः स्वभावः[2]। अनेनायु० शा० पर्यायेणास्वभावाः सर्वधर्माः।

पुनरपरमायु० शा० अनित्याः सर्वधर्मा न कस्यचिद्विगमेन।

शा० आह। कतमे ते[3] आयु० सु० अनित्याः सर्वधर्मा न कस्यचिद्विगमेन।

सु० आह। रूपमायु० शा० अनित्यं न कस्यचिद्विगमेन। वे०विज्ञान-मायु० शा० अनित्यं न कस्यचिद्विगमेन। तत् कस्य हेतोः। तथा ह्यायु० शा० यदनित्यं सोऽभावः क्षयश्च एवं दुःखाः[4] अनात्मानः शान्ताः शून्या अनिमित्ता अप्रणिहिता न [5]कस्यचिद्विगमेन सर्वधर्माः कुशला अनवद्या अनास्रवा निःक्लेशा लोकोत्तरा अव्यवदाना असंस्कृताः। तत् कस्य हेतोः। तथा ह्यायु० शा० योऽसंस्कृतः[6] सोऽभावः क्षयश्चानेनायु० शा० पर्यायेण निःस्वभावाः सर्वधर्मा न कस्यचिद्विगमेन।

पुनरपरं शा० अकूटस्था अविनाशिनः सर्वधर्माः।

शा० आह। केन कारणेनायु० सु० अकूटस्थाऽविनाशिनः सर्वधर्माः।

---

1 Enumerated as usual in the shortened form.

2 A & $C_1$ drop it.

3 $C_2$ drops it.

4 A दुःखा

5 $C_1$ कश्चिद

6 $C_2$ यद्द असंस्कृताः स्वभावः

सु० आह। रूपमायु० शा० अकूटस्थमविनाशि। तत् कस्य हेतोः। प्रकृतिरस्यैषा। वे० विज्ञानमायु० शा० अ०। त०। प्र०[1]। एवं कुशलमकुशलं सावद्यमनवद्यं सास्रवमनास्रवं संक्लेशं निःक्लेशं लौकिकं लोकोत्तरं [2]संस्कृतमसंस्कृतं संक्लेशो व्यवदानं संसारो निर्वाणं अ०। त०। प्र०। अनेनायु० शा० पर्यायेणाभावस्वभावाः सर्वधर्माः।

यत्पुनरायु० शा० एवमाह। केन कारणेन रूपमनभिसंस्कृतमेवं वे० केन कारणेन विज्ञानमनभिसंस्कृतमिति।

सु० आह। तथा ह्यायु० शा० रूपमनभिनिर्वृत्तं[3] वे०विज्ञानमनभिनिर्वृत्तम्। तत् कस्य हेतोः। तथा ह्यायु० शा० अभिसंस्कर्त्ता[4] नास्ति। चक्षुरायु० शा० अनभिसंस्कृतम्[5]। तत् कस्य हेतोः। तथा ह्यायु० शा० अभिसंस्कर्त्ता नास्ति। एवं श्रोत्रम् yāvan मनोऽनभिसंस्कृतम् etc. as before ll. 10-11. पुनरपरं शा० रूपम् yāvat धर्मा अनभिसंस्कृताः। तत् कस्य हेतोः। तथा ह्यभिसंस्कर्त्ता नोपलभ्यते यावत् सर्वधर्मा अनभिसंस्कृताः। तत् कस्य हेतोः। तथा ह्यभिसंस्कर्त्ता नोपलभ्यते। अनेनायु० शा० पर्यायेण रूपवे० विज्ञानान्यनभिनिर्वृत्तानि।

यत् पुनरायु० शा० एवं वदसि केन कारणेन यदनभिनिर्वृत्तं न तद्रूपं न वेदना न संज्ञा न संस्कारा न विज्ञानमिति।

सु० आह। तथा ह्यायु० शा० रूपं प्रकृतिशून्यम्। यच्च प्रकृतिशून्यं न तस्योत्पादो न व्ययः। यस्य च नोत्पादो न व्ययो न तस्यान्यथात्वं प्रज्ञायते। वे०विज्ञानं प्रकृतिशून्यं etc. as before ll. 18-19. एवं यावत् सर्वधर्माः प्रकृतिशून्या ये च etc. as before ll. 18-19. अनेनायु० शा० पर्यायेण यदनभिनिर्वृत्तं न तद्रूपं yāvan न विज्ञानम्।

---

1 अ० त० प्र० = अकूटस्थमविनाशि। तत् कस्य हेतोः। प्रकृतिरस्यैषा।

2 A संस्तुतमसंस्तुतम् ; $C_2$ संमसंसत्ततं

3 $C_2$ निर्वृत्तं

4 $C_2$ संस्कर्त्ता

5 $C_2$ ०स्कृता

यत् पुनरायु० शा० एवमाह। केन कारणेनैवं वदसि। तत् किमनभिनिवृत्तिमनभिनिवृत्तौ[1] प्रज्ञापारमितायामववदिष्याम्यनुशासिष्यामीति। यथा ह्यायु० शा० या [2]अनभिनिवृत्तिः सा प्रज्ञापारमिता या प्रज्ञापारमिता सा अनभिनिवृत्तिः। इति हि प्रज्ञापारमिता[3] चानभिनिवृत्तिश्चाद्वयमेतदद्वैधीकारम्। अनेनायु० शा० पर्यायेणैवं वदामि। तत् etc. as in ll. 1-2.

यत् पुनरायु० शा० एवमाह। न चान्यत्रानभिनिवृत्तेर्बोधिसत्त्व उपलभ्यते यो बोधाय चरेदिति। तथा ह्यायु० शा० बो० महासत्त्वः प्रज्ञापारमितायाञ्चरन् नान्यामनभिनिवृत्तिमन्यं बोधिसत्त्वं समनुपश्यति। इति ह्यनभिनिवृत्तिश्च बोधिसत्त्वश्चाद्वयमेतदद्वैधीकारं नान्यत्रानभिनिवृत्तेः रूपं समनुपश्यति etc. as before reading रूप and other स्कन्धs in place of बोधिसत्त्व and then इति हि अनभिनिवृत्तिश्च चक्षुश्चाद्वयमेतदद्वैधीकारम्। And so on with the other धातुs ; आयतनs ; विज्ञानs ; संस्पर्शs ; संस्पर्शप्रत्ययवेदनाs ; स्मृत्युपस्थानानि yāvat मार्गः ; अप्रमाणध्यानारूप्यसमापत्तयः ; पारमिताs up to इति ह्यनभिनिवृत्तिश्च दशबलवैशारद्याष्टादशावेणिका बुद्धधर्माश्चाद्वयमेतदद्वैधीकारम्। यावदिति ह्यनभिनिवृत्तिश्च सर्वधर्माश्चाद्वयमेतदद्वैधीकारम्। अनेनायु० शा० पर्यायेण नान्यत्रानभिनिवृत्तेर्बोधिसत्त्व उपलभ्यते यो बोधाय चरेत्।

यत् पुनरायु० शा० एवमाह। केन कारणेनैवं वदसि। स चेद् बो० महास्त्वस्य एवमुपदिश्यमाने चित्तं नावलीयते न संलीयते न विप्रतिसारी भवति मानसं नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यते चरति बो० महासत्त्वः प्रज्ञापारमितायामिति। तथा ह्यायु० शा० बो० महासत्त्वः सर्वधर्मान् निरीहान् समनुपश्यति मायोपमान् स्वप्नोपमान् मरीच्युपमान् प्रतिश्रुत्कोपमान् प्रतिबिम्बोपमान् प्रतिभासोपमान् [4]निर्मितकोपमान् गन्धर्वनगरोपमान् समनुपश्यति। अनेनायु० शा० पर्यायेण बो० महासत्त्वस्य एवमुपदिश्यमाने चित्तं नावलीयते etc. as before ll. 19-21.

---

1 A ०मनभि ; $C_1$ drops अनभिनिवृत्तिम    2 A अभिनि०

3 A & $C_2$ ०मितायामभि०    4 $C_1$ निर्मितो०

अथ खल्वायु० सु० भगवन्तमेतदवोचत्। यस्मिन् समये भगवन् बो० महासत्त्वः प्रज्ञापारमितायां चरन्निमान् धर्मानुपपरीक्षते। तस्मिन् समये रूपं नोपैति नोपाददाति नाधितिष्ठति नाभिनिविशते न[1] प्रज्ञपयति रूपमेतदिति। यस्मिन् समये etc. as before ll.1-3 with the other स्कन्धs; धातुs; पारमिताs; शून्यताs; स्मृत्युपस्थानs yāvat बुद्धधर्माः, and समाधिधारणीमुखानि up to नाभिनिविशते न प्रज्ञपयति समाधिधारणीमुखानीमानि। तत् कस्य हेतोः। तथाहि भगवन् बो० महासत्त्वः प्रज्ञापारमितायां चरन् रूपं न समनुपश्यति यावद् व्यस्तसमस्तानि स्कन्धधात्वायतनानि प्रतीत्यसमुत्पादं न स०[2]। सप्तत्रिंशद्बोधिपक्षान् धर्मान् न स०। पारमितां न स०। अप्रमाणध्यानारूप्यसमापत्तिदशबलवैशारद्यप्रतिसंविदष्टादशावेणिकबुद्धधर्मान् यावत् सर्वाकारज्ञतां न स०। तत् कस्य हेतोः। तथाहि भगवन् यो रूपस्यानुत्पादो न तद्रूपम्। यो वेदनायाः संज्ञायाः संस्काराणां यो विज्ञानस्यानुत्पादो न तद्विज्ञानमिति हि विज्ञानं चानुत्पादश्चाद्वयमेतदद्वैधीकारम्। And so on with the धातुs; पारमिताs; शून्यताs; स्मृत्युपस्थानानि yāvat बुद्धधर्माः up to बुद्धधर्माश्चानुत्पादश्चाद्वयमेतदद्वैधीकारम्। यो भगवन् धर्मधातोरनुत्पादो न स धर्मधातुः। यस्तथताया आकाशधातोर्भूतकोटेरचिन्त्यधातोर्बोधेर्यः सर्वाकारज्ञताया अनुत्पादो न सा सर्वाकारज्ञतेति हि सर्वाकारज्ञता चानुत्पादश्चाद्वयमेतदद्वैधीकारम्। तत् कस्य हेतोः। तथा हि अनुत्पादो नैको[3] न द्वौ न बहवो न पृथक्। तस्माद् यः सर्वाकारज्ञताया अनुत्पादो न सा सर्वाकारज्ञता।

यो भगवन् रूपस्य व्ययो न तद्रूपम्। या वेदनायाः संज्ञायाः संस्काराणां यो विज्ञानस्य व्ययो न तद्विज्ञानम्। इति हि स्कन्धाश्च व्ययश्चाद्वयमेतदद्वैधीकारम्। तत् कस्य हेतोः। तथाहि व्ययो न एको न द्वौ न बहवो न पृथक्। तस्माद् यः पञ्चानां स्कन्धानां व्ययो न ते पञ्च स्कन्धाः। यो भगवन्

---

1 A & C, नेन

2 स० = समनुपश्यति

3 A नेको

दानपारमिताया व्ययो etc. as with the स्कन्धs ; so also with शून्यताs ; स्मृत्युपस्थानानि yāvat बुद्धधर्माः up to न पृथक्। तस्माद् यो बुद्धधर्माणां व्ययो न ते बुद्धधर्माः।

यत् पुनर्भगवन् उच्यते। रूपमित्यद्वयस्यैषागणनाकृता। वेदनासंज्ञासंस्कारा यत् पुनरुच्यते विज्ञानमित्यद्वयस्यैषागणनाकृता। [1]यत् कस्येति पुनरुच्यते रूपं यावत् सर्वाकारज्ञतेत्यद्वयस्यैषागणनाकृता॥[2] इति प्राप्तिनिर्याणे प्राप्यप्रापकसम्बन्धप्रतिषेधः॥

अथ खल्वायु० शा० आयुष्मन्तं सुभूतिमेतदवोचत्। कथमायु० सु० बो० महासत्त्वः प्रज्ञापारमितायां चरन् इमान् धर्मानुपपरीक्षते। कतम आयु० सु० बोधिसत्त्वः। कतमा प्रज्ञापारमिता। कतमा उपपरीक्षमाणा।

सु० आह। यदायु० शा० एवं वदसि। कतमो बोधिसत्त्व इति। बोधिरेव सत्त्वस्तेनोच्यते बोधिसत्त्व इति। तया च बोध्या सर्वधर्माणामाकारं जानाति। न चात्राभिनिविशते।

कतमेषां धर्माणामाकारान् जानाति। रूपस्याकारान्[3] जानाति न चात्राभिनिविशते। वेदनायाः yāvat विज्ञानस्याकारान् जा०। एवं व्यस्तसमस्तानां स्कन्धधात्वायतनानां प्रतीत्यसमुत्पादस्य सप्तत्रिंशद्बोधिपक्षाणां धर्माणामाकारान् जा०। एवमप्रमाणध्यानारूप्यसमापत्तीनां पारमितानां बलानां वैशारद्यानां प्रतिसंविदामावेणिकानां बुद्धधर्माणाकारान जा०।

शा० आह। कतमे ते सुभूते सर्वधर्माणामाकाराः।

सु० आह। यैरायु० शा० आकारैर्यैं लिङ्गैर्यैं निमित्तैः रूपशब्दगन्धरसस्प्रष्टव्यधर्मा वा आध्यात्मिकबाह्या वा धर्माः संस्कृता असंस्कृता वा आकार्यन्ते इम उच्यन्ते सर्वधर्माणामाकाराः।

यत् पुनरायु० शा० एवं वदसि। कतमा प्रज्ञापारमितेति।

---

1 $C_2$ यत्कस्यतपुरुच्यते ; A & $C_3$ यावत् यत् पु० 3 $C_2$ ०कारा

2 A & $C_2$ ०वेध: 4 जा० = जानाति न चात्रभिनिविशते

आरता आरमितैषा आयु० शा० तेनोच्यते प्रज्ञापारमितेति । कुत आरता आरमिता । स्कन्धेभ्यो धातुभ्य आयतनेभ्य प्रतीत्यसमुत्पादाद्दानपारमितायाः शीलपा० yāvat प्रज्ञापारमिताया आरता आरमिता । अध्यात्मशून्यताया etc. यावदभावस्वभावशून्यताया आरता आरमिता । स्मृत्युपस्थानेभ्य आरता आरमिता । सम्यक्प्रहाण yāvat बुद्धधर्मेभ्य आरता आरमिता । यावत् सर्वज्ञताया आरता आरमिता । एषा तेनोच्यते प्रज्ञापारमितेति । अनेनायु० शा० पर्यायेण आरता आरमिता एषा यदुत प्रज्ञापारमिता ।

यत् पुनरायु० शा० एवं वदसि । कतमा उपपरीक्षणेति । इहायु० शा० बो० महासत्त्वः प्रज्ञापारमितायां चरन् रूपं न नित्यमित्युपपरीक्षते नानित्यमिति न सुखमिति न दुःखमिति नात्मेति नानात्मेति न शान्तमिति नाशान्तमिति न शून्यमिति नाशून्यमिति न निमित्तमिति नानिमित्तमिति न प्रणिहितमिति नाप्रणिहितमिति उपपरीक्षते । न विविक्तमिति नाविविक्तमित्युपपरीक्षते । न वेदनां न संज्ञां न संस्कारान् न विज्ञानं नित्यमित्युपपरीक्षते । नानित्यमिति etc. as in ll. 10-12. एवं चक्षुः श्रोत्रं घ्राणं जिह्वां कायं मनो न नित्यमिति etc. as in ll. 10-12. एवं रूपशब्दगन्धरसस्प्रष्टव्यधर्मा न नित्या इति etc. as before. एवं चक्षुर्विज्ञानं and other विज्ञानs न नित्य etc. as before. एवं चक्षुःसंस्पर्शं and other संस्पर्शs न नित्य इति etc. as before. एवं चक्षुःसंस्पर्शप्रत्ययवेदना and other संस्पर्शप्रत्ययवेदनाs न नित्येति etc. as before. एवं दानपारमिता and other पारमिताs न नित्येति etc. as before. एवमध्यात्मशून्यता and other शून्यताs न नित्येति etc. as before. एवं स्मृत्युपस्थानानि न नित्यानीति etc. as before. एवं सम्यक्प्रहाणानि yāvat बुद्धधर्माः । समाधयः सर्वधारणीमुखानि सर्वज्ञता न नित्येति etc. as before. एवं ह्यायु० शा० बो० महासत्त्वः प्रज्ञापारमितायां चरन् इमान् धर्मानुपपरीक्षते ।

शा० आह । केन कारणेनायु० सु० एवं वदसि यो रूपस्यानुत्पादो न तद्रूपम् । यो वेदनायाः संज्ञायाः संस्काराणां यो विज्ञानस्यानुत्पादो न तद्विज्ञानम् । एवं व्यस्तसमस्तेषु स्कन्धधात्वायतनप्रतीत्यसमुत्पादेषु पारमितासु सर्वशून्यतासु सर्वबोधिपक्षेषु धर्मेषु अप्रमाणध्यानारूप्यसमापत्तिषु बलेषु वैशारद्येषु

प्रतिसंवित्सु समाधिधारणीमुखेष्वभिज्ञासु अष्टादशावेणिकेषु बुद्धधर्मेषु यः सर्वाकारज्ञताया अनुत्पादो न सा सर्वाकारज्ञतेति।

सु० आह। रूपमायु० शा० शून्यं रूपेण। या चायु० शा० शून्यता न तद्रूपं नोत्पादः। अनेनायु० शा० पर्यायेण यो रूपस्यानुत्पादो न तद्रूपम् वेदनासंज्ञासंस्कारा विज्ञानं शून्यं विज्ञानेन। या चायु० शा० शून्यता न तद्विज्ञानं नोत्पादः। अनेनायु० शा० पर्यायेण यो विज्ञानस्यानुत्पादो न तद्विज्ञानम्। दानपारमिता आयु० etc. and so on with other पारमिताs; शून्यताs; स्मृत्युपस्थानानि yāvat बुद्धधर्मा and सर्वाकारज्ञता। अनेनायु० शा० पर्यायेण यः सर्वाकारज्ञताया अनुत्पादो न सा सर्वाकारज्ञता।

शा० आह। किं कारणमायु० सु० एवं वदसि। यो रूपस्य व्ययो न तद्रूपम्। यो वेदनायाः संज्ञायाः संस्काराणां यो विज्ञानस्य व्ययो न तद्विज्ञानमिति। एवं व्यस्तसमस्तेषु etc. as in p. 257, l. 26. p. 258. l. 2 up to प्रतिसंवित्स्वष्टादशस्वावेणिकेषु बुद्धधर्मेषु यः सर्वाकारज्ञताया व्ययो न सा सर्वाकारज्ञाता।

सु० आह। तथा ह्यायु० शा० यश्च व्ययो यच्च रूपं यच्चाद्वैधीकारं या च वेदना या च संज्ञा ये च संस्कारा यच्च विज्ञानं सर्व एते धर्मा न संयुक्ता न विसंयुक्ता अरूपिणोऽनिदर्शना अप्रतिघा एकलक्षणा यदुतालक्षणाः। एवं व्यस्तसमस्तेषु etc. as in p. 257, l. 26. p. 258, l. 2 up to बुद्धधर्मसमाधिधारिणीमुखेषु यश्च व्ययो यावत् सर्वाकारज्ञता यच्चाद्वैधीकारं सर्व एते धर्मा न संयुक्ताः etc. as in l. 17. अनेनायु० शा० पर्यायेण यो रूपस्य व्ययो न तद्रूपम्। एवं वेदनायाः संज्ञायाः संस्काराणां यो विज्ञानस्य व्ययो न तद्विज्ञानम्। एवं व्यस्तसमस्तेषु स्कन्धधात्वायतनप्रतीत्यसमुत्पादशून्यतासु समाधिधारणीमुखेषु यावद् यः सर्वाकारज्ञताया व्ययो न सा सर्वाकारज्ञता।

शा० आह। केन कारणेनायु० सु० एवं वदसि यदिदमुच्यते रूपमित्यद्वयस्यैषा गणना कृतेति। वेदनासंज्ञासंस्काराः। यदिदमुच्यते विज्ञानमित्यद्वयस्यैषा गणना कृतेति यावद् यदिदमुच्यते सर्वाकारज्ञतेत्यद्वयस्यैषा गणना कृतेति।

सु० आह। तथा ह्यायु० शा० नान्योऽनुत्पादोऽन्यद्रूपम्। अनुत्पाद एव

रूपम्। रूपमेवानुत्पादः। वे०[1]। नान्योऽनुत्पादोऽन्यद्विज्ञानम्। विज्ञानमेवानुत्पादोऽनुत्पाद एव विज्ञानम्। अनेनायु० शा० पर्यायेण यदेतदुच्यते रूपमित्यद्वयस्यैषा गणना कृता। वे०। यदेतदुच्यते विज्ञानमित्यद्वयस्यैषा गणना कृता। एवं व्यस्तसमस्तेषु etc. as in p. 257, l. 26. p. 258, l. 2 up to समाधि धारणीमुखेषु तथा ह्यायु० शा० नान्योऽनुत्पादोऽन्या सर्वाकारज्ञता अनुत्पाद एव सर्वाकारज्ञता। सर्वाकारज्ञतैवानुत्पादः। अनेनायु० शा० पर्यायेण यदेतदुच्यते सर्वाकारज्ञतेत्यद्वयस्यैषा गणना कृता।

पुनरपरमायु० सु० भगवन्तमेतदवोचत्। यस्मिन् समये भगवन् बो० महासत्त्वः प्रज्ञापारमितायां चरन्निमान् धर्मानुपपरीक्षते तस्मिन् समये रूपस्यानुत्पादं समनुपश्यति अत्यन्तविशुद्धितामुपादाय। वे०। विज्ञानस्यानु[2]०। आत्मनोऽनु०। एवं सत्त्वजीव yāvat पश्यकस्यानु०। एवं व्यस्तसमस्तानां स्कन्धधात्वायतनप्रतीत्यसमुत्पादाभिज्ञानामनु०। दानपारमिताया अनु० and so on of the other पारमिताs and शून्यताs। स्मृत्युपस्थानानामनु०। एवं सम्यक्प्रहाण yāvat बुद्धधर्माणां सर्वाकारज्ञताया अनु०। पृथग्जनस्यानु०। पृथग्जनधर्माणामनु०। एवं स्रोतआपन्नस्य स्रोतआपन्नधर्माणां yāvat अर्हतो अर्हद्धर्माणां प्रत्येकबुद्धस्य प्रत्येकबुद्धधर्माणां बोधिसत्त्वस्य बोधिसत्त्वधर्माणां बुद्धस्यानु०। बुद्धधर्माणामनु०।

शा० आह। यथाहमायुष्मतः सुभूतेर्भाषितस्यार्थमाजानामि तथा रूपमनुत्पादो वेदनासंज्ञासंस्कारा विज्ञानमनुत्पादो यावद्व्यस्तसमस्ता स्कन्धा अनुत्पादा धातवोऽनुत्पादाः। In this way all the terms mentioned above (ll.11-17)are enumerated up to बोधिसत्त्वो बोधिसत्त्वधर्मा बुद्धोऽनुत्पादो बुद्धधर्मा अनुत्पादाः। यदि चायु० सु० रूपमप्यनुत्पादो यावद्बुद्धधर्मा अप्यनुत्पादाः। नन्वायु० सु० प्राप्तैव श्रावकेण श्रावकबोधिः प्रत्येकबुद्धयानिकेन प्रत्येकबुद्धबोधिः। बोधिसत्त्वेन प्राप्तैव सर्वाकारज्ञता भवति। पञ्चानाञ्च गतीनां भेदो न भविष्यति। प्राप्तैव भवति बोधिसत्त्वेन महासत्त्वेन पञ्चविधा बोधिर्यदि चायु० सु० सर्वधर्मा अनुत्पादाः। किमर्थं स्रोतआपन्नेन

---

1 वे० = वेदनासंज्ञासंस्काराः

2 अनु० = अनुत्पादं समनुपश्यति अत्यन्तविशुद्धितामुपादाय

त्रयाणां संयोजनानां प्रहाणाय मार्गो भावयितव्यः। सकृदागामिना रागदोषमोहानां तनुतायै मार्गो भावयितव्यः। अनागामिना पञ्चानामवरभागीयानां संयोजनानां प्रहाणाय मार्गो भावयितव्यः। अर्हता पञ्चोर्द्धभागीयानां संयोजनानां प्रहाणाय मार्गो भावयितव्यः। प्रत्येकबुद्धयानिकैः प्रत्येकबोधिप्राप्तये मार्गो भावयितव्यः। किं कारणं बोधिसत्त्वो दुष्करचारिकां चरति यानि तानि सत्त्वानां कृतशो दुःखानि प्रत्यनुभवति। किं कारणं तथागतेनाहता सम्यक्संबुद्धेनानुत्तरा सम्यक्संबोधिरभिसंबुद्धा। किं कारणं तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रं प्रवर्तितम्।

सु० आह। नाहमायु० शा० अनुत्पन्नस्य धर्मस्य प्राप्तिमिच्छामि नाप्यभिसमयं नाहमनुत्पादस्य स्रोतआपन्नमिच्छामि। न स्रोतआपत्तिफलं yāvat नार्हत्वं नार्हत्वफलं नानुत्पादस्य प्रत्येकां बोधिमिच्छामि न प्रत्येकबुद्धत्वं नाहमायु० शा० इच्छामि बोधिसत्त्वं दुष्करचारिकां चरन्तं नापि बोधिसत्त्वो दुष्करसंज्ञया चरति। तत् कस्य हेतोः। नहि शक्य आयु० शा० दुष्करसंज्ञायां स्थित्वा अप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामर्थं कर्तुम्[1]। अपि तु खलु पुनरायु० शा० मातृसंज्ञां सर्वसत्त्वेषु जनयित्वा पितृसंज्ञां भ्रातृसंज्ञां पुत्रसंज्ञामात्मसंज्ञां जनयित्वा शक्योऽप्रमेयाणामसंख्येयानामपरिमाणानां सत्त्वानामर्थं कर्तुम्[2]। अपि तु खलु पुनरायु० शा० बो० महासत्त्वेन एवं चित्तमुत्पादयितव्यम्। यथा आत्मा आत्मेति[3] चाच्यते अत्यन्ततया अनुत्पन्न आत्मा एवं [4]सर्वेष्वाध्यात्मिकबाह्येषु धर्मेषु संज्ञोत्पादयितव्या। स चेदेवं संज्ञामुत्पादयिष्यति न दुष्करसंज्ञां भविष्यति। तत् कस्य हेतोः। तथाहि ते बोधिसत्त्वाः सर्वेण सर्वं सर्वथा सर्वं कञ्चिद्धर्मं नोत्पादयन्ते नोपलभन्ते। नाहमायु० शा० अनुत्पादतथागतमिच्छामि नाप्यनुत्तरां सम्यक्संबोधिं नापि धर्मचक्रप्रवर्तनं नापीच्छामि अनुत्पन्नेन धर्मेणानुत्पन्नां प्राप्तिं प्राप्यमाणाम्।

शा० आह। किं पुनरायु० सु० अनुत्पन्नेन धर्मेण उत्पन्ना प्राप्तिः प्राप्यते। अथ उत्पन्नेन धर्मेण अनुत्पन्ना प्राप्तिः प्राप्यते।

---

1 $C_1$ र्थः कर्त्तुः, A र्थकर्त्त'' $C_2$ र्थं कर्त्तुः

2 See previous fn. 3 $C^3$ आत्म अनात्मेति

4 $C_2$ सर्वमध्यात्मिक०

सु० आह। नाहमायु० शा० उत्पन्नेन धर्मेणानुत्पन्नां प्राप्तिं प्राप्यमाणामिच्छामि नाप्यनुत्पन्नेनोत्पन्नां प्राप्तिं प्राप्यमाणाम्।

शा० आह। किं पुनरायु० सु० अनुत्पन्नेन धर्मेण प्राप्तिमिच्छसि। अथवोत्पन्नेन धर्मेण प्राप्तिमिच्छसि।

सु० आह। नाहमायु० शा० अनुत्पन्नेन धर्मेण प्राप्तिमिच्छामि। नाप्युत्पन्नेन धर्मेण प्राप्तिमिच्छामि।

शा० आह। किं पुनरायु० सु० नास्ति प्राप्तिर्नास्त्यभिसमयः।

सु० आह। अस्त्यायु० शा० प्राप्तिरस्त्यभिसमयो न पुनर्द्वयम्। अपि तु खलु पुनरायु० शा० लोकव्यवहारेण प्राप्तिश्चाभिसमयश्च प्रज्ञप्यते लोकव्यवहारेण स्रोतआपन्नो वा सकृदागामी वा अनागामी वा अर्हन् वा प्रत्येकबुद्धो वा बोधिसत्त्वो वा बुद्धो वा प्रज्ञप्यते न पुनः परमार्थेन प्राप्तिर्नाभिसमयो न स्रोतआपन्नो न सकृदागामी नानागामी नार्हन्न प्रत्येकबुद्धो न बोधिसत्त्वो न बुद्धः।

शा० आह। अनुत्पन्नो धर्म इत्यायु० सु० प्रतिभाति मन्त्रयितुम्।

सु० आह। अनुत्पन्नो धर्मोऽनुत्पन्नो धर्म इत्यायु० शा० यद्वदसि प्रतिभाति मन्त्रयितुमिति। अनुत्पादोऽपि ये[1] आयु० शा० प्रतिभाति मन्त्रयितुम्। तत् कस्य हेतोः। तथा ह्यायु० शा० यश्चानुत्पन्नो धर्मो यच्च प्रतिभानं ये च मन्त्रा या चानुत्पत्तिः सर्वे एते धर्मा न संयुक्ता न विसंयुक्ता अरूपिणोऽनिदर्शना अप्रतिघा एकलक्षणा यदुतालक्षणाः।

शा० आह। अनुत्पादोऽप्यायु० सु० मन्त्रः। अनुत्पादः प्रतिभानमनुत्पादो धर्मस्तेऽपि धर्मा अनुत्पन्ना यानारभ्य प्रतिभाति मन्त्रयितुम्।

सु० आह। एवमेतदायु० शा० अनुत्पादो मन्त्रः। The previous statement (ll. 20-21) is repeated. तत् कस्य हेतोः। तथाह्यायु० शा० रूपमनुत्पादः। एवं वे०[2]। विज्ञानमनुत्पादः। एवं व्यस्तसमस्ताः स्कन्धधातवः etc.as in p. 257, l. 27. p. 258, l. 2 up to बुद्धधर्मा अनुत्पादाः।

---

1 ये, it seems, refers to ये मन्त्राः

2 वे० =वेदनासंज्ञासंस्काराः

स्रोतआपन्नः yāvat प्रत्येकबुद्धो बोधिसत्त्वः सर्वज्ञः सर्वाकारज्ञः सर्वाकारज्ञताऽप्यनुत्पादः ।

शा० आह । एवमेतदायु० सु० अनुत्पादो मन्त्रः etc. as before p. 261, ll. 20-21. यावत् स्कन्धधात्वायतन yāvat बुद्धधर्माः । पेयालम् । यावत् सर्वाकारज्ञताप्यनुत्पादः ।

शा० आह । किं पुनरायु० सु० यथैव लोकव्यवहारेण प्राप्तिश्चाभिसमयश्च एवं पञ्चानां गतीनां संभेदो भवति लोकव्यवहारेण परमार्थतो न भवति ।

सु० आह । एवमेतदायु० शा० एवमेतत् । यथैव etc. the previous statement (ll. 6-7) repeated up to नात्र खलु पुनः परमार्थेन । तत् कस्य हेतोः । तथाह्यायु० शा० परमार्थे न कर्म न विपाको नोत्पादो न निरोधो न संक्लेशो न व्यवदानम् ।

शा० आह । किं पुनरायु० सु० अनुत्पन्नो धर्म उत्पद्यते उताहो उत्पन्नो धर्म उत्पद्यते ।

सु० आह । नाहमायु० शा० उत्पन्नस्य धर्मस्य उत्पादमिच्छामि नाप्यनुत्पन्नस्य धर्मस्य उत्पादमिच्छामि ।

शा० आह । कतमस्यायु० सु० अनुत्पन्नस्य धर्मस्योत्पादं नेच्छामि ।

सु० आह । रूपस्याहमायु० शा० अनुत्पन्नस्य धर्मस्य स्वभावशून्योत्पादं नेच्छामि । वे० । विज्ञानस्याहमायु० शा० अनुत्पन्नस्य धर्मस्य स्वभावशून्योत्पादं नेच्छामि । एवं व्यस्तसमस्तानां स्कन्धधात्वायतनानां etc. as in p. 257, l. 27 p. 258, l. 2 up to बुद्धधर्माणां बोधेरप्यहमायु० शा० अनुत्पन्नायाः स्वभावशून्याया उत्पादं नेच्छामि ।

शा० आह । किं पुनरायु० सु० उत्पाद उत्पद्यते अथानुत्पाद उत्पद्यते ।

सु० आह । न ह्यायु० शा० उत्पाद उत्पद्यते नाप्यनुत्पाद उत्पद्यते । तत् कस्य हेतोः । तथाहि आयु० शा० यश्चोत्पादो यश्चानुत्पादो द्वावप्येतौ धर्मौ न संयुक्तौ न विसंयुक्तौ अरूपिणौ अनिदर्शनौ अप्रतिघौ एकलक्षणौ यदुतालक्षणौ । अनेनायु० शा० पर्यायेण नोत्पाद उत्पद्यते नाप्यनुत्पाद उत्पद्यते । अनेनायु० शा० पर्यायेण अनुत्पादो मन्त्रोऽनुत्पादः प्रतिभानम् । अनुत्पादो धर्मस्तेऽपि धर्मा अनुत्पन्ना यानारभ्य प्रतिभाति मन्त्रयितुम् ।

शा० आह। धर्मकायिकानामायुष्मान् सुभूतिरग्रतायां स्थापयितव्यः। तत् कस्य हेतोः। तथाहि आयु० सुभूतिर्यद् यदेव परिप्रश्नीक्रियते ततस्तत[1] एव निःसरति।

सु० आह। धर्मतैषा आयु० शा० तथागतश्रावकाणामनिश्रितसर्वधर्माणां ते यतो यत एव परिपृच्छ्यन्ते ततस्तत एव निःसरन्ति। तत् कस्य हेतोः। यथापि नामानिश्रितत्वात्[2] सर्वधर्माणाम्।

शा० आह। कथमायु० सु० अनिश्रिताः[3] सर्वधर्माः।

सु० आह। रूपमायु० शा० प्रकृतिशून्यं तं नाध्यात्मनिश्रितं न बहिर्धानिश्रितं नोभयमन्तरेणोपलभ्यते। वे०। विज्ञानमायु० शा० प्रकृतिशून्यं तं नाध्यात्मनिश्रितं न बहिर्धानिश्रितं नोभयमन्तरेणोपलभ्यते। And so on with the धातुs; पारमिताs; शून्यताs; स्मृत्युपस्थानानि yāvat बुद्धधर्माः। अनेनायु० शा० पर्यायेण सर्वधर्मा अनिश्रिताः प्रकृतिशून्यतामुपादाय। एवं हि आयु० शा० बो० महासत्त्वेन षट्सु पारमितासु चरतो रूपं परिशोधयितव्यम्। वे०। विज्ञानं परिशोधयितव्यम्। एवं व्यस्तसमस्ताः स्कन्धधातवः etc, as in p. 257. l. 27- p. 258, l. 2 up to बुद्धधर्माः परिशोधयितव्याः। यावत् सर्वाकारज्ञता परिशोधयितव्या॥ इति सर्वाकारज्ञतानिर्याणम्॥

शा० आह। कथमायु० सु० बो० महासत्त्वः षट्सु पारमितासु चरन् बोधिसत्त्वमार्गं[4] परिशोधयति।

सु० आह। अस्ति आयु० शा० दानपारमिता लौकिकी अस्ति लोकोत्तरा। एवं शीलपा० yāvat अस्ति प्रज्ञापा० लौकिकी अस्ति लोकोत्तरा।

शा० आह। कतमा आयु० सु० दानपा० लौकिकी कतमा लोकोत्तरा।

सु० आह। लौकिकी आयु० शा० दानपा० इह बो० महासत्त्वो दायको भवति दानपतिः। [5]श्रमणब्राह्मणकृपणवनीपकाध्वगेभ्यो याचनकेभ्यो[6] दाता भवति। अन्नार्थिकेभ्योऽन्नं ददाति। पानयानवसनगन्धमाल्यविलेपनपुष्पधूपचूर्णवासो-

---

1 A & C, तव

2 $C_1$ & $C_2$ निःश्रितत्वात्; A निसृतत्वात्

3 $C_2$ अनिःश्रि० throughout

4 A बोधिमार्गः; $C_1$ बोधिसत्त्व बोधिमार्गः

5 $C_2$ स्रपण०

6 $C_2$ याचकेभ्यो

पाश्रय[1]प्रतिश्रयजीवितपरिष्कारोपकरणशयनासनभैषज्यार्थिकेभ्योऽन्नपान yāvat प्रतिश्रयान्यतरान्यतरजीवितपरिष्कारोपकरणभेषज्यदाता भवति। पुत्रार्थिकेभ्यः पुत्रं ददाति। [2]दुहित्रर्थिकेभ्यो दुहितरं ददाति। भार्यार्थिकेभ्यो भार्यां ददाति। [3]राष्ट्रार्थिकेभ्यो राज्यानि ददाति। शिरोर्थिकेभ्यः[4]शिरो ददाति। अङ्गार्थिकेभ्योऽङ्गानि ददाति। मांसशोणितमज्जार्थिकेभ्यो मांसशोणितमज्जानो ददाति। तच्च सन्निश्रितं परित्यजति। तस्यैवं भवति अहं ददामि एष परिगृह्णीते इदं दानमहं निर्मत्सरः सर्वस्वं परित्यजामि। अहं बुद्धाज्ञां करोमि। अहं दानपारमितायां चरामि। अहमेतद्दानं सर्वसत्त्वसाधारणं कृत्वा अनुत्तरायै सम्यक्संबोधये परिणामयामि [5]तच्चानुपलम्भयोगेन। अनेन च दानेन दानफलेन च सर्वसत्त्वा दृष्ट एव धर्मे सुखिता भवन्तु अनुपादाय परिनिर्वान्तु। स त्रिभिः सङ्गैः सक्तो दानं ददाति। कतमैस्त्रिभि र्यदुत आत्मसंज्ञया परसंज्ञया दानसंज्ञया च एभिस्त्रिभिः सङ्गैः सक्तो दानं ददाति॥ इयमुच्यते लौकिकी दानपारमितेति॥

तथाहि आयु० शा० [6]लोकतो न ..चलति[7] [8]नोच्चलति न संक्रामति। तेनोच्यते लौकिकी दानपारमिता इति।

तत्र कतमा लोकोत्तरा दानपारमिता यदुत त्रिमण्डलपरिशुद्धिः। तत्र कतमा त्रिमण्डलपरिशुद्धिः। इह बो० महासत्त्वो दानं ददत् नात्मानमुपलभते प्रतिग्राहकं नो०[9]। दानञ्च नो०। तद्विपाकञ्च नो०। इयमायु० शा० बो० महासत्त्वस्य त्रिमण्डलपरिशुद्धिः। पुनरपरमायु० शा० बो० महासत्त्वो दानं ददत्[10] न सर्वसत्त्वेभ्यस्तद्दानं निर्यातयति। सत्त्वांश्च नो०। आत्मानं च नो०। तच्च दानमनुत्तरायै सम्यक्संबोधये परिणामयति। न च[11]बोधिमुपलभते॥ इयमुच्यते लोकोत्तरा दानपारमितेति॥

---

1 $C_1$ omits ०प्रतिश्रय०
2 $C_2$ दुहितार्थि
3 $C_2$ राज्यार्थि०
4 $C_1$ omits this item; A श्रियार्थिकेभ्यः शिरो
5 A तच्चानु०
6 $C_2$ लोकातो
7 Mss. चरति
8 $C_1$ नाच्चलति
9 नो० = नोपलभते
10 A ददन् सर्वं; $C_1$ & $C_2$ omit न
11 $C_2$ बोधिरुप०

केन कारणेनोच्यते लोकोत्तरा दानपारमितेति। तथा ह्यायु० शा० लोकाच्चलति उच्चलति संक्रामति। तेन कारणेनोच्यते लोकोत्तरा दानपारमितेति। एवं शीलपा० क्षान्तिपा० वीर्यपा० ध्यानपा०।

शा० आह। कतमा आयु० सु० प्रज्ञापा० लौकिकी। कतमा लोकोत्तरा।

सु० आह। लौकिकी आयु० शा० प्रज्ञापारमिता। इह बो० महासत्त्वो दानं ददाति उपलम्भनिश्रितो मात्सर्यचित्तं मया निग्रहीतव्यमिति। तच्चात्मसत्त्वदानसंज्ञानिश्रितः सर्वस्वं[1] परित्यजति बाह्यं वा आध्यात्मिकं वा वस्तु उपात्तं वा अनुपात्तं वा नास्ति किञ्चिद् यत् न परित्यजति। तच्च कुशलमूलं बोधये परिणामयति सर्वसत्त्वसाधारणं कृत्वा उपलम्भनिश्रितः। स शीलं सेवते धूतगुणप्रतिष्ठितः। कायवाक्चित्तोपलम्भनिश्रितस्तांश्च दशकुशलान् कर्मपथान् सेवमानः आत्मदृष्ट्यां सत्त्वदृष्ट्यां कुशलदृष्ट्यां निश्रितः[2] बोधिमुपलभ्य सर्वसत्त्वसाधारणानि शीलानि बोधये परिणामयति तच्चोपलम्भेन। आत्मानमुत्कर्षयति परान् पंसयति स सर्वसत्त्वानां दुष्कृतानि क्षमते[3]। आत्मसत्त्वक्षान्तिदृष्टिनिश्रितस्तच्च कुशलमनुत्तरायै सम्यक्संबोधये परिणामयति सर्वसत्त्वसाधारणं कृत्वा उपलम्भयोगेन। स वीर्यमारभते कायमुपलम्भमानः[4] चित्तमुप०[5] पुण्यसम्भारमुप० ज्ञानसम्भारमुप० आत्मानमुप० बोधिमुप० तेन च वीर्यारम्भेन मन्यते। तच्च सर्वसत्त्वसाधारणं कृत्वा उपलम्भयोगेनानुत्तरायै सम्यक्संबोधये परिणामयति। स मैत्रीकरुणामुदितोपेक्षां भावयति ध्यानसमापत्तीः समापद्यते व्युत्तिष्ठते च ता आस्वादयति। ता आस्वादयन् मन्यते। सर्वसत्त्वसाधारणानि च कुशलमूलानि उपलम्भदृष्टिको बोधये परिणामयति॥ इयमुच्यते लौकिकी प्रज्ञापारमिता॥

स शून्यतां भावयन् रूपं शून्यमिति उपलभते। वे०। विज्ञानं शून्यमिति उपलभते। यावद् बुद्धबोधिं चोपलभते उपलम्भयोगेन। तानि कुशलमूलानि सर्वसत्त्वसाधारणानि कृत्वा अनुत्तरायै सम्यक्संबोधये परिणामयति। तं

---

1 $C_2$ सर्वस्तं　　2 $C_1$ निःश्रि०　　3 A दृष्टानिचते

4 $C_1$ ०लाभ०　　5 उप० = उपलम्भमानः

चोपलम्भयोगेन। सर्वपापं प्रतिदेशयत्युपलम्भयोगेन आत्मनश्च परेषां च पुण्यमनुमोदते। आत्मनश्च परस्य चार्थाय उपलभमानः सर्वबुद्धानध्येषयते[1]। अनुपायेन त्रिःकृत्वः पुण्यं सर्वज्ञतायै परिणामयति सर्वसत्त्वसाधारणं कृत्वा॥ इयमुच्यते लौकिकी प्रज्ञापारमिता॥

तत्र कतमा लोकोत्तरा प्रज्ञापारमिता। आत्मसत्त्वदेयबोध्यनुपलब्ध्या त्रिमण्डलपरिशुद्धया दानपारमितां परिशोधयति। बोधाय आत्मसत्त्वशील-बोध्यनु०[2] शीलपारमितां परि०[3]। बोधाय आत्मसत्त्वक्षमाबोध्यनु० क्षान्ति-पारमितां परि०। बोधाय चात्मकायचित्तवीर्यपुण्यज्ञानबोध्यनु० वीर्यपार-मितां परि०। बोधाय आत्मसत्त्वध्यानसमाधिसमापत्तिबोध्यनु० ध्यान-पारमितां परि०। बोधाय आत्मसत्त्वसर्वधर्मानु० प्रज्ञापारमितां परि०। बोधाय सर्वकुशलमूलानि चानुत्तरायै सम्यक्संबोधये परिणामयति निर्विशेष-परिणामेनानुत्तरपपरिणामेन असमसमप०[4] अचिन्त्यातुल्यप० अप्रमेयप०॥ इयमुच्यते लोकोत्तरा प्रज्ञापारमिता॥

केन कारणेन लौकिकी। लोको याभिर्भवति। लोकं वा याभिर्निवर्तयति। लोकेन वा याः समाः। लोकाय वा याभिर्दीयते। लोकात् वा याभिर्निःसरति। लोकस्य वा या भवाय[5]। लोके वा भवा यास्ता[6] लौकिक्यः।

तत्र कतमा लोकोत्तरा। लोको याभिरुत्तारयति। लोकं याभिरुत्तारयति। लोकेन वा याभिरुत्तार्यते। आलोकाय[7] वा या[8] भवति। लोकात् वा याभिर्निः-सरति। लोकस्य वा[9] या उत्तरणाय। लोके वा या उत्तरास्ता लोकोत्तरा इति।

एवं ह्यायु० शा० बो० महासत्त्वः षट्सु पारमितासु चरन् बोधिमार्गं परिशोधयति।

शा० आह। कतम आयु० सु० बो० महासत्त्वस्य बोधिमार्गः।

---

1 A & $C_1$ ०ध्येयते

2 नु० = नुपलब्ध्या त्रिमण्डलपरिशुद्ध्या

3 परि० = परिशोधयति

4 प० = परिणामेन

5 A drops भवा

6 $C_1$ ०स्ते

7 $C_1$ ०रुत्तीर्यते आलो० ; A रुत्तार्यतेभ्योलोकात्

8 $C_1$ या या

9 A adds यास्य वा

सु० आह। चत्वार्यायु० शा० स्मृत्युपस्थानानि बो० महासत्त्वस्य बोधिमार्गः। चत्वारि सम्यक्प्रहाणानि चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि पञ्चबलानि बोध्यङ्गानि आर्याष्टाङ्गो मार्गः शून्यतावि०[1] अनिमित्तवि० अप्रणिहितवि० अध्यात्मशू०[2] बहिर्धाशू० अध्यात्मबहिर्धाशू० यावदभावस्वभावशू० सर्वसमाधयः सर्वधारणीमुखानि चत्वार्यप्रमाणानि चत्वारि ध्यानानि चतस्र आरूप्यसमापत्तयो दश तथागतबलानि चत्वारि वैशारद्यानि चतस्रः प्रतिसंविदोऽष्टादशावेणिका बुद्धधर्मा महाकरुणा—अयमुच्यते आयु० शा० बो० महासत्त्वस्य बोधिमार्गः।

शा० आह। कतमस्या आयु० पारमिताया अयं पुरुषकारः।

सु० आह। प्रज्ञापारमिताया आयु० शा० अयं पुरुषकारः। तत् कस्य हेतोः। तथा ह्यायु० शा० प्रज्ञापारमिता जनयित्री सर्वेषां कुशलानां धर्माणां श्रावकप्रत्येकबुद्धध०[3] बोधिसत्त्वध० बुद्धध०। प्रज्ञापारमिता आयु० शा० प्रतिग्राहिका सर्वेषां कुशलानां ध० श्रावकप्रत्येकबुद्धध० बोधिसत्त्वध०। प्रज्ञापारमितायामायु० शा० शिक्षित्वा तैः पौर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा। अनागता अप्यायु० शा० तथागता अर्हन्तः सम्यक्संबुद्धा इहैव प्रज्ञापारमितायां शिक्षित्वानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। येऽप्येतर्हि आयु० शा० दशसु दिक्षु लोके तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मं देशयन्ति तेऽपि सर्वे इहैव प्रज्ञापारमितायां शिक्षित्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः।

स चेत् पुनरायु० शा० अस्यां प्रज्ञापारमितायां भाष्यमाणायां बो० महासत्त्वस्य न भवति काङ्क्षायितत्वं[4] न भवति धन्वायितत्वं वेदितव्यमेतदायु० शा० विहरत्ययं बो० महासत्त्वोऽनेन विहारेणाविरहितश्चानेन मनसिकारेण यदुत सर्वसत्त्वपरित्राणाय सर्वसत्त्वापरित्यागमनसिकारेण महाकरुणामनसिकारेण।

शा० आह। यदायु० सु० एवमाह। विहरत्ययं बो० महासत्त्वोऽनेन विहारेणाविरहितश्चानेन मनसिकारेणेति। एवं सत्यायु० सु० सर्वसत्त्वा अपि

1 वि० = विमोक्षमुखम्    2 शू० = शून्यता

3 ध० = धर्मानां    4 A कांक्षियितत्वं ; $C_1$ कांक्षित्वं

बोधिसत्त्वा भविष्यन्ति। तत् कस्य हेतोः। तथाह्यायु० सु० सर्वसत्त्वा अविरहिता [1]मनसिकारेण।

सु० आह। साधु साधु आयु० शा० उपालप्स्ये त्वां अर्थ एवायुष्मता शारिपुत्रेण भूतपदाभिधानेन परिगृहीतः। तत् कस्य हेतोः। सत्त्वासत्तयायु० शा० मनसिकारासत्ता वेदितव्या। सत्त्वशून्यतया मनसिकारशून्यता वे०[2]। सत्त्वास्वभावतया मनसिकारास्वभावता वे०। सत्त्वविविक्ततया मनसिकारविविक्तता वे०। सत्त्वानभिसंबोधनतया मनसिकारानभिसंबोधनता वे०। रूपासत्तया रूपशून्यतया रूपास्वभावतया रूपविविक्ततया रूपानभिसंबोधनतया मनसिकारानभिसंबोधनता वे०। वेदनासंज्ञासंस्काराः। विज्ञानासत्तया etc. as before ll. 6-7 वे०। एवं व्यस्तसमस्तेषु स्कन्ध yāvat (see p. 257) बुद्धधर्मेषु सर्वाकारज्ञतासत्तया सर्वाकारज्ञताशून्यतया etc. as before ll. 6-7. वे०। अनेनायु० शा० विहारेणानेन च मनसिकारेण अविरहितो बोधिसत्त्वो महासत्त्व इति।

अथ खलु भगवानायुष्मते सुभूतये साधुकारमदात्। साधु साधु सुभूते। एवं हि सुभूते बो० महासत्त्वानां प्रज्ञापारमितोपदेष्टव्या यथा त्वमुपदिशसि यथापि नाम तथागतानुभावेनैवं बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायां चरितव्यं यथा त्वमुपदिशसि।

अस्मिन् खलु पुनः प्रज्ञापारमितापरिवर्ते आयुष्मता सुभूतिना भाष्यमाणे त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं प्रकम्पितो यावत् पूर्वोत्तरदक्षिणपश्चिमायां विदिश्युन्नामावनामं[3] गच्छति स्म।

अथ खलु भगवांस्तस्यां वेलायां स्मितमकरोत्। अथ खल्वायु० सु० भगवन्तमेतदवोचत्। को भगवन् हेतुः कः प्रत्ययः स्मितस्य प्रादुर्भावाय। भगवानाह। यथैव सुभूते इह लोकधातौ तथागतः प्रज्ञापारमितां निर्दिशति तथैव पूर्वस्यां दिश्यसंख्येयेष्वप्रमेयेषु लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितां भाषन्ते। एवं समन्ताद्दशसु दिक्ष्वसंख्येयेष्वप्रमेयेषु etc. as before l. 23 up

---

1 A ०रहितो०

2 वे० = वेदितव्या

3 $C_1$ ०नामद

to निर्दिशन्ति। अस्मिन् खलु पुनः सुभूतिना प्रज्ञापारमितानिर्देशे निर्दिश्यमाने द्वादशानामयुतानां देवमानुषिकायाः प्रजाया अनुत्पत्तिकधर्मक्षान्तिप्रतिलम्भोऽभूत्। तेषामपि बुद्धानां भगवतां समन्ताद्दशसु दिक्षु लोकधातुषु इमां प्रज्ञापारमितां बोधिसत्त्वानां महासत्त्वानां भाषमाणानामसंख्येयानामपरिमाणानां सत्त्वानामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि॥ इति मार्गनिर्याणमित्युक्ता निर्याणप्रतिपत्तिरियुक्ता सर्वाकारज्ञता॥

आर्यपञ्चविंशतिसाहस्रिकायां बोधिसत्त्वधर्माणां भगवत्यां प्रज्ञापारमितायामभिसमयालङ्कारानुसारेण संशोधितायां सर्वाकारज्ञताधिकारः सुभूतिपरिवर्तः प्रथमः॥